माणिकचन्द्र-दि०-जैनग्रन्थमालायारेत्रिंशतितमो ग्रन्थः ।

# श्रीमद्रविषेणाचार्यकृतं पद्मचरितम् ।

( तृतीयखण्ड । )

न्यायतीर्थपण्डितदरबारीलालेन साहित्यरत्नेन संशोधितम् ।


प्रकाशिका—माणिकचन्द्र-दिगम्बर-जैनग्रन्थमाला-समितिः ।

चैत्र वीर नि० सं० २४५५, वि० सं० १९८५

मूल्यं रूप्यकद्वयम् ।

# तृतीयखण्डस्य पर्वसूची ।




| | | |
|---|---|---|
| षटषष्टितम पर्व—रावणदूतागमाभिधान | पृष्ठ | १ |
| सप्तषष्टितम पर्व—शान्तिगृहकीर्तन | ,, | ६ |
| अष्टषष्टितम पर्व—फाल्गुनाष्टाह्निकामहिमाविधान | ,, | १२ |
| एकोनसप्ततितम पर्व—लोकनियमकरणाभिधान | , | १४ |
| सप्ततितम पर्व—सम्यग्दृष्टिदेवप्रातिहार्यकीर्तन | ,, | १६ |
| एकसप्ततितम पर्व—बहुरूपविद्यासन्निधानाभिधान | ,, | २५ |
| द्वासप्ततितम पर्व—युद्धनिश्चयकीर्त्तनाभिधान | ,, | ३२ |
| त्रिसप्ततितम पर्व—उद्योगाभिधान | , | ४० |
| चतुःसप्ततितम पर्व—रामलक्ष्मणयुद्धवर्णनाभिधान | ,, | ५५ |
| पञ्चसप्ततितमं पर्व—चक्ररत्नोत्पत्तिवर्णन | ,, | ६४ |
| षट्सप्ततितम पर्व—दशग्रीववधाभिधान | ,, | ६९ |
| सप्तसप्ततितम पर्व—प्रीतिंकरोपाख्यान | ,, | ७३ |

| | | | |
|---|---|---|---|
| अष्टसप्ततितम पर्व—इन्द्रजितादिनिष्क्रमणाभिधान | ... | ,, | ७९ |
| एकोनाशीतितम पर्व—सीतासमागमाभिधान | | ,, | ९३ |
| अशीतितम पर्व—मयोपाख्यान | | ,, | ९९ |
| एकाशीतितम पर्व—साकेतनगरीवर्णन | | , | ११५ |
| द्व्यशीतितम पर्व—रामलक्ष्मणसमागमाभिधान | | ,, | १२५ |
| त्र्यशीतितम पर्व—त्रिभुवनालकारशमाभिधान | | , | १३१ |
| पञ्चाशीतितम पर्व—भरतात्रिभुवनालकारसमाध्यनुभवानुकीतन | | ,, | १४५ |
| षडशीतितम पर्व—भरतकैकयानिष्क्रमणाभिधान | | ,, | १५९ |
| सप्ताशीतितम पर्व—भरतनिर्वाणगमन | | ,, | १६१ |
| अष्टाशीतितम पर्व राज्याभिषेकाभिधान विभागदर्शनम् | | ,, | १६३ |
| नवाशीतितम पर्व—मधुसुन्दरवधाभिधान | | ,, | १६७ |
| नवतितम पर्व—मथुरोपसर्गाभिधान | | ,, | १७७ |
| एकनवतितम पर्व—शत्रुघ्नभवानुकीर्तन | | ,, | १७९ |
| द्विनवतितम पर्व—मथुरापुरीनिवेशक्षिदानगुणोपसर्गहननाभिधान | | ,, | १८४ |
| त्रिनवतितम पर्व—मनोरमालभाभिधान | | ,, | १९१ |

| | | | | |
|---|---|---|---|---|
| चतुर्णवतितमं पर्व—रामलक्ष्मणविभूतिदर्शनीयाभिधानं | ... | ... | ,, | १९६ |
| पञ्चनवतितमं पर्व—जिनेन्द्रपूजादोहदाभिधानं | ... | ... | ,, | २०० |
| षण्णवतितमं पर्व—जनपरीवादचिंताभिधानं | ... | ... | ,, | २०५ |
| सप्तनवतितमं पर्व—सीतानिर्वासनविप्रलापवज्रजंघाभिधानं | | ... | ,, | २११ |
| अष्टनवतितमं पर्व—सीतासमाश्वासनं ... | ... | ... | ,, | २२७ |
| नवनवतितमं पर्व—रामशोकाभिधानं ... | ... | ... | ,, | २३५ |
| शतं पर्व—लवणांकुशोद्भवाभिधानं ... | ... | ... | ,, | २४५ |
| एकाधिकशतं पर्व—लवणांकुशदिग्विजयकीर्तनं | ... | ... | ,, | २५२ |
| द्व्युत्तरशतं पर्व—लवणांकुशसमेतयुद्धाभिधानं | ... | ... | ,, | २६० |
| त्र्युत्तरशतं पर्व—रामलवणांकुशसमागमाभिधानं | ... | ... | ,, | २७६ |
| चतुरुत्तरशतं पर्व—सकलभूषणदेवागमनाभिधानं | ... | ... | ,, | २८५ |
| पञ्चोत्तरशतं पर्व—रामधर्मश्रवणाभिधानं ... | ... | ... | ,, | २९४ |
| षडुत्तरशतं पर्व—सपरिवारवामदेवपूर्वभवाभिधानं | ... | ... | ,, | ३१५ |
| सप्तोत्तरशतं पर्व—प्रव्रजितसीताभिधानं ... | ... | ... | ,, | ३३५ |
| अष्टोत्तरशतं पर्व—लवणांकुशपूर्वभवाभिधानं | ... | ... | ,, | ३४१ |

नवोत्तरशतं पर्व—मधूपाख्यानं ... ... ... ,, ३४५
दशोत्तरशतं पर्व—कुमाराष्टकनिष्क्रमणाभिधानं ... ... ,, ३५९
एकादशोत्तरशतं पर्व—प्रभामंडलपरलोकाभिगमनं ... ... ,, ३६७
द्वादशोत्तरशतं पर्व—हनुमन्निर्वेदं ... ... ... ,, ३६९
त्रयोदशोत्तरशतं पर्व—हनुमन्निर्वाणाभिधानं ... ... ,, ३७७
चतुर्दशोत्तरशतं पर्व—शक्रसुरसंकथाभिधानं... ... ... ,, ३८१
पंचदशोत्तरशतं पर्व—लवणाङ्कुशतपोभिधानं ... ... ,, ३८६
षोडशोत्तरशतं पर्व—रामदेवविप्रलापं ... ... ... ,, ३९२
सप्तदशोत्तरशत पर्व—लक्ष्मणवियोगविभीषणसंसारस्थितिवर्णनम् ... ,, ३९५
अष्टादशोत्तरशतं पर्व—लक्ष्मणसंस्कारकरणं कल्याणमित्रदेवाभिगमाभिधानं ,, ३९९
एकोनविंशोत्तरशतं पर्व—बलदेवनिष्क्रमणाभिधानं ... ... ,, ४१०
विंशोत्तरशतं पर्व—पुरसंक्षोभाभिधानं ... ... ... ,, ४१५
एकविंशोत्तरशतं पर्व—दानप्रसंगाभिधानं ... ... ... ,, ४१९
द्वाविंशोत्तरशतं पर्व—केवलोत्पत्त्यभिधानं ... ... ... ,, ४२२
त्रयोविंशोत्तरशतं पर्व—बलदेवसिद्धिगमनाभिधानं ... ... ,, ४२८

# अथ षट्षष्टितमं पर्व ।

अथ लक्ष्मीधरस्वांतं विशल्याचरितोचितम् । चारेभ्यो रावणः श्रुत्वा जज्ञे विस्मयमत्सरी ॥ १ ॥
जगाद च स्मितं कृत्वा को दोष इति मंदगीः । ततोऽभादि मृगांकाद्यैर्मंत्रिभिर्मंत्रकोविदैः ॥२॥
यथार्थं भाष्यसे देव ! सुपथ्यं कुप्य तुष्य वा । परमार्थो हि निर्भीकैरुपदेशोऽनुजीविभिः ॥ ३ ॥
सैंहगारुडविद्ये तु रामलक्ष्मणयोस्त्वया । दृष्टे यत्नाद्विना लब्धे पुण्यकर्मानुभावतः ॥ ४ ॥
बंधनं कुंभकर्णस्य दृष्टमात्मजयोस्तथा । शक्तेरनर्थकत्वं च दिव्यायाः परमौजसः ॥ ५ ॥
संभाव्य संभवं शत्रुस्त्वया जीयेत यद्यपि । तथापि भ्रातृपुत्राणां विनाशस्तव निश्चितः ॥ ६ ॥
इति ज्ञात्वा प्रसादं नः कुरु नाथाभियाचितः । अस्मदीयं हितं वाक्यं मग्नं पूर्वं न जातुचित् ७
त्यज सीतां भजात्मीयां धर्मबुद्धिं पुरातनीम् । कुशली जायतां लोकः सकलः पालितस्त्वया ८
राघवेण समं संधिं कुरु सुंदरभाषितम् । एवं कृते न दोषोऽस्ति दृश्यते तु महागुणः ॥ ९ ॥
भवता परिपाल्यंते मर्यादाः सर्वविष्टपे । धर्माणां प्रभवस्त्वं हि रत्नानामिव सागरः ॥ १० ॥
इत्युक्त्वा प्रणता वृद्धाः शिरःस्थकरकुड्मलाः । उत्थाप्य संभ्रमाच्चैतांस्तथेत्यूचे दशाननः ॥११॥

मंत्रविद्भिस्ततस्तुष्टैः संदिष्टोऽत्यंतशोभनः । द्रुतं गमीकृतो दूतः सामंतो नयकोविदः ॥ १२ ॥
तं निमेषेंगिताकूतपरिबोधविचक्षणम् । रावणः संज्ञया स्वस्मै रुचितं द्रागजिग्रहत् ॥ १३ ॥
दूतस्य मंत्रिसंदिष्टं नितांतमपि सुन्दरम् । महौषधं विषेणेव रावणार्थेन दूषितम् ॥ १४ ॥
अथ शुक्रसमो बुद्ध्या महौजस्कः प्रतापवान् । कृतवाक्यो नृपैर्भूयः श्रुतिपेशलभाषणः ॥ १५ ॥
प्रणम्य स्वामिनं तुष्टः सामंतो गंतुमुद्यतः । बुद्ध्यावष्टंभतः पश्यन् लोकं गोष्पदसंमितम् ॥१६॥
गच्छतोऽस्य बलं भीमं नानाशस्त्रसमुज्ज्वलम् । बुद्ध्येव निर्मितं तस्य बभूव भयवर्जितम् ॥१७॥
तस्य तूर्यरवं श्रुत्वा क्षुब्धा वानरसैनिकाः । खमीक्षांचक्रिरे भीता रावणागमशंकिनः ॥ १८ ॥
तस्मिन्नामन्नतां प्राप्ते पुरुषांतरवेदिते । विश्रब्धतां पुनर्भेजे बलं प्लवगलक्षणम् ॥ १९ ॥
दूतः प्राप्तो विदेहाजः प्रतीहारनिवेदितः । आप्तैः कतिपयैः सार्कं बाह्यावासितसैनिकः ॥ २० ॥
दृष्ट्वा पद्मं प्रणम्यासौ कृतदूतोचितक्रियः । जगौ क्षणमिव स्थित्वा वचनं क्रमसंगतम् ॥ २१ ॥
पद्म ! मद्वचनैः स्वामी भवन्तमिति भाषते । श्रोत्रावधानदानेन प्रयत्नः क्रियतां क्षणम् ॥२२॥
यथा किल न युद्धेन किंचिदत्र प्रयोजनम् । बहवो हि क्षयं प्राप्ता नरा युद्धाभिमानिनः ॥२३॥
प्रीत्यैव शोभनम् सिद्धिर्युद्धतस्तु जनक्षयः । असिद्धिश्च महान् दोषः सापवादाश्च सिद्धयः ॥२४॥

दुर्वृत्तो नरकः शंखो धवलांगोऽसुरस्तथा । निधानं शंबराद्याश्च संग्रामश्रद्धया गताः ॥ २५ ॥
प्रीतिरेव मया सार्द्धं भवते नितरां हिता । ननु सिंहो गुहां प्राप्य महाद्रेर्जायते सुखी ॥ २६ ॥
महेन्द्रदमनो येन ममरेऽमरभीषणः । सुंदरीजनसामान्यं बंदीगृहमुपाहृतः ॥ २७ ॥
पाताले भूतले व्योम्नि गतिर्यस्येच्छया कृता । सुरासुरैरपि क्रुद्धैः प्रतिहंतुं न शक्यते ॥ २८ ॥
नानानैकमहायुद्धवीरलक्ष्मी स्वयंग्रही । सोऽहं दशाननो जातु भवता किं तु न श्रुतः ॥ २९ ॥
सागरांतां महीमेतां विद्याधरसमन्विताम् । लंकां भागद्वयोपेतां राजन्नेष ददामि ते ॥ ३० ॥
अद्य मे सोदरं प्रेक्ष्य तनयौ च सुमानसः । अनुमन्यस्य सीतां च ततः क्षेमं भविष्यति ॥ ३१ ॥
न चेदं करोषि त्वं ततस्ते कुशलं कुतः । एतांश्च समरे बद्धानानेष्यामि बलादहम् ॥ ३२ ॥
पद्मनाभस्ततोऽवोचन्न मे राज्येन कारणम् । न चान्यप्रमदाजेन भोगेन महताऽपि हि ॥ ३३ ॥
एषः प्रेष्यामि ते पुत्रौ भ्रातरं च दशानन । संप्राप्य परमां पूजां सीतां प्रेष्यसि मे यदि ॥३४॥
एतया सहितोऽरण्ये मृगसामान्यगोचरे । यथासुखं भ्रमिष्यामि महीं त्वं भुङ्क्ष्व पुष्कलाम् ३५
गत्वैवं ब्रूहि दूत त्वं तं लंकापरमेश्वरम् । एतदेव हि पथ्यं ते कर्तव्यं नान्यथाविधम् ॥ ३६ ॥
सर्वैः प्रपूजितं श्रुत्वा पद्मनाभस्य तद्वचः । सौष्ठवेन समायुक्तं सामंतो वचनं जगौ ॥ ३७ ॥

न वेत्मि नृपतेः कार्यं बहुकल्याणकारणम् । यदुल्लंघ्यांबुधिं भीममागतोऽसि भयोज्झितः ॥३८॥
न शोभना नितांतं ते प्रत्याशा जानकीं प्रति । लंकेन्द्रसंगते कोपं त्यजाऽऽशामपि जीविते ॥३९॥
नरेण सर्वथा स्वस्य कर्त्तव्यं बुद्धिशालिना । रक्षणं सततं यत्नाद्दारैरपि धनैरपि ॥ ४० ॥
प्रेषितं तार्क्ष्यनाथेन यदि वाहनयुग्मकम् । यदि वा छिद्रतो बद्धा मम पुत्रसहोदराः ॥ ४१ ॥
तथाऽपि नाम कोऽमुष्मिन् गर्वस्तव समुद्यतः । नैतावता कृतित्वं ते मयि जीवति जायते॥४२॥
विग्रहं कुर्वतो यत्नं न ते सीता न जीवितम् । मा भूरुभयतो भ्रष्टस्त्यज सीतानुबंधिताम् ॥४३॥
लब्धवर्णाः समस्तेषु शास्त्रेषु परमेश्वराः । सुरेन्द्रप्रतिमा नीताः खेचरा निधनं मया ॥ ४४ ॥
पश्याष्टापदकूटाभानिमान् कैकसमंचयान् । उपेयुषां क्षयं राज्ञां मदीयभुजवीर्यतः ॥ ४५ ॥
इति प्रभाषिते दूते क्रोधतो जनकात्मजः । जगाद विस्फुरद्वक्रज्योतिर्ज्वलितपुष्करः ॥ ४६ ॥
आः पाप दूत गोमायो ! वाक्यसंस्कारकूटकः । दुर्बुद्धे भाषसे व्यर्थं किमित्येवमशंकितः ॥४७॥
सीतां प्रति कथा केयं पद्माधिक्षेपमेत्र वा । को नाम रावणो रक्षः पशुः कुत्सितचेष्टितः ॥ ४८ ॥
इत्युक्त्वा सायकं यावज्जग्राह जनकात्मजः । केकयीसूनुना तावन्निरुद्धो नयचक्षुषा ॥ ४९ ॥
रक्तोत्पलदलच्छाये नेत्रे जनकजन्मनः । कोपेन दूषिते जाते संध्याकारानुहारिणी ॥ ५० ॥

स्वैरं स मंत्रिभिर्नीतः ममं साधूपदेशतः । मंत्रेणेव महासर्पः स्फुरद्विषकणद्युतिः ॥ ५१ ॥
नरेंद्र ! त्यज संरंभं समुद्गतमगोचरे । अनेन महितेनापि कोऽर्थे प्रेषणकारिणा ॥ ५२ ॥
प्रावृषेण्यघनाकारगजमर्दनपंडितः । नासौ संक्षोभमायाति सिंहः प्रचलकमरः ॥ ५२ ॥
प्रतिशब्देषु कः कोपः छायापुरुषकेऽपि वा । तिर्यक्षु वा शुकाद्येषु यंत्रबिंबेषु वा सताम् ॥५४॥
लक्ष्मणेनैवमुक्तोऽसौ शांतोऽभूज्जनकात्मजः । अभ्यधाच्च पुनर्दूतः पद्मं साध्वसवर्जितः ॥ ५५ ॥
सचिवापसदैर्भूयः संप्रमूढैस्त्वमीदृशैः । संयोज्यसे दुरुद्योगैः संशये दुर्विदग्धकैः ॥ ५६ ॥
प्रतीर्यमाणमात्मानं प्रबुद्धयस्व त्वमेतकैः । निरूपय हित स्वस्य स्वयं बुद्धया प्रवीणया ॥५७॥
त्यज सीतासमासंगं भवेन्द्रः सवविष्टपे । भ्रम पुष्पकमारूढो यथेष्टं विभवान्वितः ॥ ५८ ॥
मिथ्याग्रहं विमुंचस्व मा श्रौषीः क्षुद्रभाषितम् । करणीये मनो दत्स्व भ्रशमेधि महासुखम् ॥५९॥
क्षुद्रस्योत्तरमेतस्य को ददातीति जानके । तूष्णीं स्थितेऽथ दूतोऽसावन्यैर्निर्भर्त्सितः परम् ॥६०॥
स विद्धो वाक्शरैस्तीक्ष्णैरसत्कारमलं श्रितः । जगाम स्वामिनः पार्श्वे मनस्यत्यंतपीडितः ॥६१॥
स उवाच तवाऽऽदेशान्नाथ रामो मयोदितः । क्रमेण नय विन्यासकारिणा त्वत्प्रभावतः ॥६२॥
नानाजनपदाकीर्णामाकूपारनिवारिताम् । बहुरत्नाकरां क्षीणां विद्याभृत्पतनान्विताम् ॥ ६३ ॥

ददामि ते महानागांस्तुरगांश्च रथांस्तथा । कामगं पुष्पकं यानमप्रधृष्यं सुरैरपि ॥ ६४ ॥
सहस्रत्रितयं चारुकन्यानां परिवर्गवत् । सिंहासनं रविच्छायं छत्रं च शशिसंनिभम् ॥ ६५ ॥
भज निष्कंटकं राज्यं सीता यदि तवाऽऽज्ञया । मां वृणोति किमन्येन भाषितेनेह भूरिणा ॥६६॥
वयं वेत्रासनेनैव संतुष्टाः स्वल्पवृत्तयः । भविष्यामो मदुक्तं चेत्करोषि सुविचक्षण ॥ ६७ ॥
एवमादीनि वाक्यानि प्रोक्तोऽपि स मया मुहुः । सीताग्राहं न तन्निष्ठो मुंचते रघुनंदनः ॥६८॥
साधोरिवातिशांतस्य चर्या सा तस्य भाषिता । अशक्यमोचना दानात् त्रैलोक्यस्यापि सुन्दरी ॥
ब्रवीत्येवं च रामस्त्वां यथा तव दशानन । न युक्तमीदृशं वक्तुं सर्वलोकविगर्हितम् ॥ ७० ॥
तवैवं भाषमाणस्य नृणामधमजन्मनः । रसनं न कथं यातं शतधा पापचेतसः ॥ ७१ ॥
अपि देवेंद्रभोगैर्मे न कृत्यं सीतया विना । भुंक्ष्व त्वं पृथिवीं सर्वामाश्रयिस्याम्यहं वनम् ॥७२॥
परांगनां समुद्दिश्य यदि त्वं मर्तुमुद्यतः । अहं पुनः कथं स्वस्याःप्रियाया न कृते तथा ॥७३॥
सर्वलोकगताः कन्यास्त्वमेव भज सुन्दर । फलपर्णादिभोजी तु सीतयाऽमा भ्रमाम्यहम् ॥७४॥
शाखामृगध्वजाधीशस्त्वां प्रहस्याभणीदिदम् । यथा किल ग्रहेणाऽसौ भवत्स्वामी वशीकृतः ७५
वायुना वाऽतिचंडेन विप्रलापादिहेतुना । येनेदं विपरीतत्वं वराकः समुपागतः ॥ ७६ ॥

नून न सति लकायां कुशला मन्त्रिवादिन । पक्वतैलादिना येन क्रियते तच्चिकित्सितम् ॥७७॥
आवेश सायके कृत्वा क्षिप्र सग्राममडल । लक्ष्मीधरनरेंद्रोऽस्य रुजः सर्वा हरिष्यति ॥ ७८ ॥
ततो मया तदाक्रोशप्रह्विज्वलितचेतसा । शुना द्विप इवाकृष्टो वानरध्वजचन्द्रमा ॥ ७९ ॥
सुग्रीव ! पद्मगर्वेण नून त्व मर्तुमिच्छसि । अधिक्षिपासि यत्क्षुद्र विद्याधरमहश्वरम् ॥ ८० ॥
ऊचे विराधितश्च त्वा यथा ते शक्तिरस्ति चेत् । आगच्छतु ममैकस्य युद्ध यच्छ किमास्यते ८१
उक्तो दाशरथिर्भूयो मया रामरणाजिरे । रावणस्य न कि दृष्टस्त्वया परमविक्रमः ॥ ८२ ॥
यत' क्षमान्वित वीर राजखद्योतभास्करम् । सामप्रयोगमिच्छन्त भवत्पुण्यानुभावतः ॥ ८३ ॥
वदान्य त्रिजगत्ख्यातप्रताप प्रणतप्रियम् । नेतुमिच्छसि सक्षाभ कलासक्षोभकारिणम् ॥ ८४ ॥
चडसैन्योर्मिमालाढ्य शस्त्रयादोगणाकुलम् । तर्तुमिच्छसि किं दोर्भ्यां दशग्रीवमहार्णवम् ॥८५॥
ययुद्विपमहाव्याला पदातिद्रुमसकटाम् । विवक्षसि कथ दुर्गां दशग्रीवमहाटवीम् ॥ ८६ ॥

न पद्मवातेन सुमेरुरुह्यते । न सागर शुष्यति सूर्यरश्मिभिः ॥
गवेन्द्रशृगधर्षणी न कपते । न साध्यते त्वत्सदृशैर्दशाननः ॥ ८७ ॥

इति प्रचड मयि भाषमाणे । भामडलः क्रोधकषायनेत्रः ॥

यावत्समाकर्षदसिं प्रदीप्तं । तावत्सुमित्रातनयेन रुद्धः ॥ ८८ ॥
प्रसीद वैदेह ! विमुंच कोपं । न जंबुके कोपमुपैति सिंहः ॥
गजेंद्रकुंभस्थलदारणेन । क्रीडां स मुक्त्वा निकरैः करोति ॥ ८९ ॥
नरेश्वरा ऊर्जितशौर्यचेष्टा । न भीतिभाजां प्रहरंति जातु ॥
न ब्राह्मणं न श्रमणं न शून्यं । स्त्रियं न बालं न पशुं न दूतम् ॥ ९० ॥
इत्यादिभिर्वाड्निवहैः सुयुक्तै—र्यदा स लक्ष्मीधरपंडितेन ॥
नीतः प्रबोधं शनकैरमुंचत् । क्रोधं तथा दुःसहदीप्तिचक्रः ॥ ९१ ॥
निर्भर्त्सितः क्रूरकुमारचक्रैः वाक्यैरलं वज्रनिघाततुल्यैः ।
अपूर्वहेतुप्रलघूकृतात्मा स्वमन्यमानः शृणुतोऽप्यसारम् ॥ ९२ ॥
नभः समुत्पत्य भयार्दितोऽहं त्वत्पादमूलं पुनरागतोऽयम् ।
लक्ष्मीधरोऽसौ यदि नाऽभविष्य—द्वैदेहतो देव ! ततोऽमरिष्यम् ॥ ९३ ॥
इति गदितमिदं यथाऽनूभूतं रिपुचरितं तव देव ! निर्विशंकम् ।
कुरु यदुचितमत्र सांप्रतं वचनकरा हि भवंति मद्विधास्तु ॥ ९४ ॥

बहु विदितमलं सुशास्त्रजालं नयविषयेषु सुमंत्रिणोऽभियुक्ताः ।
अखिलमिदमुपैति मोहभावं पुरुषरवौ घनमोहमेघरुद्धे ॥ ९५ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे रावणदूतागमागमाभिधान नाम षट्षष्टितमं पर्व ।

---

# अथ सप्तषष्टितमं पर्व ।

स्वदूतवचनं श्रुत्वा राक्षसानामधीश्वरः । क्षणं संन्मंत्रणं कृत्वा मंत्रज्ञैः सह मंत्रिभिः ॥ १ ॥
कृत्वा पाणितले गंडं कुंडलालोकभासुरम् । अधोमुखः स्थितः किंचिदिति चिन्तामुपागतः ॥२॥
नागेन्द्रवृन्दसंघट्टे युद्धे शत्रुं जयामि चेत् । तथा सति कुमाराणां प्रमादः परिदृश्यते ॥ ३ ॥
सुप्ते शत्रुबले दत्त्वा समास्कंदमवेदितः । आनयामि कुमारान्किं किं करोमि कथं शिवम् ॥ ४ ॥
इति चिंतयतस्तस्य मागधेश्वर शेमुषी । इयं समुद्गता जातो यया सुखितमानसः ॥ ५ ॥
साधयामि महाविद्यां बहुरूपामिति श्रुताम् । प्रतिव्यूहितुमुद्युक्तैरशक्यां त्रिदशैरपि ॥ ६ ॥
इति ध्यात्वा समाहूय किंकरानशिषद्द्रुतम् । कुरुध्वं शांतिगेहस्य शोभां सत्तोरणादिभिः ॥ ७ ॥

पूजां च सर्वचैत्येषु सर्वसंस्कारयोगिषु । सर्वश्चायं भरो न्यस्तो मंदोदर्या स्वचेतसि ॥ ८ ॥
विंशस्य देवदेवस्य वंदितस्य सुरासुरैः । मुनिसुव्रतनाथस्य तस्मिन् काले महोदये ॥ ९ ॥
सर्वत्र भरतक्षेत्रे सुविस्तीर्णे महायते । अर्हच्चैत्यैरियं पुण्यैर्वसुधाऽऽसीदलंकृता ॥ १० ॥
राष्ट्राधिपतिभिर्भूपैः श्रेष्ठिभिर्ग्रामभोगिभिः । उत्थापितास्तदा जैनाः प्रासादाः पृथुतेजसः ॥११॥
अधिष्ठिता भृशं भक्तियुक्तैः शासनदेवतैः । सद्धर्मपक्षसंरक्षाप्रवणैः शुभकारिभिः ॥ १२ ॥
सदा जनपदैः स्फीतैः कृताभिषवपूजनाः । रेजुः स्वर्जविमानाभा भव्यलोकनिषेविताः ॥ १३ ॥
पर्वते पर्वते चारौ ग्रामे ग्रामे वने वने । पत्तने पत्तने राजन् हर्म्ये हर्म्ये पुरे पुरे ॥ १४ ॥
संगमे संगमे रम्ये चत्वरे चत्वरे पृथौ । बभूवुश्चैत्यसंघाता महाशोभासमन्विताः ॥ १५ ॥
शरच्चंद्रसितच्छायाः संगीतध्वनिहारिणः । नानातूर्यस्वनोद्भूतक्षुब्धसिंधुसमस्वनाः ॥ १६ ॥
त्रिसंध्यं वंदनोद्युक्तैः साधुसंघैः समाकुलः । गंभीरा विविधाश्चर्याश्चित्रपुष्पोपशोभिताः ॥ १७ ॥
विभूत्या परया युक्ता नानावर्णमणित्विषः । सुविस्तीर्णाः समुत्तुंगा महाध्वजविराजिताः ॥१८॥
जिनेन्द्रप्रतिमास्तेषु हेमरूप्यादिमूर्तयः । पंचवर्णा भृशं रेजुः परिवारसमन्विताः ॥ १९ ॥
पुरे च खेचराणां च स्थाने स्थानेऽतिचारुभिः । जिनप्रासादसत्कूटैर्विजयार्द्धगिरिर्वरः ॥ २० ॥

नानारत्नमयैः कांतैरुद्यानादिविभूषितैः । व्याप्तं जगदिदं रेजे जिनेन्द्रभवनैः शुभैः ॥ २१ ॥
महेन्द्रनगराकारा लंकाऽप्येवं मनोहरा । अन्तर्बहिश्च जैनेन्द्रैर्भवनैः पापहारिभिः ॥ २२ ॥
यथाष्टादशसंख्यानां सहस्राणां सुयोषिताम् । पद्मिनीनां सहस्रांशुः स चिक्रीड दशाननः ॥२३॥
प्रावृण्मेघदलच्छायो नागनासा महाभुजः । पूर्णेन्दुवदनः कांतो बंधूकच्छदनाधरः ॥ २४ ॥
विशालनयनो नारीमनःकर्षणविभ्रमः । लक्ष्मीधरसमाकारो दिव्यरूपसमन्विताः ॥ २५ ॥
तस्मिन्नाश्रितसर्वलोकनयने प्रासादमालावृते, नानारत्नमये दशाननगृहे चैत्यालयोद्भासिते ।

हेमस्तंभसहस्रशोभि विपुलं मध्ये स्थितं भासुरं ।
तुंगं शांतिगृहं स यत्र भगवान् शांतिर्जिनः स्थापितः ॥ २६ ॥
वंद्यानां त्रिदशेन्द्रमौलिशिखरप्रत्युप्तरत्नस्फुर—
त्स्फीतांशुप्रकरात्प्रसारिचरणप्रोत्सर्पिनक्षत्विषाम् ॥
ज्ञात्वा सर्वमशाश्वतं परिदृढामाधाय धर्मे मतिं ॥
धन्याः सद्युति कारयंति परमं लोके जिनानां गृहम् ॥ २७ ॥

वित्तस्य जातस्य फलं विशालं । वदंति सुज्ञाः सुकृतोपलंभम् ॥
धर्मश्च जैनः परमोऽखिलेऽस्मि—ञ्जगत्यभीष्टस्य रविप्रकाशे ॥ २८ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते शांतिगृहकीर्तनं नाम सप्तषष्टितमं पर्व ।

# अथाष्टषष्टितमं पर्व ।

अथ फाल्गुनिके मासे गृहीत्वा धवलाष्टमीम् । पौर्णमासी तिथिं यावल्लग्नो नंदीश्वरो महः ॥१॥
नंदीश्वरमहे तस्मिन् प्राप्ते परमसंपदः । बलद्वयेऽपि लोकोऽभून्नियमग्रहणोद्यतः ॥ २ ॥
एवं च मानसं चक्रुः सर्वे सैनिकपुङ्गवाः । सुपुण्यानि दिनान्यष्टावेतानि भुवनत्रये ॥ ३ ॥
नैतेषु विग्रहं कुर्मो न चान्यदपि हिंसनम् । यजामहे यथाशक्ति स्वश्रेयसि परायणाः ॥ ४ ॥
भवंति दिवसेष्येषु भोगादिपरिवर्जिताः । सुरा अपि जिनेन्द्राणां सेंद्राः पूजनतत्पराः ॥ ५ ॥
क्षीरोदवारिसंपूर्णैः कुंभैरंभोजशोभिभिः । शातकुंभैरमं भक्ताः स्नापयंति जिनान् सुराः ॥ ६ ॥
अन्यैरपि जिनेंद्राणां प्रतिमाः प्रतिमोज्झिताः । भावितैरभिषेक्तव्याः पलाशादिपुटैरपि ॥ ७ ॥

गत्वा नंदीश्वरं भक्त्या पूजयंति जिनेश्वरान् । देवेश्वरा न ते पूज्याः क्षुद्रकैः किमिहस्थितैः ॥८॥
अर्चयंति सुराः पद्मै रत्नजांबूनदात्मकैः । जिनास्ते भुविनिर्वित्तैः पूज्यश्चित्तदलैरपि ॥ ९ ॥
इति ध्यानमुपायाता लंकाद्वीपे मनोरमे । जनाश्चैत्यानि सोत्साहाः पताकाद्यैरभूषयन् ॥ १० ॥
सभाः प्रपाश्च मंचाश्च पट्टशाला मनोहराः । नाट्यशाला विशालाश्च वाप्यश्च रचिताः शुभाः ११
सरांसि पद्मरम्याणि भांति सोपानकैर्वरैः । तटैर्भासितवस्त्रादिचैत्यकूटानि भूरिशः ॥ १२ ॥
कनकादिरजश्चित्रमंडलादिविराजितैः । रेजुश्चैत्यादिसद्द्वारैर्वस्त्ररंभादिभूषितैः ॥ १३ ॥
घृतक्षीरप्रदिभिः पूर्णाः कलशाः कमलाननाः । मुक्तादामादिसत्कंठा रत्नरश्मिविराजिताः ॥१४॥
जनबिंबाभिषेकार्थमाहृता भक्तिभासुराः । दृश्यंते भोगिगेहेषु शतशोऽथ सहस्रशः ॥ १५ ॥
नंदनप्रभवैः फुल्लैः कर्णिकारातिमुक्तकैः । कदंबैः सहकारैश्च चंपकैः पारिजातकैः ॥ १६ ॥
मंदारैः सौरभाबद्धमधुव्रतकदंबकैः । स्रजो विरचिता रेजुश्चैत्येषु परमोज्ज्वलाः ॥ १७ ॥
जातरूपमयैः पद्मै रजतादिमयैस्तथा । मणिरत्नशरीरैश्च पूजा विरचिता परा ॥ १८ ॥
पटुभिः पटहैस्तूर्यैर्मृदंगैः काहलादिभिः । शंखैश्चाशु महानादैश्चैत्येषु समजायत ॥ १९ ॥
प्रशांतवैरसंबद्धैर्महानंदसमागतैः । जिनानां महिमा चक्रे लंकापुरनिवासिभिः ॥ २० ॥

ते विभूतिं परां चक्रुर्विद्येशा भक्तितत्पराः । नंदीश्वरे यथा देवा जिनबिंबार्चनोद्यताः ॥ २१ ॥
अयमपि राक्षसवृषभः । पृथुप्रतापः सुशांतिगृहमभिगम्य ॥
पूजां करोति भक्त्या । बलिरिव पूर्वं मनोहरां शुचिर्भूत्वा ॥ २२ ॥
समुचितविभवयुतानां । जिनेंद्रचंद्रान् सुभक्तिभारधराणाम् ॥
पूजयतां पुरुषाणां । कः शक्तः पुण्यसंचयान् प्रचोदयितुम् ॥ २३ ॥
भुक्त्वा देवविभूतिं । लब्ध्वा चक्रांकभोगसंयोगम् ॥
रवितोऽपि तपस्तीव्रं । कृत्वा जैनं व्रजंति मुक्तिं परमाम् ॥ २४ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे फाल्गुनाष्टाह्निकामहिमाविधानं नामाष्टषष्टितमं पर्व ।

---

# अथैकोनसप्ततितमं पर्व ।

अथ शांतिजिनेन्द्रस्य भवनं शांतिकारणम् । कैलासकूटसंकाशं शरदभ्रचयोपमम् ॥ १ ॥
स्वयंप्रभासुरं दिव्यं प्रासादालीसमावृतम् । जंबूद्वीपस्य मध्यस्थं महामेरुमिवोत्थितम् ॥ २ ॥

विद्यासाधनसंयुक्तमानसः स्थिरनिश्चयः । प्रविश्य रावणः पूजामकरोत्परमाद्भुताम् ॥ ३ ॥
अभिषेकैः सवादित्रैर्माल्यैरतिमनोहरैः । धूपैर्बल्युपहारैश्च सद्वर्णैरनुलेपनैः ॥ ४ ॥
चक्रे शांतिजिनेंद्रस्य शांतचेता दशाननः । पूजां परमया युक्त्या शुनाशीर इवोद्यतः ॥ ५ ॥
चूडामणिहंसद्बंधकेशमौलिर्महाद्युतिः । शुक्लांशुकधरः पीनकेयूरार्चितसद्भुजः ॥ ६ ॥
कृतांजलिपुटः क्षोणीं पीडयन् जानुसंगमात् । प्रणामं शांतिनाथस्य चकार त्रिविधेन सः ॥ ७ ॥
शांतेरभिमुखः स्थित्वा निर्मले धरणीतले । पर्यंकार्धनियुक्तांगः पुष्परागिणि कुट्टिमे ॥ ८ ॥
बिभ्रत्स्फटिकनिर्माणामक्षमालां करोदरे । बलाकापंक्तिसंयुक्तनीलांभोदचयोपमः ॥ ९ ॥
एकाग्रध्यानसंपन्नो नासाग्रस्थितलोचनः । विद्यायाः साधनं धीरः प्रारंभे राक्षसाधिपः ॥ १० ॥
दत्ताज्ञापूर्वमेवाथ नाथेन प्रियवर्त्तिनी । अमात्यं यमदंडाख्यमादिदेश मयात्मजा ॥ ११ ॥
दाप्यतां घोषणा स्थाने यथा लोकः समंततः । नियमेषु नियुक्तात्मा जायतां सुदयापरः ॥१२॥
जिनचंद्राः प्रपूज्यंतां शेषव्यापारवर्जितैः । दीयतां धनमर्थिभ्यो यथेष्टं हृतमत्सरैः ॥ १३ ॥
यावत्समाप्यते योगो नाथ भुवनभोगिनः । तावत् श्रद्धापरो भूत्वा जनस्तिष्ठतु संयमी ॥ १४ ॥
निकारो यद्युदारोऽपि कुतश्चिन्नीचतो भवेत् । निश्चितं सोऽपि सोढव्यो महाबलयुतैरपि ॥ १५ ॥

क्रोधाद्विकुरुते किंचिद्विवसेष्वेषु यो जनः । पिताऽपि किं पुनः शेषः स मे वध्यो भविष्यति १६
युक्तो रोधिसमाधिभ्यां संसारं सोऽन्तवर्जितम् । प्रतिपद्येत यो न स्यात्समादिष्टस्य कारकः १७
ततो यथाऽऽज्ञापयसीति संभ्रमी । मुदा तदाज्ञां शिरसा प्रतीक्ष्य सः ॥
चकार सर्वं गदितं जनैश्च । तथा कृतं संशयसंगवर्जितैः ॥ १८ ॥
जिनेन्द्रपूजाकरणप्रसक्ता । प्रजा बभूवापरकार्यमुक्ता ॥
रविप्रभाणां परमालयाना–मन्तर्गता निर्मलतुंगभावा ॥ १९ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मचरिते लोकनियमकरणाभिधानं नामैकोनसप्ततितमं पर्व ।

---

# अथ सप्ततितमं पर्व ।

सद्वृत्तांतश्चरास्येभ्यस्तत्र परबले श्रुतः । ऊचुश्च खेचराधीशा जयप्राप्तिपरायणाः ॥ १ ॥
किल शांतिजिनेंद्रस्य प्रविश्य शरणं सुधीः । विद्यां साधयितुं लग्नः स लंकापरमेश्वरः ॥ २ ॥
चतुर्विंशतिभिः सिद्धिं वासरैः प्रतिपद्यते । बहुरूपेति सा विद्या सुराणापि भंजती ॥ ३ ॥

यावद्भगवती तस्य सा सिद्धिं न प्रपद्यते । तावत्कोपयतः क्षिप्रं तं गत्वा नियमस्थितम् ॥ ४ ॥
तस्यां सिद्धिमुपेतायां देवेन्द्रैरपि शक्यते । न स साधयितुं कैव क्षुद्रेष्वस्मासु संकथा ॥ ५ ॥
ततो विभीषणेनोक्तं कर्त्तव्यं चेदिदं ध्रुवम् । द्रुतं प्रारभ्यतां कस्माद्भवद्भिरवलंव्यते ॥ ६ ॥
संप्रधार्य समस्तैस्तैः पद्मनाभाय वेदितम् । गदितं च यथा लंकाप्रस्तावे गृह्यतामिति ॥ ७ ॥
बाध्यतां रावणः कृत्यं क्रियतां च यथेप्सितम् । इत्युक्तः स जगौ धीरो महापुरुषचेष्टितः ॥८॥
भीतादिष्वपि नो तावत् कर्तुं युक्तं विहिंसनम् । किं पुनर्नियमावस्थे जने जिनगृहस्थिते ॥ ९ ॥
नैषा कुलसमुत्थानां क्षत्रियाणां प्रशस्यते । प्रवृत्तिर्गर्वतुंगानां खिन्नानां शस्त्रकर्मणि ॥ १० ॥
महानुभावधीर्देवो विधर्मे न प्रवर्त्तते । इति प्रधार्य ते चक्रुः कुमारान् गामिनो रहः ॥ ११ ॥
श्वो गताः स्म इति प्राप्ता अपि बुद्धिं नभश्चराः । अष्टमात्रदिनं कालं संप्रधारणया स्थिताः १२
पूर्णमास्यां ततः पूर्णशशांकसदृशाननाः । पद्मायतेक्षणा नानालक्षणध्वजशोभिनः ॥ १३ ॥
सिंहव्याघ्रवराहेभशरभादियुतान् रथान् । विमानानि तथाऽऽरूढा गृहीतपरमायुधाः ॥ १४ ॥
कुमाराः प्रस्थिता लंकां शंकामुत्सृज्य सादराः । रावणक्षोभणाकूता भवनामरभासुराः ॥ १५ ॥
मकरध्वजसाटोपचंद्राभरतिवर्द्धनाः । वातायनो गुरुभरः सूर्यो ज्योतिर्महारथः ॥ १६ ॥

प्रीतिंकरो दृढरथः समुन्नतबलस्तथा । नंदनः सर्वदो दुष्टः सिंहः सर्वप्रियोऽनलः ॥ १७ ॥
नीलः सागरनिस्वानः ससुतः पूर्णचंद्रमाः । स्कंदश्चन्द्रमरीचिश्च जांबवः संकटस्तथा ॥ १८ ॥
समाधिबहुलः सिंहः कटिरिन्द्राशनिर्बलः । तुरंगशतमेतेषां प्रत्येकं योजितं रथे ॥ १९ ॥
शेषाः सिंहवराहेभव्याघ्रयानैर्मनोजवैः । पदातिपटलांतस्थाः प्रस्थिताः परमौजसः ॥ २० ॥
नानाचिह्नातपत्रास्ते नानातोरणलांछनाः । चित्राभिर्वैजयंतीभिर्लक्षिता गगनांगणे ॥ २१ ॥
सैन्यार्णवसमुद्भूतमहागंभीरनिःस्वनाः । आस्तृणाना दिशो मानमुद्वहंतः समुन्नताः ॥ २२ ॥
प्राप्ता लंकापुरीबाह्योद्देशमेवमचिंतयन् । आश्चर्यं किमिदं लंका निश्चिंतेयमवस्थिता ॥ २३ ॥
स्वस्थो जनपदोऽमुष्यां सुचेताः परिलक्ष्यते । अवृत्तपूर्वसंग्रामा इव चास्यां भटाः स्थिताः ॥२४॥
अहो लंकेश्वरस्येदं धैर्यमत्यंतमुन्नतम् । गंभीरत्वं तथा सत्त्वं श्रीप्रतापसमुन्नतम् ॥ २५ ॥
बंदिग्रहणमानीतः कुंभकर्णो महाबलः । इंद्रजिन्मेघनादश्च दुर्धरैरपि दुर्धराः ॥ २६ ॥
अक्षाद्या बहवः शूरा नीता निधनमाहवे । न तथापि विभोः शंका काचिदस्योपजायते ॥२७॥
इति संचिंत्य कृत्वा च समालापं परस्परम् । विस्मयं परमं प्राप्ताः कुमाराः शंकिता इव ॥२८॥
अथ वैभीषणिर्वाक्यं ख्यातो नाम्ना सुभूषणः । जगाद धैर्यसंपन्नं निर्भ्रान्तं मारुतायनम् ॥२९॥

भयासंगं समुत्सृत्य क्षिप्रं लंकां प्रविश्य ताम् । लोलयामि इमान् सर्वान्परित्यज्य कुलांगनाः ३०
वचनं तस्य संपूज्य ते विद्याधरदारकाः । महाशौर्यसमुन्नद्धा दुर्दान्ताः कलहप्रियाः ॥ ३१ ॥
आशीविषसमाश्चंडा उद्धताश्चपलाश्चलाः । भोगदुर्ललिता नानासंग्रामोद्भूतकीर्तयः ॥ ३२ ॥
ग्रसमाना इवाशेषां नगरीं तां समास्तृणन् । महासैन्यसमायुक्ताः शस्त्ररश्मिविराजिताः ॥ ३३ ॥
सिंहेभादिरवोन्मिश्रभेरीदुंदुभिनिस्वनम् । श्रुत्वातिभीषणं लंका परमं कंपमागता ॥ ३४ ॥
सहसा चकितत्रस्ता विलोलनयनाः स्त्रियः । स्वनद्गलदलंकाराः प्रियाणामंकमाश्रिताः ॥ ३५ ॥
विद्याभृन्मिथुनान्युच्चैर्विह्वलानि नभोऽगणे । बभ्रमुश्चक्रवद्भ्रांत्या चलद्वासांसि सस्वनम् ॥ ३६ ॥
भवने राक्षसेन्द्रस्य महारत्नांशुभासुरे । स्वनन्मंगलगंभीरवीरतूर्यमृदंगके ॥ ३७ ॥
अभ्युच्छिन्नमुसंगीतनृत्यनिष्णाततयोषिति । जिनपूजासमुद्युक्तकन्याजनसमाकुले ॥ ३८ ॥
विलासैः परमस्त्रीणामप्युन्मादितमन्मथे । क्रूरतूर्यस्वनं श्रुत्वा क्षुब्धेऽतःपुरसागरे ॥ ३९ ॥
उद्ययौ निःस्वनो रम्यो भूषणस्वनसंगतः । मर्मतादाकुलो मंद्रो वल्लकीनामिवायतः ॥ ४० ॥
विह्वलाऽचिंतयत्काचित्कष्टं किमिदमागतम् । मर्तव्यमद्य किं क्रूरे कृते कर्मणि शत्रुभिः ॥ ४१ ॥
अन्या दध्यौ भवेत्पापः किं नु बंदिग्रहो मम । किंवा विवसनीभूता क्षिप्ये लवणसागरे ॥ ४२ ॥

एवमाकुलतां प्राप्ते समस्ते नगरीजने । विह्वलेषु प्रवृत्तेषु निःस्वनेषु समंततः ॥ ४३ ॥
क्रुद्धो मयमहादैत्यः पिनद्धकवचो द्रुतम् । सन्नद्धैः सचिवैः सार्द्धं समुन्नतपराक्रमः ॥ ४४ ॥
युद्धार्थमुद्यतो दीप्तः प्राप लंकेशमंदिरम् । श्रीमान् हरिणकेशीव सुनाशीरनिकेतनम् ॥ ४५ ॥
ऊचे मंदोदरी तं च कृत्वा निर्भर्त्सनं परम् । कर्त्तव्यं तात नैतत्ते दोषार्णवनिमज्जनम् ॥ ४६ ॥
स मयो घोष्यमाणोऽसौ जैनः किं न त्वया श्रुतः । प्रमादं कुरु वांछा चेदस्ति स्वश्रेयसं प्रति ४७
दुहितुः स्वहितं वाक्यं श्रुत्वा दैत्यपतिर्मयः । प्रशांतः संजहारास्त्रं रश्मिचक्रं यथा रविः ॥४८॥
दुर्भेदकवचच्छन्नो मणिकुंडलमंडितः । हारराजितवक्षस्को विवेश स्वं जिनालयम् ॥ ४९ ॥
उद्वेलसागराकाराः कुमारास्तावदागताः । प्राकारं वेगवातेन कुर्वन्तः शिखरोज्झितम् ॥ ५० ॥
भग्नवज्रकपाटं च कृत्वा गोपुरमायनम् । प्रविष्टा नगरीं धीरा महोपद्रवलालसाः ॥ ५१ ॥
इमे प्राप्ता द्रुतं नश्यत् क यामि प्रविशालयम् । हा मातः किमिदं प्राप्तं तात तात निरीक्ष्यताम् ५२
त्रायस्व भद्र हा भ्रातः किं किं ही ही कथं कथम् । आर्यपुत्र निवर्त्तस्व तिष्ठ हा हा महद्भयम् ५३
एवं प्रवृत्तनिस्वानैराकुलैर्नगरीजनैः । संत्रस्तैर्दशवक्त्रस्य भवनं परिपूर्यताम् ॥ ५४ ॥
काचिद्विगलितां कांचीमाक्रम्यात्यंतमाकुला । स्वेनैव चरणेनांते जानुखंडं गता भुवि ॥ ५५ ॥

हस्तालंबितवित्रस्तवसनान्यातिविह्वला । गृहीतपृथुका तन्वी चकंपे गंतुमुद्यता ॥ ५६ ॥
संभ्रमत्रुटितस्थूलमुक्तानिकरवर्षिणी । मेघरेखेव काचित्तु प्रस्थिता वेगधारिणी ॥ ५७ ॥
संत्रस्तहरिणीनेत्रा स्रस्तकेशकलापिका । वक्षः प्राप्य प्रियस्यान्या बभूवोत्कंपितोज्झिता ॥५८॥
एतस्मिन्नंतरे दृष्ट्वा लोकं भयपरायणम् । शासनांतर्गता देवाः शान्तिप्रासादसंश्रिताः ॥ ५९ ॥
स्वपक्षपालनोद्युक्ता करुणासक्तमानसाः । प्रातिहार्यं द्रुतं कर्तुं प्रवृत्ता भावतत्पराः ॥ ६० ॥
उत्पत्य भैरवाकाराः शांतिचैत्यालयादमी । गृहीतविविधाकल्पा दंष्ट्रालीसंकटाननाः ॥ ६१ ॥
मध्याह्नार्कदुरीक्षाक्षाः क्षुब्धाः क्रोधोद्धमद्विषाः । दष्टाधरा महाकाया नानावर्णमहारवाः ॥ ६२ ॥
देहदर्शनमात्रेण विकारैर्विषमैर्युताः । वानरांकबलं भंगं निन्युरत्यंतविह्वलम् ॥ ६३ ॥
क्षणं सिंहाः क्षणं वह्निः क्षणं मेघाः क्षणं द्विपाः। क्षणं सर्पाः क्षणं वायुस्ते भवंति क्षणं नगाः ६४
अभिभूतानिमान् ज्ञात्वा देवैः शांतिगृहाश्रयैः । जिनालयकृतावासास्तेषामपि हिते रताः ॥६५॥
देवाः समागता योद्धुं विकृताकारवर्त्तिनः । निजस्थानेषु तेषां हि ते वसंत्यनुपालकाः ॥ ६६ ॥
प्रवृत्ते तुमुले क्रूरे गीर्वाणानां परस्परम् । आसीद्भावः स्वभावेऽपि संदेहो विकृतिं प्रति ॥ ६७ ॥
सीदतः स्वान् सुरान् दृष्ट्वा बलिनश्च परामरान् । कपिकेतूश्च संदृष्टान्पुनर्लंकामुखं स्थितान् ॥६८॥

महान्तं क्रोधमापन्नः प्रभावपरमः सुधीः । यक्षेशः पूर्णभद्राख्यो मणिभद्रमिदं जगौ ॥ ६९ ॥
एतान्पश्य कृपामुक्तान् शाखाकेसरिकेतनान् । जानंतोऽपि समस्तानि शास्त्राणि विकृतिं गता ७०
स्थित्याचारविनिर्मुक्तान् त्यक्ताहारं दशाननम् । योगसंयोजितात्मानं देहेऽपि रहितस्पृहम् ॥७१॥
प्रशांतहृदयं हंतुमुद्यतान्पापचेष्टितान् । रंध्रप्रहारिणः क्षुद्रान् त्यक्तवीरविचेष्टितान् ॥ ७२ ॥
मणिभद्रस्ततोऽवोचत्पूर्णभद्रसमोऽपरः । सम्यक्त्वभावितं वीरं जिनेंद्रचरणाश्रितम् ॥ ७३ ॥
चारुलक्षणसंपूर्णं शांतात्मानं महाद्युतिम् । रावणं न सुरेन्द्रोऽपि नेतुं शक्तः पराभवम् ॥ ७४ ॥
ततस्तथाऽस्त्विति प्रोक्ते पूर्णभद्रेण तेजसा । गुह्यकाधिपयुग्मं तज्जातं विघ्नस्य नाशकम् ॥७५॥
यक्षेश्वरौ परिक्रुद्धौ दृष्ट्वा योद्धुं समुद्यतौ । लज्जान्विताश्च भीताश्च गताः स्वं स्वं परामराः ॥७६॥
यक्षेश्वरौ महावायुप्रेरितोपलवर्षिणौ । युगांतमेघसंकाशौ जातौ घोरोरुगर्जितौ ॥ ७७ ॥
तयोर्जंघासमीरेण सा नभश्चरवाहिनी । प्रेरितोदारवेगेन शुष्कपर्णचयोपमा ॥ ७८ ॥
तेषां पलायमानानां भूत्वानुपदिकाविमौ । उपालंभकृताकूतावेकस्थौ पद्ममागतौ ॥ ७९ ॥
अभिनंद्य च तं सम्यक् पूर्णभद्रः सुधीर्जगौ । राज्ञो दशरथस्य त्वं श्रीमतस्तस्य नंदनः ॥८०॥
अश्लाघ्येषु निवृत्तात्मा श्लाघ्यकृत्येषु चोद्यतः । तीर्णः शास्त्रसमुद्रस्य पारं शुद्धगुणोन्नतः ॥८१॥

ईदृशस्य सतो भद्र किमेतत्सदृशं विभोः । तव सेनाश्रितैः पौरजनो ध्वंसमुपाहृतः ॥ ८२ ॥
यो यस्य हरते द्रव्यं प्रयत्नेन समार्जितम् । स तस्य हरते प्राणान् बाह्यमेतद्धि जीवितम् ॥८३॥
अनर्घवज्रवैडूर्यविद्रुमादिभिराचिता । लंकापुरी परिध्वस्ता त्वदीयैराकुलांगना ॥ ८४ ॥
प्रौढेंदीवरसंकाशस्ततो गरुडकेतनः । जगाद तेजसा युक्तं वचनं विधिकोविदः ॥ ८५ ॥
एतस्य रघुचंद्रस्य प्राणेभ्योऽपि गरीयसी । महागुणधरी पत्नी शीलालंकारधारिणी ॥ ८६ ॥
दुरात्मना छलं प्राप्य हृता सा येन रक्षसा । अनुकंपा त्वया तस्य रावणस्य कथं कृता ॥८७॥
किं तेऽपकृतमस्माभिः किं वा तेन प्रियं कृतम् । कथ्यतां गुह्यकाधीश किंचिदप्यणुमात्रकम् ८८
कुटिलां भृकुटीं कृत्वा भीमां संध्यारुणेलिके । क्रुद्धोऽसि येन यक्षेन्द्र विना कार्यं समागतः ८९
अर्घं कांचनपात्रेण तस्य दत्त्वातिसाध्वसः । कपिध्वजाधिपोऽवोचत् कोपो यक्षेन्द्र ! मुच्यताम् ९०
पश्य त्वं समभावेन मद्वलस्य निजां स्थितिम् । लंकावलार्णवस्यापि साक्षादीतित्वमीयुषः ॥९१॥
तथाप्येव प्रयत्नोऽस्य वर्त्तते रक्षसां विभोः । केनायं पूर्वकः साध्यः किं पुनर्बहुरूपया ॥ ९२ ॥
संक्रुद्धस्य मृधे तस्य स्खलंत्यभिमुखा नृपाः । जैनोक्तिलब्धवर्णस्य प्रवादे वादिनो यथा ॥९३॥
तस्मात्क्षमार्पितात्मानं क्षोभयिष्यामि रावणम् । यत्साधयति नो विद्यां यथा सिद्धिं कुदर्शनः ९४

तत्तुल्यविभवा भूत्वा येन नाथेन रक्षसाम् । समं युद्धं करिष्यामो विषमं जायतेऽन्यथा ॥ ९५ ॥
पूर्णभद्रस्ततोऽवोचदस्त्वेवं किं नु पीडनम् । कृत्यं नाद्यापि लंकायां साधो जीर्णतृणेष्वपि ॥९६॥
क्षेमेण रावणांगस्य वेदनाद्यविधानतः । क्षोभं कुरुत मन्ये नु दुःखं क्षुभ्यति रावणः ॥ ९७ ॥
एवमुक्तौ प्रसन्नाक्षौ तौ भव्यजनवत्सलौ । भक्तौ श्रमणसंघस्य वैयावृत्यसमुद्यतौ ॥ ९८ ॥
शशांकवदनौ राजन् यक्षाणां परमेश्वरौ । अभिनंदितपद्माद्यावंतर्द्धिं सानुगौ गतौ ॥ ९९ ॥

संप्राप्योपालंभं लक्ष्मणवचनात्सुलज्जितौ तौ हि ।
संजातौ समचित्तौ निर्व्यापारौ स्थितौ येन ॥ १०० ॥
तावद्भवति जनानामधिका प्रीतिः समाश्रयासन्ना ।
यावन्निर्दोषत्वं रविमिच्छति कः सहोत्पातम् ॥ १०१ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे सम्यग्दृष्टिदेवप्रातिहार्यकीर्तनं नाम सप्ततितमं पर्व ।

# अथैकसप्ततितमं पर्व ।

शांतं यक्षाधिपं ज्ञात्वा सुतारात्मजसुंदरः । दशाननपुरीं द्रष्टुमुद्यतः परमोर्जितः ॥ १ ॥
उदारांबुदवृंदाभं मुक्तामाल्यविभूषितम् । धवलैश्चामरैर्दीप्तं महाघंटानिनादितम् ॥ २ ॥
किष्किन्धकांडनामानमारूढो वरवारणम् । रराज मेघपृष्ठस्थः पौर्णमासीशशांकवत् ॥ ३ ॥
तथा स्कंदेंद्रनीलाद्या महर्द्धिपरिराजिताः । तुरंगादिसमारूढाः कुमारा गंतुमुद्यताः ॥ ४ ॥
पदातयो महासंख्याश्चंदनार्चितविग्रहाः । तांबूलरागिणो नानामुंडमालामनोहराः ॥ ५ ॥
कटकोद्भासिवाह्वंताः स्कंधन्यस्तासिखेटकाः । चलावतंसकाश्चित्रपरमांशुकधारिणः ॥ ६ ॥
हेमसूत्रपरिक्षिप्तमौलयश्चारुविभ्रमाः । अग्रतः प्रसृता गर्वकृतालापाः सुतेजसः ॥ ७ ॥
वेणुवीणामृदंगादिवादित्रसदृशं वरम् । पुरो जनः प्रवीणोऽस्य चक्रे शृंगारनर्तनम् ॥ ८ ॥
मंदस्तूर्यस्वनश्चित्रो मनोहरणपंडितः । शंखनिःस्वनसंयुक्तः काहलावत्समुद्ययौ ॥ ९ ॥
विचित्रशुश्च कुमारेशाः सविलासविभूषणाः । लंकां देवपुरीतुल्यामसुरा इव चंचलाः ॥ १० ॥
महिम्ना पुरुणा युक्तां दशास्यनगरीं ततः । प्रविष्टमंगदं वीक्ष्य जगावित्यंगनाजनः ॥ ११ ॥

यस्यैषा ललिता कर्णे विमला दंतनिर्मिता । विराजते महाकांतिकोमला तलपत्रिका ॥ १२ ॥
ग्रहाणामिव सर्वेषां समवायो महाप्रभः । द्वितीयः श्रवणे चायं चपलो मणिकुंडलः ॥ १३ ॥
अपूर्वकौमुदीसर्गप्रवीणः सोऽयमुद्गतः । अंगदेंदुर्दशास्यस्य नगर्यां पश्य निर्भयः ॥ १४ ॥
किमनेनेदमारब्धं कथमेतद्भविष्यति । क्रीडेयं ललिताऽमुष्य निरर्था किन्तु सेत्स्यति ॥ १५ ॥
रावणालयबाह्यक्ष्मामणिकुट्टिमसंगताः । ग्राहवत्सरसोभिज्ञास्त्रासमीयुः पदातयः ॥ १६ ॥
रूपनिश्चलतां दृष्ट्वा निर्ज्ञातमणिकुट्टिमाः । पुनः प्रसरणं चक्रुर्भटाः विस्मयपूरिताः ॥ १७ ॥
पर्वतेन्द्रगुहाकारे महारत्नविनिर्मिते । गंभीरे भवनद्वारे मणितोरणभासुरे ॥ १८ ॥
अंजनाद्रिप्रतीकाशानिन्द्रनीलमयान् गजान् । स्निग्धगंडस्थलान् स्थूलदंतानत्यंतभासुरान् ॥१९॥
सिंहबालांश्च तन्मूर्द्धन्यस्तांघ्रीनूर्द्ध्ववालधीन् । दंष्ट्राकरालवदनान् भीषणाक्षान् सुकेसरान् ॥ २० ॥
दृष्ट्वा पादचरास्त्रस्ताः सत्यव्यालाभिशंकिताः । पलायितुं समारब्धाः प्राप्ता विह्वलतां पराम् २१
ततोऽगदकुमारेण तदभिज्ञेन कृच्छ्रतः । प्रबोधिताः प्रतीयंते पदानि निदधुश्चिरात् ॥ २२ ॥
प्रविष्टाश्च चलन्नेत्रा भटाः शंकासमन्विताः । रावणस्य गृहं सैंहं पदं मृगगणा इव ॥ २३ ॥
द्वाराण्युल्लंघ्य भूरीणि परतो गंतुमक्षमाः । गहने गृहविन्यासे जात्यंधा इव बभ्रमुः ॥ २४ ॥

इंद्रनीलालिका भित्तीः पश्यंतो द्वारमोहिनः । आकाशाशंकया पेतुं स्फटिकच्छन्नसद्मसु ॥ २५ ॥
शिलाताडितमूर्धानः पतिता रभसात्पुनः । परमाकुलतां प्राप्ता वेदनाकूणितेक्षणाः ॥ २६ ॥
कथंचिज्ज्ञातसंचाराः कक्षांतरमुपाश्रिताः । व्रजंतो रभसा सक्ता नभः स्फटिकभित्तिषु ॥ २७ ॥
क्षुण्णांघ्रिजानवस्तीव्रललाटस्फोटदुःखिताः । विनिवर्त्तिषवोऽप्येते न ययुर्निर्गमं पुनः ॥ २८ ॥
इंद्रनीलमयीं भूमिं स्मृत्वा कांचित्समानया । बुद्ध्या प्रतारिताः संतः पेतुर्भूतलवेश्मसु ॥ २९ ॥
तत उद्गतभूच्छेदशंकया शरणांतरे । भूमिष्वथैंद्रनीलीषु ज्ञात्वा ज्ञात्वा पदं ददुः ॥ ३० ॥
नारीं स्फटिकसोपानानामग्रगमनोद्यताम् । व्योम्नीति विविदुः पादन्यासान् तु पुनरन्यथा ॥३१॥
तां पिपृच्छषवो यांतः शंकिताः पुनरंतराः । भित्तिष्वापतितास्तस्थुः स्फाटिकीषु सुविह्वलाः ॥३२॥
पश्यंति शिखरं शांतिभवनस्य समुन्नतम् । गंतुं पुनर्न ते शक्ता भित्तिभिः स्फटिकात्मभिः ॥३३॥
विलासिनि वदाध्वानमिति कश्चित्त्वरान्वितः । करे स्तंभसमासक्तामगृह्णीच्छालभंजिकाम् ॥३४॥
दृष्टं कश्चित्प्रतीहारं हेमवेत्रलताकरम् । जगाद शांतिगेहस्य पंथानं देशयाऽऽश्विति ॥ ३५ ॥
कथं न किंचिदुरसिक्तो ब्रवीत्येष विसंभ्रमः । इति घ्नन् पाणिना वेगादवापांगुलिचूर्णनम् ॥३६॥
क्षत्रियोऽयमिति ज्ञात्वा हस्तस्पर्शनपूर्वकम् । किंचित्कक्षांतरं जग्मुर्द्वारं विज्ञाय कृच्छ्रतः ॥ ३७ ॥

द्वारमेतत्र कुड्यं तु महानीलमयं भवेत् । इति ते संशयं प्राप्ताः करं पूर्वमसारयन् ॥ ३८ ॥
स्वयमप्यागतं मार्गं पुनर्निर्गंतुमक्षमाः । शांत्यालयगतौ बुद्धिं कुटिलभ्रांतयो दधुः ॥ ३९ ॥
ततः कंचिन्नरं दृष्ट्वा वाचा विज्ञाय सत्यकम् । कश्चिज्जग्राह केशेषु जगाद च सुनिष्ठुरम् ॥४०॥
गच्छ गच्छाग्रतो मार्गं शांतिहर्म्यस्य दर्शय । इति तस्मिन्पुरो याति ते बभूवुर्निराकुलाः ॥४१॥
प्राप्ताश्च शान्तिनाथस्य भवनं मदमुद्वहत् । कुसुमांजलिभिः साकं विमुंचंतो जयस्वनम् ॥ ४२ ॥
धृतानि स्फटिकस्तंभैरम्यदेशेषु केषुचित् । पुराणि ददृशुर्व्योम्नि स्थितानीव सुविस्मयाः ॥४३॥
इदं चित्रमिदं चित्रमिदमन्यन्महाद्भुतम् । इति ते दर्शयांचक्रुः सन्नवस्तु परस्परम् ॥ ४४ ॥
पूर्वमेव परित्यक्तवाहनोऽगदसुंदरः । श्लाघिताद्भुतजैनेंद्रवास्तुयातपरिच्छदः ॥ ४५ ॥
ललाटोपरिविन्यस्तकरराजीवकुड्मलः । कृतप्रदक्षिणः स्तोत्रमुखरं मुखमुद्वहन् ॥ ४६ ॥
अंतरंगैर्वृतो बाह्यकक्षस्थापितसैन्यकः । विलासिनीमनःक्षोभदक्षो विकसितेक्षणः ॥ ४७ ॥
स्वर्णचित्रार्पितं पश्यन् चरितं जैनपुंगवम् । भावेन च नमस्कुर्वन्नाद्यमंडपभित्तिषु ॥ ४८ ॥
धीरो भगवतः शांतेर्विवेश परमालयम् । वंदनां च विधानेन चकार पुरुसम्मदः ॥ ४९ ॥
तत्रेंद्रनीलसंघातमयूखनिकरप्रभम् । सम्मुखं शांतिनाथस्य स्वर्भानुमिव भास्वतः ॥ ५० ॥

अपश्यच्च दशास्यं स सामिपर्यंकसंस्थितम् । ध्यायन् विद्यां समाधानी प्रव्रज्यां भरतो यथा ॥५१॥
जगाद चाधुना वार्त्ता का ते रावण कथ्यताम् । तत्ते करोमि यत्कर्त्तुं क्रुद्धोऽपि न यमःक्षमः ५२
कोऽयं प्रवर्त्तितो दंभो जिनेंद्राणां पुरस्त्वया । धिक् त्वां दुरितकर्माणं वृथा प्रारब्धसत्क्रियम् ५३
एवमुक्त्वोत्तरीयांतदलेन तमताडयत् । कृत्वा कहकहाशब्दं विभ्रमी गर्वनिर्भरम् ॥ ५४ ॥
अग्रतोऽवस्थितान्यस्य पुष्पाण्यादाय तीव्रगीः । अताड़यदधो वक्त्रे निभृतं प्रमदाजनम् ॥५५॥
आकृष्य दारपाणिभ्यां निष्ठुरं कुंचितेक्षणः । तापनीयानि पद्मानि चकार जिनपूजनम् ॥५६॥
पुनरागम्य दुःखाभिर्वाग्भिः संचोदयन्मुहुः । अक्षमालां करादस्य गृहीत्वा चपलोऽच्छिनत् ५७
विकीर्णां तां पुरस्तस्य पुनरादाय सर्वतः । शनैरघटयद् भूयः करे चास्य समर्पयत् ॥ ५८ ॥
करे चाकृष्य चिच्छेद पुनश्चाघट्टयच्चलः । चकार गलके भूयो निदधे मस्तके पुनः ॥ ५९ ॥
ततोंऽतःपुरराजीवखंडमध्यमुपागतः । चक्रे ग्रीष्माभितप्तस्य क्रीडां वन्यस्य दंतिनः ॥ ६० ॥
प्रभ्रष्टदुष्टदुर्दान्तः स्थूरीपृष्ठकचंचलः । प्रवृत्तः शंकया मुक्तः सोंऽतःपुरविलोलने ॥ ६१ ॥
कृतग्रंथिकमाधाय कंठे कस्याश्चिदंशुकम् । गुर्वारोपयति द्रव्यं किंचित्स्मितपरायणः ॥ ६२ ॥
उत्तरीयेण कंठेऽन्यां संयम्यालंबयत्पुरः । स्तंभेऽमुंचत्पुनः शीघ्रं कृतदुःखविचेष्टिताम् ॥ ६३ ॥

दीनारैः पंचभिः कांचित्कांचीगुणसमन्विताम् । हस्ते निजमनुष्यस्य विक्रीणात्क्रीडनोद्यतः ६४
नूपुरौ कर्णयोश्चक्रे केशपाशे च मेखलाम् । कस्याश्चिन्मूद्र्ध्नि रत्नं च चकार चरणस्थितम् ॥६५॥
अन्योन्यं मूर्द्धजैरन्या बबंध कृतवेपना । चकार मस्तकेऽन्यस्याश्छेकं कूजन्मयूरकम् ॥ ६६ ॥
एवं महावृषेणेव गोकुलं परमाकुलम् । कृतमन्तःपुरं तेन सन्निधौ रक्षसां विभोः ॥ ६७ ॥
अभाणीद्रावणं क्रुद्धिस्त्वया रे राक्षसाधम । मायया सत्त्वहीनेन राजपुत्री तदा हृता ॥ ६८ ॥
अधुना पश्यतस्तेहं सर्वमेव प्रियाजनम् । हरामि यदि शक्नोषि प्रतीकारं ततः कुरु ॥ ६९ ॥
एवमुक्त्वा समुत्पत्य पुरोऽस्य मृगराजवत् । महिषीं सर्वतोऽभीष्टां प्राप्तप्रवणवेपथुम् ॥ ७० ॥
त्रिलोभनयनां वेण्यां गृहीत्वाऽत्यंतकातराम् । आचकर्ष यथा राजलक्ष्मीं भरतपार्थिवः ॥ ७१ ॥
जगौ च शूर सेयं ते दयिता जीवितादपि । मंदोदरी महादेवी ह्रियते गुणमेदिनी ॥ ७२ ॥
इयं विद्याधरेन्द्रस्य सभामंडपवर्त्तिनः । चामरग्राहिणी चार्वी सुग्रीवस्य भविष्यति ॥ ७३ ॥
ततोऽसौ कंपविस्रंसिस्तनकुंभतटांशुकम् । समाहितं मुहुस्तन्वी कुर्वती चलपाणिना ॥ ७४ ॥
बाध्यमानाधरा नेत्रवारिणानंतरं स्रुता । चलद्भूषणनिःस्वानमुखरीकृतविग्रहा ॥ ७५ ॥
सजन्ती पादयोर्भूयः प्रविशंती भुजान्तरम् । दैन्यं परममापन्ना भर्त्तारमिदमभ्यधात् ॥ ७६ ॥

त्रायस्व नाथ किंत्वेतामवस्थां मे न पश्यसि । किमन्य एव जातोऽसि नासि सः स्याद्दशानन ॥
अहो ते वीतरागत्वं निर्ग्रंथानां समाश्रितम् । ईदृशे संगते दुःखे किमनेन भविष्यति ॥ ७८ ॥
धिगस्तु तव वीर्येण किमपि ध्यानमीयुषः । यदस्य पापचेष्टस्य छिनत्सि न शिरोऽसिना ॥७९॥
चंद्रादित्यसमानेभ्यः पुरुषेभ्यः पराभवम् । नासि सोढाऽधुना कस्मात्सहसे क्षुद्रतोऽमुतः ॥ ८० ॥
लंकेश्वरस्तु संगाढध्यानसंगतमानसः । न किंचिदशृणोन्नापि पश्यतिस्म सुनिश्चयः ॥ ८१ ॥
अर्द्धपर्यंकसंविष्टो दूरस्थापितमत्सरः । मंदरोरुगुहायातरत्नकूटमहाद्युतिः ॥ ८२ ॥
सर्वेन्द्रियक्रियामुक्तो विद्याराधनतत्परः । निष्कंपविग्रहो धीरः स ह्यासीत्पुस्तकायवत् ॥ ८३ ॥
विद्यां विचिंतयन्नेष मैथिलीमिव राघवः । जगाम मंदरस्याद्रेः स्थिरत्वेन समानताम् ॥ ८४ ॥
ततोऽथ गदतः स्पष्टं द्योतयंती दिशो दश । जयेति जनितालापा तस्य विद्या पुरः स्थिता ॥८५॥
जगौ च देव सिद्धाऽहं तवाज्ञाकरणोद्यता । नियोगो दीयतां नाथ साध्यः सकलविष्टपे ॥ ८६ ॥
एकं चक्रधरं मुक्त्वा प्रतिकूलभवस्थितम् । वशीकरोमि ते लोकं भवदिच्छानुवर्त्तिनी ॥ ८७ ॥
करे च चक्ररत्नं च तवैवोत्तम वर्तते । पद्मलक्ष्मीधरार्धैर्मे ग्रहणं किमिवापरैः ॥ ८८ ॥
मद्विधानां निसर्गोऽयं यन्न चक्रिणि शक्नुमः । किंचित्पराभवं कर्तुमन्यत्र नु किमुच्यते ॥८९॥

ब्रूह्यद्य सर्वदैत्यानां करोमि किमु मारणम् । भवत्यप्रियचित्तानां किं वा स्वर्गौकसामपि ॥ ९० ॥
क्षुद्रविद्यात्तगर्वेषु नभस्वत्पथगामिषु । आदरो नैव मे कश्चिद्वराकेषु तृणेष्विव ॥ ९१ ॥

प्रणम्य विद्या समुपास्थिताऽसौ समाप्तयोगः परमद्युतिस्थः ।
दशाननो यावदुदारचेष्टः । प्रदक्षिणं शांतिगृहं करोति ॥ ९२ ॥
तावत्परित्यज्य मनोभिरामां । मंदोदरीं खेदपरीतदेहाम् ॥
उत्पत्य खं पद्मसमागमेन । गतोऽगदोऽसौ रविवत्सुतेजाः ॥ ९३ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे पद्मायने बहुरूपविद्यासन्निधानाभिधानं नामैकसप्ततितमं पर्व ।

---

# अथ द्वासप्ततितमं पर्व ।

ततः स्त्रीणां सहस्राणि समस्तान्यस्य पादयोः । रुदंत्यः प्रणिपत्योचुः युगपच्चारुनिःस्वनम् ॥१॥
सर्वविद्याधराधीशे वर्तमाने त्वयि प्रभो । बालकेनांगदेनैत्य वयमद्य खलीकृताः ॥ २ ॥
[illegible] ध्यानमुपासीने परमे तेजसास्पदे । विद्याधरकखद्योतो विकारं सोऽपि संश्रितः ॥ ३ ॥

पश्यैतकामवस्थां नो विहतां हतचेतसा । सौग्रीविणा विशंकेन शिशुना भवतः पुरः ॥ ४ ॥
श्रुत्वा तद्वचनं तासां समाश्वासनतत्परः । त्रिकूटाधिपतिः क्रुद्धो जगाद विमलेक्षणः ॥ ५ ॥
मृत्युपाशेन बद्धोऽसौ ध्रुवं यदि विचेष्टते । देव्यो विमुच्यतां दुःखं भवत्यः प्रकृतिस्थिताः ॥ ६ ॥
कांताः! कर्त्तास्मि सुग्रीवं निग्रीवं श्वो रणाजिरे । तमोमंडलकं तं च प्रभामंडलनामकम् ॥ ७ ॥
तयोस्तु कीदृशः कोपो भूमिगोचरकीटयोः । दुष्टविद्याधरान् सर्वान् निहंतास्मि न संशयः ॥८॥
भ्रूक्षेपमात्रकस्यापि दयिता मम शत्रवः । गम्याः किमु महारूपविद्यया स्युस्तथा न ते ॥ ९ ॥
एवं ताः सांत्व्य दयिता बुद्ध्या निहतशात्रवः । तस्थौ देहस्थितौ राजा निष्क्रम्य जिनसद्मनः॥
नानाबाद्यकृतानंदश्चित्रनाट्यसमायुतः । जज्ञे स्नानविधिस्तस्य पुष्पायुधसमाकृतेः ॥ ११ ॥
राजतैः कलशैः कैश्चित्संपूर्णशशिसन्निभैः । श्यामाभिः स्नाप्यते कांतिज्योत्स्नासंप्लावितात्मभिः॥
पद्मकांतिभिरन्याभिः संध्याभिरिव सादरम् । बालभास्वरसंकाशैः कलशैर्हाटकात्मभिः ॥ १३ ॥
गरुत्ममणिनिर्माणैः कुंभैरन्याभिरुत्तमैः । स्त्रीभिः साक्षादिव श्रीभिः पद्मपत्रपुटैरिव ॥ १४ ॥
कैश्चिद्बालातपच्छायैः कदलीगर्भपांडुभिः । अन्यैर्गंधसमाकृष्टमधुव्रतकदंबकैः ॥ १५ ॥
उद्वर्त्तनैः सुलीलाभिः स्त्रीभिरुद्वर्त्तितोऽभजत् । स्नानं नानामणिस्फीतप्रभाभाजि वरासने ॥१६॥

सुस्नातोऽलंकृतः कांतः प्रयतो भावपूरितः । पुनः शांतिजिनेन्द्रस्य विवेश भवनं नृपः ॥ १७ ॥
कृत्वा तत्र परां पूजामर्हतां स्तुतितत्परः । चिरं नृभिः प्रणामं च भेजे भोजनमंडपम् ॥ १८ ॥
चतुर्विधोत्तमाहारविधिं निर्माय पार्थिवः । विद्यापरीक्षणं कर्तुमार क्रीडनभूमिकाम् ॥ १९ ॥
अनेकरूपनिर्माणं जनितं तेन विद्यया । विविधं चाद्भुतं कर्म विद्याधरजनातिगम् ॥ २० ॥
तस्कराहतभूकंपसमाघूर्णितविग्रहम् । जातं परबलं भीतं जगौ निधनशंकितम् ॥ २१ ॥
ततस्तं सचिवाः प्रोचुः कृतविद्यापरीक्षणम् । अधुना नाथ मुक्त्वा त्वां नास्ति राघवसूदनः २२
भवतो नापरः कश्चित्पद्मस्य क्रोधसंगिनः । इष्वासस्य (?) पुरः स्थातुं समर्थः समराजिरे ॥२३॥
विद्ययाथ महार्धिस्थो विकृत्य परमं बलम् । संप्रति प्रमदोद्यानं प्रतस्थे प्रतिचक्रभृत् ॥ २४ ॥
सचिवैरावृतो धीरैः सुरैराखंडलो यथा । अप्रधृष्यः समागच्छन् स रेजे भास्करोपमः ॥ २५ ॥
तमालोक्य समायांतं विद्याधर्यो बभाषिरे । पश्य पश्य शुभे सीते रावणस्य महाद्युतिम् ॥ २६ ॥
पुष्पकाग्रादयं श्रीमान् अवतीर्य महाबलः । नानाधातुविचित्रांगान्महीभृद्गह्वरादिव ॥ २७ ॥
गजेंद्र इव सक्षीबः सूर्यांशुपरितापितः । स्मरानलपरीतांगः पूर्णचन्द्रनिभाननः ॥ २८ ॥
पुष्पशोभा परिच्छन्नमुपगीतं षडंघ्रिभिः । विशति प्रमदोद्यानं दृष्टिरत्र निधीयताम् ॥ २९ ॥

त्रिकूटाधिपतावस्मिन् रूपं निरुपमं श्रिते । सफला जायतां ते दृक् रूपं चास्येदमुत्तमम् ॥ ३० ॥
ततो विमलया दृष्ट्या तया बाह्यांतरात्मनः । चापांधकारितं वीक्ष्य बलमेवमचिंत्यत ॥ ३१ ॥
अदृष्टपारमुद्वृत्तं बलमीदृक् महाप्रभम् । रामो लक्ष्मीधरो वाऽपि दुःखं जयति संयुगे ॥ ३२ ॥
अधन्या किं नु पद्माभं किं वा लक्ष्मणसुन्दरम् । हतं श्रोष्यामि संग्रामे किं वा पापा सहोदरम् ३३
एवं चिंतामुपायातां परमाकुलितात्मिकाम् । कंपमानां परित्रस्तां सीतामागत्य रावणः ॥ ३४ ॥
जगाद देवि ! पापेन त्वं मया छद्मना हृता । क्षात्रगोत्रप्रसूतानां किमिदं साम्प्रतं सताम् ॥३५॥
अवश्यंभाविनो नूनं कर्मणो गतिरीदृशी । स्नेहस्य परमस्येयं मोहस्य बलिनोऽथ वा ॥ ३६ ॥
साधूनां सन्निधौ पूर्वं व्रतं भगवतो मया । वंद्यस्यानंतवीर्यस्य पादमूले समार्जितम् ॥ ३७ ॥
या वृणोति न मां नारी रमयामि न तामहम् । यद्युर्वशी स्वयं रंभा यदि वाऽन्या मनोरमा ३८
इति पालयता सत्यं प्रसादापेक्षिणा मया । प्रसभं रमिता नासि जगदुत्तमसुंदरि ॥ ३९ ॥
अधुनाऽऽलंबने छिन्ने मङ्कुजप्रेरितैः शरैः । वैदेहि ! पुष्पकारूढा विहर स्वेच्छया जगत् ॥ ४० ॥
शिखराण्यगराजस्य चैत्यकूटानि सागरम् । महानदीश्च पश्यंती जनयात्मसुखासिकाम् ॥ ४१ ॥
कृत्वा करपुटं सीता ततः करुणमभ्यधात् । वास्पसंभारसंरुद्धकंठा कृच्छ्रेण सादरम् ॥ ४२ ॥

दशानन ! यदि प्रीतिर्विद्यते तव मां प्रति । प्रसादो वा ततः कर्तुं ममेदं वाक्यमर्हसि ॥ ४३ ॥
क्रुद्धेनापि त्वया संख्ये प्राप्तोऽभिमुखतामसौ । अनिवेदितसंदेशो न हंतव्यः प्रियो मम ॥ ४४ ॥
पद्म भामंडलस्वस्रा तव संदिष्टमीदृशम् । यथा श्रुत्वाऽन्यथा त्वाहं विधियोगेन संयुगे ॥ ४५ ॥
महता शोकभारेण समाक्रांता सती प्रभो । वात्याहतप्रदीपस्य शिखेव क्षणमात्रतः ॥ ४६ ॥
राजर्षेस्तनया शोच्या जनकस्य महात्मनः । प्राणानेषा न मुंचामि त्वत्समागमनोत्सुका ॥४७॥
इत्युक्त्वा मूर्च्छिता भूमौ पपात मुकुलेक्षणा । हेमकल्पलता यद्वद्भग्ना मत्तेन दंतिना ॥ ४८ ॥
तदवस्थामिमां दृष्ट्वा रावणो मृदुमानसः । बभूव परमं दुःखी चिंता चैतामुपागतः ॥ ४९ ॥
अहो निकांचितस्नेहः कर्मबंधोदयादहम् । अवसानविनिर्मुक्तः कोऽपि संसारगह्वरे ॥ ५० ॥
धिक् धिक् किमिदमश्लाघ्यं कृतं सुविकृतं मया । यदन्योन्यरतं भीरुमिथुनं सद्वियोजितम्॥५१॥
पापातुरो विना कार्यं पृथग्जनसमो महत् । अयशोमलमाप्तोऽस्मि सद्भिरत्यंतनिंदितम् ॥ ५२ ॥
शुद्धांभोजसमं गोत्रं विपुलं मलिनीकृतम् । दुरात्मना मया कष्टं कथमेतदनुष्ठितम् ॥ ५३ ॥
धिङ्नारीं पुरुषेन्द्राणां सहसा मारणात्मिकाम् । किंपाकफलदेशीयां क्लेशोत्पत्तिवसुंधराम् ॥ ५४ ॥
भोगिमूर्द्धमणिच्छायासदृशी मोहकारिणी । सामान्येनांगना तावत्परस्त्री तु विशेषतः ॥ ५५ ॥

नदीव कुटिला भीमा धर्मार्थपरिनाशिनी । वर्जनीया सतां यत्नात्सर्वाशुभमहाखनिः ॥ ५६ ॥
अमृतेनेव या दृष्टा मामसिंचन्मनोहराः । अमरीभ्योऽपि दयिता सर्वाभ्यः पूर्वमुत्तमा ॥ ५७ ॥
अद्यैव सा परासक्तहृदया जनकात्मजा । विषकुंभीसमात्यंतं संजातोद्वेजनी मम ॥ ५८ ॥
अनिच्छंत्यपि मे पूर्वमशून्यं याकरोन्मनः । सैवेयमधुना जीर्णतृणानादरमागता ॥ ५९ ॥
अधुनाऽन्याहितस्वांता यद्यपीच्छेदियं तु माम् । तथापि काऽनया प्रीतिः सद्भावपरिमुक्तया ६०
आसीद्यदानुकूलो मे विद्वान् भ्राता विभीषणः । उपदेष्टा तदा नैवं शमं दग्धं मनोगतम् ॥६१॥
प्रमादाद्विकृतिं प्राप्तं मनः सम्रुपदेशतः । प्रायः पुण्यवतां पुंसां वशीभावेऽवतिष्ठते ॥ ६२ ॥
स्वसंग्रामवृत्तौ सार्द्धं सचिवैर्मंत्रणं कृतम् । अधुना कीदृशी मैत्री वीरलोकविगर्हिता ॥ ६३ ॥
योद्धव्यं करुणा चेति द्वयमेतद्विरुध्यते । अहो संकटमापन्नः प्राकृतोऽहमिदं महत् ॥ ६४ ॥
यद्यर्पयामि पद्माय जानकीं कृपयाऽधुना । लोको दुर्ग्रहचित्तोऽयं ततो मां वेत्त्यशक्तकम् ॥ ६५ ॥
यत्किंचित्करणोन्मुक्तः सुखं जीवति निर्घृणः । जीवत्यस्मद्विधो दुःखं करुणामृदुमानसः ॥६६॥
हरिताक्ष्यसमुन्नद्धौ तौ कृत्वाऽऽजौ निरस्त्रकौ । जीवग्राहं गृहीतौ च पद्मलक्षणसंज्ञकौ ॥ ६७ ॥
पश्चाद्विभवसंयुक्तो पद्मनाभाय मैथिलीम् । न जायते करोम्येवं ततो निश्चितमानसः ॥ ६८ ॥

महान् लोकापवादश्च भयान्यायसमुद्भवः । न जायते करोम्येवं ततो निश्चितमानसः ॥ ६९ ॥
मनसा संप्रधार्यैवं महाविभवसंगतः । ययावंतःपुरांभोजखंडं रावणवारणः ॥ ७० ॥
ततः परिभवं स्मृत्वा महांतं शत्रुसंभवम् । क्रोधारुणेक्षणो भीमः संवृत्तोऽतकसंनिभः ॥ ७१ ॥
बभाण दशवक्त्रस्तद्वचनं स्फुरिताधरः । स्त्रीणां मध्ये ज्वरो येन समुदीप्तः सुदुःसहः ॥ ७२ ॥
गृहीत्वा समरे पापं तं दुर्ग्रीवं सहांगदम् । भागद्वयं करोम्येष खड्गेन द्युतिहासिना ॥ ७३ ॥
तमोमंडलकं तं च गृहीत्वा दृढसंयतम् । लोहमुद्गरनिर्घातैस्त्याजयिष्यामि जीवितम् ॥ ७४ ॥
करालतीक्ष्णधारेण क्रकचेन मरुत्सुतम् । यंत्रितं काष्ठयुग्मेन पाटयिष्यामि दुर्णयम् ॥ ७५ ॥
मुक्त्वा राघवमुद्वृत्तानखिलानाहवे परान् । अस्त्रौघैश्चूर्णयिष्यामि दुराचारान् हतात्मनः ॥७६॥
इति निश्चयमापन्ने वर्तमाने दशानने । वाचो नैमित्तवक्त्रेषु चरंति मगधेश्वर ॥ ७७ ॥
उत्पाताः शतशो भीमाः संप्रत्येते समुद्गताः । आयुधप्रतिमो रूक्षः परिवेषः खरत्विषः ॥ ७८ ॥
समस्तां रजनीं चंद्रो नष्टः क्वापि भयादिव । निपेतुर्घोरनिर्घाता भूकंपः सुमहानभूत् ॥ ७९ ॥
वेपमाना दिशि प्राच्यां मुक्ताशोणितसन्निभा । पपात विरसं रेदुरुत्तरेण तथा शिवाः ॥ ८० ॥
हेषंति कंपितग्रीवास्तुरंगाः प्रखरस्वनाः । हस्तिनो रूक्षनिःस्वाना घ्नंति हस्तेन मेदिनीम् ॥८१॥

दैवतप्रतिमा जाता लोचनोदकदुर्दिना । निपतंति ग्रहावृक्षाः विना दृष्टेन हेतुना ॥ ८२ ॥
आदित्याभिमुखीभूताः काकाः खरकरस्वनाः । संघातवर्जिनो जाताः स्रस्तपक्षा महाकुलाः ८३
सरांसि सहसा शोषं प्राप्तानि विपुलान्यपि । निपेतुर्गिरिशृंगाणि नभो वर्षति शोणितम् ॥ ८४ ॥
स्वल्पैरेव दिनैः प्रायः प्रभोराचक्षते मृतिम् । विकाराः खलु भावानां जायंते नान्यथेदृशः ॥८५॥
क्षीणेष्वात्मीयपुण्येषु याति शक्रोऽपि विच्युतिम् । जनता कर्मतंत्रेयं गुणभूतं हि पौरुषम् ॥८६॥
लभ्यते खलु लब्धव्यं नातः शक्यं पलायितुम् । न काचिच्छूरता दैवे प्राणिनां स्वकृताशिनाम् ॥
सर्वेषु नयशास्त्रेषु कुशलो लोकतंत्रवित् । जैनव्याकरणाभिज्ञो महागुणविभूषितः ॥ ८८ ॥
एवंविधो भवन् सोऽयं दशवक्त्रः स्वकर्मभिः । वाहितः प्रस्थितः कष्टमुन्मार्गेण विमूढधीः ॥८९॥
मरणात्परमं दुःखं न लोके विद्यते परम् । न चिंतयत्ययं पश्य तदप्यत्यंतगर्वितः ॥ ९० ॥
नक्षत्रबलनिर्मुक्तो ग्रहैः सुकुटिलैः स्थितैः । पीड्यमानो रणक्षोणीमाकांक्षत्येष दुर्मनाः ॥ ९१ ॥
प्रतापभंगभीतोऽयं वीरैकरसभावितः । कृतखेदोऽपि शास्त्रेषु युक्तायुक्तं न वीक्षते ॥ ९२ ॥
अतः परं महाराजन् दशग्रीवस्य मानिनः । मनसि स्थितमर्थं ते वदामि शृणु तत्वतः ॥ ९३ ॥
जित्वा सर्वजनं सर्वान् मुक्त्वा पुत्रसहोदरान् । प्रविशामि पुनर्लंकामिदं पश्चात्करोमि च ॥९४॥

उद्वासयामि सर्वस्मिन्नेतस्मिन्वसुधातले । क्षुद्रान् भूगोचरान् श्लाघ्यान् स्थापयामि नभश्चरान् ९५

येनाऽत्र वंशे सुरवर्त्मगानां त्रिलोकनाथाभिनुता जिनेंद्राः ।
चक्रायुधा रामजनार्दनाश्च । जन्म ग्रहीष्यंति तथाऽऽस्मदाद्याः ॥ ९६ ॥
निकाचितं कर्म नरेण येन । यत्तस्य भुंक्ते सफलं नियोगात् ॥
कस्यान्यथा शास्त्ररवौ सुदीप्ते । तमो भवेन्मानुषकौशिकस्य ॥ ९७ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे युद्धनिश्चयकीर्त्तनाभिधानं नाम द्वासप्ततितमं पर्व ।

---

# अथ त्रिसप्ततितमं पर्व ।

ततो दशाननोऽन्यत्र दिने परमभासुरः । आस्थानमंडपे तस्थावुदिते दिवसाधिपे ॥ १ ॥
कुबेरवरुणेशानयमसोमसमैर्नृपैः । रराज सेवितस्तत्र त्रिदशानामिवाधिपः ॥ २ ॥
वृतः कुलोद्गतैर्वीरैः स्थितः केसरिविष्टरे । स बभार परां कांतिं निशाकर इव ग्रहैः ॥ ३ ॥
अत्यंतसुरभिर्दिव्यवस्त्रस्रगनुलेपनः । हारातिहारिवक्षस्कः सुभगः सौम्यदर्शनः ॥ ४ ॥

सदोऽवलोकमानोऽगादिदिति चिंतां महामनाः । मेघवाहनवीरोऽत्र स्वप्रदेशे न दृश्यते ॥ ५ ॥
महेन्द्रविभ्रमो नेतः शक्रजिन्नयनप्रियः । इतो भानुप्रभो भानुकर्णोऽसौ न निरीक्ष्यते ॥ ६ ॥
नेदं सदः सरः शोभां धारयत्यधुना पराम् । निर्महापुरुषांभोजं शेषपुंस्कुमुदांचितम् ॥ ७ ॥
उत्फुल्लपुंडरीकाक्षः स मनोज्ञोऽपि तादृशः । चिंतादुःखविकारेण कृतो दुःसहदर्शनः ॥ ८ ॥
कुटिलभृकुटीबंधघनध्वांतालिकांगणम् । सरोषाशीविषच्छायं कृतांतमिव भीषणम् ॥ ९ ॥
गाढदष्टाधरं स्वांशुचक्रमग्नं समीक्ष्य तम् । सचिवेशा भृशं भीताः किंकर्त्तव्यत्वगह्वराः ॥ १० ॥
ममायं कुपितोऽमुष्य तस्येत्याकुलमानसाः । स्थिताः प्रांजलयः सर्वे धरणीगतमस्तकाः ॥ ११ ॥
मयोग्रशुकलोकाक्षसारणाद्याः सलज्जिताः । परस्परं विनिक्षंतः क्षितिं च विनताननाः ॥ १२ ॥
प्रचलत्कुंडला राजन् ते भटाः पार्श्ववर्तिनः । मुहुर्देव प्रसीदेति त्वरावंतो बभाषिरे ॥ १३ ॥
कैलासकूटकल्पासु रत्नभासुरभित्तिषु । स्थिताः प्रासादमालासु त्रस्तास्तं ददृशुः स्त्रियः ॥१४॥
मणिजालगवाक्षांतन्यस्तसंभ्रांतलोचना । मंदोदरी ददर्शैनं समालोडितमानसा ॥ १५ ॥
लोहिताक्षः प्रतापाढ्यः समुत्थाय दशाननः । अमोघरत्नशस्त्राढ्यमायुधालयमुज्ज्वलम् ॥ १६ ॥
वज्रालयमिवेशानः सुराणां गंतुमुद्यतः । विशतश्च समेतस्य दुर्निमित्तानि जज्ञिरे ॥ १७ ॥

पृष्ठतः क्षुतमग्रे च छिन्नो मार्गो महाहिना । हाही धिङ्मां क यासीति वचांसि तमिवावदत् १८
वातूलप्रेरितं छत्रं भग्नं वैडूर्यदण्डकम् । निपपातोत्तरीयं च बलिभुग्दक्षिणोऽरटत् ॥ १९ ॥
अन्येऽपि शकुनाः क्रूरास्तं युद्धाय न्यवर्त्तयन् । वचसा कर्मणा ते हि न कार्येनानुमोदकाः ॥२०॥
नानाशकुनविज्ञानप्रवीणधिषणा ततः । दृष्ट्वा पापान्महोत्पातानत्यंताकुलमानसाः ॥ २१ ॥
मंदोदरी समाहूय शुकादीन् सारमंत्रिणः । जगाद नोच्यते कस्माद्भवद्भिः स्वहितं नृपः ॥ २२ ॥
किमेतच्चेष्टतेऽद्यापि विज्ञातस्वपरक्रियैः । अशक्ताः कुंभकर्णाद्याः कियद्वंधनमागताः ॥ २३ ॥
लोकपालौजसो वीराः कृतानेकमहाद्भुताः । शत्रुरोधमिमे प्राप्ताः किं नु कुर्वन्ति वः शमम् ॥२४॥
प्रणिपत्य ततो देवीमित्याहुर्मुख्यमंत्रिणः । कृतांतशासनो मानी स्वप्रधानो दशाननः ॥ २५ ॥
वचनं कुरुते यस्य नरस्य परमं हितम् । न स स्वामिनि ! लोकेऽस्मिन् समस्तेऽप्युपलभ्यते २६
या काचिद्भविता बुद्धिर्नृणां कर्मानुवर्त्तिनाम् । अशक्या साऽन्यथाकर्त्तुं सेंद्रैः सुरगणैरपि ॥२७॥
अर्थसाराणि शास्त्राणि नयमौशनसं परम् । जानन्नपि त्रिकूटेन्द्रः पश्य मोहेन बाध्यते ॥ २८ ॥
उक्तः स बहुशोऽस्माभिः प्रकारेण न केन सः । तथापि तस्य नो चित्तमभिप्रेतान्निवर्त्तते ॥२९॥
महापूरकृतोत्पीडः पयोवाहसमागमे । दुष्करो हि नदो धर्त्तुं जीवो वा कर्मचोदितः ॥ ३० ॥

ईशे तथापि को दोषः स्वयं वक्तुं त्वमर्हसि । कदाचित्ते मतिं कुर्यादुपेक्षणमसांप्रतम् ॥ ३१ ॥
इत्युदाहृतमाधाय निश्चितस्वांतधारिणी । परिवेषवती लक्ष्मीरिव संभ्रमवर्त्तिनी ॥ ३२ ॥
स्वच्छायतविचित्रेण पयःसादृश्यधारिणा । अंशुकेनावृता देवी गंतुं रावणमुद्यता ॥ ३३ ॥
मन्मथस्यांतिकं गंतुं तां प्रवृत्तां रतिं यथा । परिवर्गः समालोक्य तत्परस्त्वमुपागतः ॥ ३४ ॥
छत्रचामरधारीभिरंगनाभिः समंततः । आपूर्यत शचीवेन्द्रं व्रजंती प्रवराननाः ॥ ३५ ॥
श्वसंती प्रस्खलंती च किंचिच्छिथिलमेखला । प्रियकार्यरता नित्यमनुरागमहानदी ॥ ३६ ॥
आयांती तेन सा दृष्टा लीलावर्त्तेन चक्षुषा । स्पृशता कवचं मुख्यं शस्त्रजातं च सादरम् ॥३७॥
उक्ता मनोहरे हंसवधूललितगामिनि । रभसेन किमायांत्यास्तव देवि प्रयोजनम् ॥ ३८ ॥
ह्रियते हृदयं कस्माद्दशवक्त्रस्य भामिनि । सन्निधानमिव स्वप्ने प्रस्तावपरिवर्जितम् ॥ ३९ ॥
ततो निर्मलसंपूर्णशशांकप्रतिमानना । संफुल्लांभोजनयना निसर्गोत्तमविभ्रमा ॥ ४० ॥
मनोहरकटाक्षेषु विसर्जनविचक्षणा । मदनावासभूतांगा मधुरस्खलितस्वना ॥ ४१ ॥
दंताधरविचित्रोरुच्छायापिंजरविग्रहा । स्तनहेममहाकुंभभारसन्नमितोदरी ॥ ४२ ॥
स्खलद्वलित्रयात्यंतसुकुमाराऽतिसुंदरी । जगाद प्रणता नाथ प्रसादस्यातिभूमिका ॥ ४३ ॥

प्रयच्छ देव मे भर्तृभिक्षामेहि प्रसन्नताम् । प्रेम्णा परेण धर्मेण कारुण्येन च संगतः ॥ ४४ ॥
वियोगनिम्नगादुःखजले संकल्पवीचिके । महाराज निमज्जंतीं मकामुत्तम धारय ॥ ४५ ॥
कुलपद्मवनं गच्छत्प्रलयं विपुलं परम् । मा पेक्षिष्ठा महाबुद्धे बांधवव्योमभास्करः ॥ ४६ ॥
किंचिदाकर्णय स्वामिन् वचः परुषमप्यदः । क्षन्तुमर्हसि मे यस्माद्दत्तमेव त्वया पदम् ॥ ४७ ॥
अविरुद्धं स्वभावस्थं परिणामसुखावहम् । वचोऽप्रियमपि ग्राह्यं सुहृदामौषधं यथा ॥ ४८ ॥
किमर्थं संशयतुलामारूढोऽस्य तुलामिमाम् । संतापयसि कस्मात्त्वमस्मांश्च निरवग्रहः ॥ ४९ ॥
अद्यापि किमतीतं ते सैव भूमिः पुरातनी । उन्मार्गप्रस्थितं चित्तं केवलं देव वारय ॥ ५० ॥
मनोरथः प्रवृत्तोऽयं नितान्तं तव संकटे । इन्द्रियाश्वान्नियच्छाऽऽशु विवेकदृढरश्मिभृत् ॥ ५१ ॥
उद्धैर्यत्वं गभीरत्वं परिज्ञातं च तत्कृते । गतं येन कुमार्गेण नाथ केनापि नीयसे ॥ ५२ ॥
दृष्ट्वा शरभवच्छायामात्मीया कूपवारिणि । किं प्रवृत्तोऽसि परमामापदायासदायिनि ॥ ५३ ॥
अयशः शालमुत्तुंगं भित्त्वा क्लेशकरं परम् । कदालीस्तंभनिःसारं फलं किमभिवांछसि ॥ ५४ ॥
श्लाघ्यं जलधिगंभीरं कुलं भूयो विभूषय । शिरोऽर्त्तिं कुलजातानां मुंच भूगोचरस्त्रियम् ॥ ५५ ॥
विरोधः क्रियते स्वामिन् वीरैः स्वाप्तिप्रयोजनः । मृत्युं च मानसे कृत्वा परेषामत्मनोऽपि वा ॥

पराजित्यापि संघातं नाथ संबंधिनां तव । कोऽर्थः संपद्यते तस्मात्त्यज सीतामयं ग्रहम् ॥ ५७ ॥
अन्यदास्तां व्रतं तावत्परस्त्रीमुक्तिमात्रतः । पुमान् जन्मद्वये शंसां सुशीलः प्रतिपद्यते ॥ ५८ ॥
कज्जलोपमकारीषु परनारीषु लोलुपः । मेरुगौरवयुक्तोऽपि तृणलाघवमेति ना ॥ ५९ ॥
देवैरनुगृहीतोऽपि चक्रवर्त्तिसुतोऽपि वा । परस्त्रीसंगपंकेन दिग्धो कीर्त्तिं व्रजेत्पराम् ॥ ६० ॥
योऽन्यप्रमदया साकं कुरुते मूढको रतिम् । आशीर्विषभुजंग्याऽसौ रमते पापमानसः ॥ ६१ ॥
निर्मलं कुलमत्यंतं मा यशो मलिनं कुरु । आत्मानं च करोषि त्वं तस्माद्वर्जय दुर्मतिम् ॥ ६२ ॥
धवांतरावलेच्छातः प्राप्ताः नाशं महाबलाः । सुमुखाशनिघोषाद्यास्ते च किं न गताः श्रुतिम् ॥
सितचंदनदिग्धांगो नवजीमूतसन्निभः । मंदोदरीमथावोचद्रावणः कमलेक्षणः ॥ ६४ ॥
अयि कांते किमर्थं त्वमेवं कातरतां गता । भीरुत्वाद्वीरुभावासि नाम हीदं महार्थकम् ॥ ६५ ॥
सूर्यकीर्त्तिरहं नासौ नचाप्यशनिघोषकः । न चेतरो नरः कश्चित्किमर्थमिति भाषसे ॥ ६६ ॥
मृत्युदावानलः सोऽहं शत्रुपादपसंहतेः । समर्पयामि नो सीतां मा भैषीर्मंदमानसे ॥ ६७ ॥
अनया कथया किं ते रक्षायां त्वं नियोजिता । शक्तोऽपि रक्षितुं नाथ मह्यर्पय तां द्रुतम् ॥६८॥
ऊचे मंदोदरी सार्द्धं तया रतिसुखं भवान् । वांछत्यर्पय मे तामित्येवं च वदतेऽत्रपः ॥ ६९ ॥

इत्युक्तेर्ष्याभवं क्रोधं वहती विपुलेक्षणा । कर्णोत्पलेन सौभाग्यमतिरेनमताडयत् ॥ ७० ॥
पुनरीर्ष्यां नियम्यांतर्जगाद वद सुंदर । किं माहात्म्यं त्वया तस्या दृष्टं तां यदीच्छसि ॥७१॥
न सा गुणवती ज्ञाता ललामा न च रूपतः । कलासु च न निष्णाता न च चित्तानुवर्तिनी ७२
ईदृश्याऽपि तया साकं कांत का ते रतौ मतिः । आत्मनो लाघवं शुद्धं भवत्त्वं नानुबुद्ध्यसे ७३
न कश्चित्स्वयमात्मानं शंसन्नाप्नोति गौरवम् । गुणा हि गुणतां यांति गुण्यमानाः परानैः ७४
तदहं नो वदाम्येवं किं नु वेत्सि त्वमेव हि । वराकया सीतया किं वा न श्रीरपि समेति मे ७५
विजहीहि विमोऽस्यंतं सीतासंगेप्सितात्मकम् । माऽनुषंगानले तीव्रे प्राप्तो निःपरिहारके ॥ ७६ ॥
मदवज्ञाकरो वांछन् भूमिगोचरिणीमिमाम् । शिशुर्वैडूर्यमुत्सृज्य काचमिच्छसि मंदकः ॥ ७७ ॥
न दिव्यं रूपमेतस्या जायते मनसि स्थितम् । इमां ग्रामेयकाकारां नाथ कामयसे कथम्॥७८॥
यथा समीहिता कल्पकल्पनाऽतिविचक्षणा । भवामि कीदृशी ब्रूहि जाये त्वच्चित्तहारिणी ॥७९॥
पद्मालया रतिः सद्यः श्रीर्भवामि किमीश्वर । शक्रलोचनविश्रान्तभूमिः किं वा शची प्रभो ८०
मकरध्वजचित्तस्य बंधनी रतिरेव वा । साक्षाद्भवामि किं देव भवदिच्छानुवर्तिनी ॥ ८१ ॥
ततः किंचिदधोवक्त्रो रावणोर्द्धाक्षिवीक्षणः । सव्रीडः स्वैरमूचेऽहं परस्त्रीहस्त्वयोदितः ॥ ८२ ॥

किं मयोपर्चितं पश्य परमाकीर्तिगामिना । आत्मा लघूकृतो मूढः परस्त्रीसक्तचेतसा ॥ ८३ ॥
विषयाऽऽमिषशक्तात्मन् पापभाजनचंचला । धिगस्तु हृदयत्वं ते हृदयक्षुद्रचेष्टिता ॥ ८४ ॥
विलक्ष इव चोत्सर्पिमुखेन्दुस्मितचन्द्रिकः । बुद्धाक्षिकुमुदः कांतामेवमूचे दशाननः ॥ ८५ ॥
देवि वैक्रियरूपेण विनैव प्रकृतिस्थिता । अत्यंतदयिता त्वं मे किमन्यस्त्रीभिरुत्तमे ॥ ८६ ॥
लब्धप्रसादया देव्या ततो मुदितचित्तया । भाषितं देव किं भानोर्दीपेद्योताय युज्यते ॥ ८७ ॥
दशानन सुहृन्मध्ये यन्मयोक्तमिदं हितम् । अन्यानपि बुधान्पृच्छ वेद्मि नेत्यबला सती ॥८८॥
जानन्नपि नयं सर्वं प्रमादं दैवयोगतः । जंतुना हितकामेन बोधनीयो न किं प्रभुः ॥ ८९ ॥
आसीद्विष्णुरसौ साधुर्विक्रियाविस्मृतात्मकः । सिद्धांतगीतिकाभिः किं न प्रबोधमुपाहृतः ॥९०॥
अयं पुमानियं स्त्रीति विकल्पोऽयममेधसाम् । सर्वतो वचनं साधु समीहंते सुमेधसः ॥ ९१ ॥
स्वल्पोऽपि यदि कश्चित्ते प्रसादो मयि विद्यते । ततो वदामि ते मुंच परस्त्रीरतमार्गणम् ॥ ९२ ॥
गृहीत्वा जानकीं कृत्वा त्वामेव च समाश्रयम् । प्रत्यापयामि गत्वाऽहं रामं भवदनुज्ञया ॥९३॥
उपगृह्य सुतौ तेऽहं शत्रुजिन्मेघवाहनौ । भ्रातरं चोपनेष्यामि किं भूरिजनहिंसया ॥ ९४ ॥
एवमुक्तो भृशं क्रुद्धो रक्षसामधिपोऽवदत् । गच्छ गच्छ द्रुतं यत्र न पश्यामि मुखं तव ॥ ९५ ॥

अहो त्वं पंडितंमन्या यद्विहायोन्नतिं निजाम् । परपक्षप्रशंसायां प्रवृत्ता दीनचेष्टिता ॥ ९६ ॥
त्वं वीरजननी भूत्वा ममाग्रमहिषी सती । या वक्षि क्लीबमेवं तत्कातरास्ति न ते परा ॥ ९७ ॥
एवमुक्ता जगौ देवी शृणु यद्गदितं बुधैः । हलिनां चक्रिणां जन्म तथा च प्रतिचक्रिणाम् ॥ ९८ ॥
विनयोऽथ त्रिपृष्टश्च द्विपृष्टोऽचल एव च । स्वयंभूरिति च ख्यातस्तथा च पुरुषोत्तमः ॥ ९९ ॥
नरसिंह प्रतीतिश्च पुंडरीकश्च विश्रुतः । दत्तश्चेति जगद्वीरा हरयोऽस्मिन् युगे स्मृताः ॥ १०० ॥
समये तु महावीर्यौ पद्मनारायणौ स्मृतौ । यौ तौ ध्रुवमिमौ जातौ दशानन समागतौ ॥ १०१ ॥
प्रत्यनीका ययुग्रीवतारकाद्या यथागताः । नाशमेभ्यस्तथा नूनं त्वमस्माद्गंतुमिच्छसि ॥ १०२ ॥
तावदाशंक्यते नाथ वक्तुं तत्त्वं हिते रतम् । यावत्प्रज्ञापनीयस्य निश्चयांतो न दृश्यते ॥ १०३ ॥
तत्कार्यं बुद्धियुक्तेन परत्रेह च यत्सुखम् । ननु दुःखांकुरोत्पत्तिकारणं कुत्सनास्पदम् ॥ १०४ ॥
विषयैः सुचिरं भुक्तैर्यैः पुमाँस्तृप्तिमागतः । त्रैलोक्येऽपि वदैकं तं पापमोहित रावण ॥ १०५ ॥
भुक्त्वापि सकलं भोगं मुनित्वं चेन्न सेवसे । गृहिधर्मरते भूत्वा कुरु दुःखविनाशनम् ॥ १०६ ॥
अणुव्रतासिदीप्तांगो नियमच्छत्रशोभितः । सम्यग्दर्शनसन्नाहः शीलकेतनलक्षितः ॥ १०७ ॥
भावनाचन्दनार्द्राङ्गः सुप्रबोधशरासनः । वशेंद्रियबलोपेतः शुभध्यानप्रतापवान् ॥ १०८ ॥

मर्यादांकुशसंयुक्तो निश्चयानेकपस्थितः । जिनभक्तिमहाशक्तिर्जय दुर्गतिवाहिनीम् ॥ १०९ ॥
इयं हि कुटिला पाप महावेगा सुदुःसहा । बुधेन जीयते जित्वा तामेतां सुखितो भव ॥११०॥
हिमवन्मंदराद्येषु पर्वतेषु जिनालयान् । पूजयन् वशया सार्द्धं जंबूद्वीपं मया चर ॥ १११ ॥
अष्टादशसहस्रस्त्रीपाणिपल्लवलालितः । क्रीड मंदरकुंजेषु मंदाकिन्यास्तटेषु च ॥ ११२ ॥
ईप्सितेषु प्रदेशेषु रमणीयेषु सुंदर । विद्याधरयुगं स्वेच्छं करोति विहृतिं सुखम् ॥ ११३ ॥
लब्धवर्णे न युद्धेन किंचिदस्ति प्रयोजनम् । प्रसीद कुरु मे वाक्यं सर्वथैव सुखावहम् ॥ ११४ ॥
क्ष्वेडवद्दुर्जनं निंद्यं परमानर्थकारणम् । जनवादमिमं मुंच किं मज्जस्ययशोंबुधौ ॥ ११५ ॥
इति प्रसादयंती सा बद्धपाण्यब्जकुड्मला । पपात पादयोस्तस्य वांछंती परमं हितम् ॥ ११६ ॥
विहसन्नथ तामूचे भीतां भयविवर्जितः । उत्थाप्य भीतिमेवं किं गता त्वं कारणं विना ॥११७॥
मत्तोऽस्ति नाधिकः कश्चिद्वरारोहे नरोत्तमः । अलीका भीरुता केयं स्त्रैणादालंब्यते त्वया ११८
गदितं यत्त्वयाऽन्यस्य पक्षस्योद्भवसूचनम् । नारायण इति स्पष्टं तव देवि निरूप्यते ॥ ११९ ॥
नामनारायणाः संति बलदेवाश्च भूरिशः । नामोपलब्धिमात्रेण कार्यसिद्धिः किमिष्यते ॥१२०॥
तिर्यक् कश्चिन्मनुष्यो वा कृतसिद्धाभिधानकः । वाङ्मात्रतः स किं सैद्धं सुखमाप्नोति कातरे ॥

रथनूपुरधामेशो यथेंद्रोऽनिन्द्रतां मया । नीतस्तथेममीक्षस्व त्वमनारायणं कृतम् ॥ १२२ ॥
इत्यूर्जितमुदाहृत्य प्रतिशत्रुः प्रतापवान् । स्वप्रभापटलच्छन्नशरीरः परमेश्वरः ॥ १२३ ॥
क्रीडागृहमुपाविक्षन्मंदोदर्या समन्वितः । श्रियेव सहितः शक्रो यथा कालाश्रितक्रियः ॥१२४॥
सायाह्नसमये तावत्संध्यानिर्गतमंडलः । सविता संहरत्यंशून्कषायानिव संयतः ॥ १२५ ॥
संध्याबलिविदष्टौष्टपुरुसंरंभलोहितः । निर्भर्त्सयन्निव दिनं गतः क्वापि दिवाकरः ॥ १२६ ॥
बद्धपद्मांजलिपुटा नलिन्योऽस्तं गतं रविम् । विरुतैश्चक्रवाकानां दीनमाकारयन्निव ॥ १२७ ॥
अनुमार्गेण च प्राप्ता ग्रहनक्षत्रवाहिनी । विक्षेपेणेव सरितुं मृगांकेन विसर्जिता ॥ १२८ ॥
प्रदोषे तत्र संवृत्ते दीपिका रत्नदीपिता । प्रभाभिर्नगरी लंका रेजे मेरोः शिखा यथा ॥ १२९ ॥
प्रियं प्रणयिनी काचिदालिंग्योचे सवेपथुः । अप्येकां शर्वरीमेतां मानयामि त्वया सह ॥१३०॥
उद्गमद्यूथिकाऽऽमोदमधुमत्ता विघूर्णित्ता । पर्यस्ता काचिदीशांके पुष्पवृष्टिः सुकोमला ॥ १३१ ॥
अब्जतुल्यक्रमा काचित्पीवरोरुपयोधरा । वपुष्मती वपुष्मंतं दयिता दयितं ययौ ॥ १३२ ॥
जग्राह भूषणं काचित्स्वभावेनैव सुंदरी । कुर्वन्ती हेमरत्नानां चारुभावा कृतार्थताम् ॥ १३३ ॥
सुविद्याधरयुग्मानि प्रचिक्रीडुर्यथेप्सितम् । भवने भवने भांति सदृशं भोगभूमिषु ॥ १३४ ॥

गीतानंग इवालापैर्वीणावंशादिनिःस्वनैः । जल्पतीव तदा लंका मुदिता क्षणदाऽऽगमे ॥ १३५ ॥
तांबूलगंधमाल्याद्यैरुपभोगैः सुरोपमैः । पिबंतो मदिरामन्ये रमंते दयितान्विताः ॥ १३६ ॥
काचित्स्ववदनं दृष्ट्वा चषकप्रतिबिंबितम् । ईर्ष्ययेंदीवरेणेशं प्राप्ता मदमताडयत् ॥ १३७ ॥
मदिरायां परिन्यस्तं नारीभिर्मुखसौरभम् । लोचनेषु निजो रागस्तासां मदिरया कृतः ॥१३८॥
तदेव वस्तु संसर्गाद्धत्ते परमचारुताम् । तथाहि दयितापीतं शेषं स्वाद्वभवन्मधु ॥ १३९ ॥
मदिरापतितां कांचिदात्मीयां लोचनद्युतिम् । गृह्णन्तीन्दीवरप्रीत्या कांतेन हसिता चिरम् १४०
अप्रौढापि सती काचिच्छनकैः पायिता सुराम् । जगाम प्रौढतां बाला मन्मथोचितवस्तुनि १४१
लज्जासखीमपाकृत्य तासामत्यन्तमीप्सितम् । कृतं कादंबरीसख्या प्रियेषु क्रीडितं परम् ॥१४२॥
घूर्णमानेक्षणं भूयः कलं स्खलितजल्पितम् । चेष्टितं विकटं स्त्रीणां पुंसां जातं मनोहरम् ॥ १४३ ॥
दंपती मधु वांछंतौ पीतशेषं परस्परम् । चक्रतुः प्रसृतोल्लापौ चषकस्य गतागतम् ॥ १४४ ॥
चषकेऽपि गतप्रीतिः कांतामालिंग्य सुंदरः । गंडूषमदिरां कश्चित्पपौ मुकुलितेक्षणः ॥ १४५ ॥
आसीद्विद्रुमकल्पानां किंचित्स्फुरणसेविनाम् । मधुक्षालितरागाणामधराणां परा द्युतिः ॥१४६॥
दंताधरक्षणच्छायासंसर्गिचषके मधु । शुक्लारुणसितांभोजयुक्तं सर इवाभवत् ॥ १४७ ॥

गोपनीयानदर्शन्त प्रदेशान् सुरया स्त्रियः । वाक्यान्यभाषणीयान्यभाषंत च गतत्रपाः ॥१४८॥
चंद्रोदयेन मधुना यौवनेन च भूमिकाम् । आरूढो मदनस्तेषां तासां चात्यंतमुन्नताम् ॥१४९॥
कृतक्षतं ससीत्कारं गृहीत्वौष्ठं समाकुलम् । सुरतं भावियुद्धस्य मंगलग्रहणायितम् ॥ १५० ॥
एषोऽपि रक्षसामिन्द्रश्चारुचेष्टितसंगतः । सममानयदुद्यश्रीरन्तःपुरमशेषतः ॥ १५१ ॥
मुहुर्मुहुः समालिंग्य स्नेहान्मंदोदरी विभोः । अपश्यद्वदनं तृप्तिमगच्छंती सुलोचना ॥ १५२ ॥
इतः समरसंवृत्तात्परिप्राप्तजयस्य ते । आगतस्य सदा कांत करिष्याम्यवगूहनम् ॥ १५३ ॥
मोक्ष्यामि क्षणमप्येकं न त्वां भूयो मनोहर । लतेव बाहुबलिनं सर्वांगकृतसंगतिः ॥ १५४ ॥
वदंत्यामेवमेतस्यां प्रेमकातरचेतसि । रुतं ताम्रशिखश्चक्रे समाप्तिं च निशा गता ॥ १५५ ॥
नक्षत्रदीधितिभ्रंशे प्राप्ते संध्यारुणागमे । गीतध्वनिरभूद्रम्यो भवने भवनेऽर्हताम् ॥ १५६ ॥
कालाग्निमंडलाकारो रश्मिभिश्छादयन् दिशः । जगामोदयसंबंधं भास्करो लोकलोचनः ॥१५७॥
प्रभातसमये देव्यो व्यग्राः कृच्छ्रेण सांत्विताः । दयितेन मनस्यूहुः किं किमित्यतिदुःसहम् १५८
गंभीरस्ताडिता भेर्यः शंखशब्दपुरःसराः । रावणस्याऽऽज्ञया युद्धसंज्ञादानविचक्षणाः ॥ १५९ ॥
परस्परमहंकारं वहंतः परमोद्धताः । प्रहृष्टा निर्ययुर्योधा ययुद्विपरथस्थिताः ॥ १६० ॥

असिचापगदाकुंतभासुराटोपसंकटाः । प्रचलच्चामरच्छत्रच्छायामंडलशोभिनः ॥ १६१ ॥
आशुकारसमुद्युक्ताः सुराकाराः प्रतापिनः । विद्याधराधिपा योद्धुं निर्ययुः प्रवरर्द्धयः ॥ १६२ ॥
तत्र पंकजनेत्राणां कारुण्यं पुरयोषिताम् । निरीक्ष्य दुर्जनस्यापि चित्तमासीत्सुदुःखितम् ॥१६३॥
निर्गतो दयितां कश्चिदनुव्रज्यापरायणाम् । अयि मुग्धे निवर्त्तस्व व्रजामि सुखमित्यवाक् ॥१६४॥
उष्णीषं भो गृहाणेति व्याजादभिमुखं प्रियम् । चक्रे काचिन्मृगीनेत्रा वक्त्रदर्शनलालसा ॥१६५॥
दृष्टिगोचरतोऽतीते प्रिये काचिद्वरांगना । पतंती सह बाष्पेण सखीभिर्मूर्च्छिता वृता ॥ १६६ ॥
निवृत्त्य काचिदाश्रित्य शयनीयस्य पट्टिकाम् । तस्थौ मौनमुपादाय प्रस्तोपमशरीरिका ॥१६७॥
सम्यग्दर्शनसंपन्नः शूरः कश्चिदणुव्रती । पृष्ठतो वीक्ष्यते पत्न्याः पुरस्त्रिदशकन्यया ॥ १६८ ॥
पूर्वं कर्णेन्दुवत्सौम्या बभूवुस्तुमुलागमे । शूराः कवचितोरस्काः कृतांताकारभासुराः ॥ १६९ ॥
चतुरंगेन सैन्येन चापछत्रादिसंकुलः । संप्राप्तस्तत्र मारीचो नैगमे क्षीबतेजसा ॥ १७० ॥
असौ विमलचंद्रश्च धनुष्मान् विमलांबुदः । सुनंदानंदजंदाद्याः शतशोऽथ सहस्रशः ॥ १७१ ॥
विद्याविनिर्मितैर्दिव्यै रथैर्हुतवहप्रभैः । रेजुरग्निकुमाराभा भासयंतो दशो दिश ॥ १७२ ॥
केचिद्दीप्तास्त्रसंपूर्णैर्हिमवत्संनिभैरिभैः । ककुभश्छादयंति स्म सविद्युद्भिरिवांबुदैः ॥ १७३ ॥

केचिद्वरतुरंगौघैर्दशार्धायुतसंकटाः । सहसा ज्योतिषां चक्रं चूर्णयंतीव वेगिनः ॥ १७४ ॥
वृहद्विविधवादित्रैर्हयानां हेषितैस्तथा । गजानां गर्जितारावैः पदात्याकारितैरपि ॥ १७५ ॥
योधानां सिंहनादैश्च जयशब्दैश्च वंदिनाम् । गीतैः कुशीलवानां च समुत्साहनकोविदैः ॥१७६॥
इत्यन्यैश्च महानादैरेकीभूतैः समंततः । विननर्देव गगनं युगांतजलदाकुलम् ॥ १७७ ॥

जनेशिनोऽश्वरथपदातिसंकुला । परस्परातिशयविभूतिभासुराः ॥
बृहद्भुजाः कवचिततुंगवक्षस–स्तडित्प्रभाः प्रववृतिरे जयैषिणः ॥ १७८ ॥
पदातयोऽपि करवालचंचलाः । पुरो ययुः प्रभुपरितोषणैषिणः ॥
समैश्च तैर्विविधसमूहिभिः कृतं । निरर्गलं गगनतलं दिशस्तथा ॥ १७९ ॥
इति स्थिते विगतभवाभिसंचिते । शुभाशुभे त्रिभुवनभाजि कर्मणि ॥
जनः करोत्यतिबहुधानुचेष्टितं । न तं क्षमो रविरपि कर्तुमन्यथा ॥ १८० ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे उद्योगाभिधानं नाम त्रिसप्ततितमं पर्व ।

---

# अथ चतुःसप्ततितमं पर्व ।

विधिक्रमेण पूर्वेण सादरो मुदमुद्वहन् । आपृच्छत त्रिकूटेशो दयितामित्यपि प्रियाम् ॥ १ ॥
का जानाति प्रिये भूयो दर्शनं चारुदर्शने । महाप्रतिभये युद्धे किं भवेन्न भवेदिति ॥ २ ॥
ऊचुस्तं दयिता नाथ नंद नंद रिपूञ्जय । द्रक्ष्यामः सर्वथा भूयः संख्यतस्त्वां समागतम् ॥ ३ ॥
इत्युक्तो दयितानेत्रसहस्रैरभिवीक्षितः । निर्जगाम बहिर्नाथो रक्षसां विकटप्रभुः ॥ ४ ॥
अपश्यच्च शरद्भानुभास्वरं बहुरूपया । विद्यया कृतनिर्माणमैन्द्रं नाम महारथम् ॥ ५ ॥
युक्तं दंतिसहस्रेण प्रावृषेण्यघनत्विषा । प्रभापरिकरं मेरुं जिगीषंतमिव स्थितम् ॥ ६ ॥
मत्तास्ते करिणो गंडप्रगलद्दाननिर्झराः । सितपीतचतुर्दंष्ट्राः शंखचामरशोभिनः ॥ ७ ॥
मुक्तादामसमाकीर्णमहाघंटानिनादिताः । ऐरावतसमा नानाधातुरागविभूषिताः ॥ ८ ॥
दुर्दान्ता विनयाधानभूमयो घनवर्जिताः । विरेजुः कालमेघौघसन्निभाश्चारुविभ्रमाः ॥ ९ ॥
मनोहराभकेयूरविदष्टभुजमस्तकः । तमसौ रथमारूढः शुनासीरसमद्युतिः ॥ १० ॥
विशालनयनस्तत्र स्थितो निरुपमाकृतिः । ओजसा सकलं लोकमग्रस्तष्टेव रावणः ॥ ११ ॥

सहस्रैर्दशभिः स्वस्य सदृशैः खेचराधिपैः । वियद्वल्लभनाथाद्यैः स्वहितैः कृतमंडलः ॥ १२ ॥
महाबलैः सुदच्छायैरभिप्रायानुवेदिभिः । क्रुद्धः सुग्रीववैदेहौ प्रत्यभीयाय रावणः ॥ १३ ॥
दृष्ट्वा दक्षिणतोऽत्यन्तभीमनिःस्वानकारिणः । भल्लूका गगने गृध्रा भ्रमंति छन्नभास्कराः ॥१४॥
जानंतोऽपि निमित्तानि कथयंति महाक्षयम् । शौर्यमानोत्कटाः क्रुद्धा ययुरेव महानराः ॥ १५ ॥
पद्माभोऽपि स्वसैन्यस्थः पर्यपृच्छत्सविस्मयः । भो भो मध्येयमेतस्या नगर्यास्तेजसा ज्वलन् १६
जांबूनदमयैः कूटैः सुविशालैरलंकृतः । सतडिन्मेघसंघातच्छायः किंनामको गिरिः ॥ १७ ॥
पृच्छतेऽस्मै सुषेणाद्या संमोहं समुपागताः । न शेकुः सहसा वक्तुमपृच्छच्च स तान्मुहुः ॥ १८ ॥
ब्रूत किं नामधेयोऽयं गिरिरत्र निरीक्ष्यते । अगदञ्जाम्बवाद्यास्तमथो वेपथुमंथराः ॥ १९ ॥
दृश्यते पद्मनागोऽयं रथोऽयं बहुरूपया । विद्यया कल्पितोऽस्माकं मृत्युः स ज्वरकोविदः ॥२०॥
किष्किन्धराजपुत्रेण योऽसौ गत्वाभिरोषितः । रावणोऽवस्थितः सोऽत्र महामायामयोदयः ॥२१॥
श्रुत्वा तद्वचनं तेषां लक्ष्मणः सारथिं जगौ । रथं समानय क्षिप्रमित्युक्तः स तथाऽकरोत् ॥२२॥
ततः क्षुब्धार्णवस्वाना भीमा भेर्यः समाहताः । शंखकोटिस्वनोन्मिश्राः शेषवादित्रसंगताः॥२३॥
श्रुत्वा तं निनदं हृष्टा भटा विकटचेष्टिताः । सन्नद्धा बद्धतूणीरा लक्ष्मणस्यांतिके स्थिताः॥२४॥

मा भैषीर्दयिते तिष्ठ निवर्त्तस्व शुचं त्यज । अहं लंकेश्वरं जित्वा प्रत्येम्यद्य तवांतिकम् ॥ २५ ॥
इति गर्वोत्कटा वीरा समाश्वास्य वरांगनाः । अंतःपुरात्सुसन्नद्धा विनिर्जग्मुर्यथायथम् ॥ २६ ॥
परस्परप्रतिस्पर्द्धावेगचोदितवाहनाः । रथादिभिर्ययुर्योधाः शस्त्रावेक्षणचंचलाः ॥ २७ ॥
रथं महेभसंयुक्तं गंभीगेदारनिस्वनम् । भूतस्वनः समारूढो विरेजे खेचराधिपः ॥ २८ ॥
तेनैव विधिनाऽन्येपि विद्याधरजनाधिपाः । सहर्षाः प्रस्थिता योद्धुं क्रुद्धा लंकेश्वरं प्रति ॥ २९ ॥
तं प्रति प्रसृता वीराः क्षुब्धांभोधिसमाकृतिम् । संघट्टं परमं प्रापुर्गंगातुंगोर्मिसन्निभाः ॥ ३० ॥
ततः शैतयशोव्याप्तभुवनौ परमाकृती । स्वावासतो विनिष्क्रांतौ युद्धार्थौ रामलक्ष्मणौ ॥ ३१ ॥
रथे सिंहयुते चारौ संबद्धकवचो बली । नवोदित इवादित्यः पद्मनाभो व्यराजत ॥ ३२ ॥
गारुडं रथमारूढो वैनतेयमहाध्वजः । समुन्नतांबुदच्छायश्छायाश्यामलितांबरः ॥ ३३ ॥
मुकुटी कुंडली धन्वी कवची सायकी कुणी । संध्यासक्तांजनांगाभ—सुमित्राजो व्यराजत ॥ ३४ ॥
महाविद्याधराश्चान्ये भालंकारपुरःसराः । योद्धुं श्रेणिक निर्याता नानायानविमानगाः ॥ ३५ ॥
गमने शकुनास्तेषां कृतकोमलनिस्वनाः । आनंदयन्यथापूर्वमिष्टदेशनिवेशिनः ॥ ३६ ॥
तेषामभिमुखः क्रुद्धो महाबलसमन्वितः । प्रययौ रावणो वेगी महादावसमाकृतिः ॥ ३७ ॥

गंधर्वाप्सरसस्तेषां बलद्वितयवर्तिनाम् । नभःस्थिता नृवीराणां पुष्पाणि मुमुचुर्मुहुः ॥ ३८ ॥
पादातैः परिता गुप्ता निपुणाधोरणेरिताः । अंजनाद्रिसमाकाराः प्रसस्रुर्मत्तदंतिनः ॥ ३९ ॥
दिवाकररथाकारा रथाः प्रचलवाजिनः । युक्ताः सारथिभिः सांद्रनादाः परमरंहसः ॥ ४० ॥
ववल्गुः परमं हृष्टाः समुल्लासितहेतयः । पदातयो रणक्षोण्यां सगर्वा बद्धमंडलाः ॥ ४१ ॥
स्थूरीपृष्ठसमारूढाः खड्गर्ष्टिप्रासपाणयः । खेटकाच्छादितोरस्काः संख्यक्ष्मां विविशुर्भटाः ॥४२॥
आस्तृणंत्यभिधावंति स्पर्द्धन्ते निर्जयन्ति च । जीयंते घ्नंति हन्यंते कुर्वन्ति भटगर्जितम् ॥ ४३ ॥
तुरगाः क्वचिदुद्दीप्ता भ्रमंत्याकुलमूर्त्तयः । कचमुष्टिगदायुद्धं प्रवृत्तं गहनं क्वचित् ॥ ४४ ॥
केचित्खड्गक्षतोरस्काः केचिद्विशिखताडिताः । केचित्कुंताहताः शत्रुं ताडयंति पुनस्तथा ॥४५॥
सततं लालितैः केचिदभीष्टार्थानुसेवनैः । इंद्रियैः परिमुच्यंते कुमित्रैरिव भूमिगाः ॥ ४६ ॥
गलदंत्रचयाः केचिदनावृत्योरुवेदनाम् । पतंति शत्रुणा सार्धं दंतनिष्पीडिताधराः ॥ ४७ ॥
प्रासादशिखरे देव कुमारप्रतिमौजसः । प्रचिक्रीडुर्महाभोगा ये कांतातनुलालिताः ॥ ४८ ॥
ते चक्रकनकच्छिन्नाः संग्रामक्षितिशायिनः । भक्ष्यंते विकृताकारा गृध्रगोमायुपंक्तिभिः ॥ ४९ ॥
नखक्षतकृताकूता कामिनीव शिवा भटम् । वहंती संगमप्रीतिं प्रसुप्तमुपसर्पति ॥ ५० ॥

स्फुरणेन पुनर्ज्ञात्वा जीवतीति ससंभ्रमा । निवर्तते यथा भीता डाकिनी मंत्रवादिनः ॥ ५१ ॥
शूरं विज्ञाय जीवंतं विभ्यती विहगी शनैः । दुष्टनारीव साशंका चलनेत्रासर्पति ॥ ५२ ॥
शुभाशुभा च जंतूनां प्रकृतिस्तत्र लक्ष्यते । प्रत्यक्षाद्विशिष्टैव भंगेन विजयेन च ॥ ५३ ॥
केचित्सुकृतसामर्थ्याद्विजयंते बहूनपि । कृतपापाः प्रपद्यंते बहवोऽपि पराजयम् ॥ ५४ ॥
मिश्रितं मत्सरेणापि तयो यैरर्जितं पुरा । ते जयंति विजीयंते तत्र प्रलयमागते ॥ ५५ ॥
धर्मो रक्षति मर्माणि धर्मो जयति दुर्जयम् । धर्मः संजायते पक्षः धर्मः पश्यति सर्वतः ॥ ५६ ॥
रथैरश्वयुतैर्दिव्यैरिभैर्भूधरसन्निभैः । अश्वैः पवनरंहोभिर्भृत्यैरसुरभासुरैः ॥ ५७ ॥
न शक्यो रक्षितुं पूर्वं सुकृतेनोज्झितो नरः । एको विजयते शत्रुं पुण्येन परिपालितः ॥ ५८ ॥
एवं संयति संवृत्ते प्रवीरभटसंकटे । योधा व्यवहिता योधैरवकाशं न लेभिरे ॥ ५९ ॥
उत्पतद्भिः पतद्भिश्च भटैरायुधभासुरैः । उत्पातघनसंछन्नमिव जातं नभस्तलम् ॥ ६० ॥
मारीचचंद्रनिकरवज्राक्षशुकसारणैः । अन्यैश्च राक्षसाधीशैर्बलमुत्सारितं द्विषाम् ॥ ६१ ॥
श्रीशैलेन्दुमरीचिभ्यां नीलेन कुमुदेन च । तथा भूतस्वनाद्यैश्च विध्वस्तं रक्षसां बलम् ॥ ६२ ॥
कुंदः कुंभो निकुंभश्च विक्रमः क्रमणस्तथा । श्रीजंबुमालिवीरश्च सूर्यारो मकरध्वजः ॥ ६३ ॥

तथाऽशनिरथाद्याश्च राक्षसीया महानृपाः । उत्थिता वेगिनो योधास्तेषां साधारणोद्यताः ॥६४॥
भूधराचलसंमेदविकालकुटिलांगदाः । सुषेणकालचक्रोर्मितरंगाद्याः कपिध्वजाः ॥ ६५ ॥
तेषामभिमुखीभूता निजसाधारणोद्यताः । नालाक्ष्यत भटः कश्चित्तदा प्रतिभटोज्झितः ॥ ६६ ॥
अंजनायाः सुतस्तस्मिन्नारुह्य द्विपयोजितम् । रथं क्रीडति पद्माढ्ये सरसीव महागजः ॥ ६७ ॥
तेन श्रेणिक शूरेण रक्षसां सुमहद्बलम् । कृतमुन्मत्तकीभूतं यथारुचितकारिणा ॥ ६८ ॥
एतस्मिन्नंतरे क्रोधसंगदूषितलोचनः । प्राप्तो मयमहादैत्यः प्रजहार मरुत्सुतम् ॥ ६९ ॥
उद्धृत्य विशिखं सोऽपि पुंडरीकनिभेक्षणः । शरवृष्टिभिरुग्राभिरकरोद्विरथं मयम् ॥ ७० ॥
स रथांतरमारुह्य पुनर्योद्धुं समुद्यतः । श्रीशैलेन पुनस्तस्य सायकैर्दलितो रथः ॥ ७१ ॥
मयं विह्वलमालोक्य विद्यया बहुरूपया । रथं दशमुखः सृष्टं प्रहिणोतिस्म सत्वरम् ॥ ७२ ॥
स तं रथं समारुह्य नाम्ना प्रज्वलितोत्तमम् । संबाध्य विरथं चक्रे हनूमंतं महाद्युतिः ॥ ७३ ॥
धावमानां समालोक्य वानरध्वजिनीं भटाः । जगुःप्राप्तमिदं नाम कृतात्यंतविपर्ययम् ॥ ७४ ॥
वार्तिं व्यस्त्रकृतं दृष्ट्वा वैदेहः समधावत । कृतो विस्यंदनः सोऽपि मयेन शरवर्षिणा ॥ ७५ ॥
ततः किष्किन्धराजोऽस्य कुपितोऽवस्थितः पुरः । निरस्त्रोऽसावपि क्षोणीं तेन दैत्येन लंभितः ॥

ततो मयं पुरश्चक्रे सुमंरुन्धो विभीषणः । तयोरभूत्परं युद्धमन्योन्यशरताडितम् ॥ ७७ ॥
विच्छिन्नकवचं दृष्ट्वा कैकसीनंदनं ततः । रक्ताशोकद्रुमच्छायं प्रसक्तरुधिरस्रुतिम् ॥ ७८ ॥
निरीक्ष्योन्मत्तभूतं च परित्रस्तं पराङ्मुखम् । कपिध्वजबलं शीर्णं रामो योद्धुं समुद्यतः ॥ ७९ ॥
विद्याकेसरियुक्तं च रथमारुह्य सत्वरम् । मा भैषीरिति सस्वानो दधाव विहितस्मितः ॥ ८० ॥
स तडित्प्रावृडंभोदघनसंघट्टसंनिभम् । विवेश परसैन्यं स बालार्कप्रतिमद्युतिः ॥ ८१ ॥
तस्मिन्परबलध्वंसं नरेंद्रे कर्तुमुद्यते । वातिवैदेहसुग्रीवकैकसेया धृतिं ययुः ॥ ८२ ॥
शाखामृगबलं भूयः कर्तुं युद्धं समुद्यतम् । रामतो बलमासाद्य त्यक्तनिःशेषसाध्वसम् ॥ ८३ ॥
प्रवृत्ते शस्त्रसंपाते सुराणां रोमहर्षणे । लोकोऽन्य इव संजातस्तदालोकविवर्जितः ॥ ८४ ॥
ततः पद्मो मयं बाणैर्लग्नश्छादयितुं भृशम् । स्वल्पेनैव प्रयासेन वज्रीव चमरासुरम् ॥ ८५ ॥
मयं विह्वलितं दृष्ट्वा नितांतं रामसायकैः । दधाव रावणः क्रुद्धः कृतांत इव तेजसा ॥ ८६ ॥
अथ लक्ष्मणवीरेण भाषितः परमौजसा । प्रस्थितः क्व मया दृष्टो भवानद्यापि भो खग ॥ ८७ ॥
तिष्ठ तिष्ठ रणं यच्छ क्षुद्र तस्कर पापक । परस्त्रीदीपशलभ पुरुषाधम दुष्क्रिय ॥ ८८ ॥
अद्य प्रकरणं तत्ते करोमि कृतसाहसम् । कुर्यान्नवापि यत्क्रुद्धः कृतांतोऽपि कुमानसः ॥ ८९ ॥

अयं राघवदेवोऽद्य समस्तवसुधापतिः । चौरस्य ते वधं कर्तुं समादिशति धर्मधीः ॥ ९० ॥
अवोचल्लक्ष्मणं कोपी विंशत्यर्धाननस्ततः । मूढ ते किं न विज्ञातं लोके प्रख्यातमीदृशम् ॥९१॥
यच्चारु भूतले सारं किंचिद्द्रव्यं सुखावहम् । अर्हामि तदहं राजा तच्चापि मयि शोभते ॥ ९२ ॥
न गजस्योचिता घंटा सारमेयस्य शोभते । तदत्र का कथाऽद्यापि योग्यद्रव्यसमागमे ॥ ९३ ॥
त्वया मानुषमात्रेण यत्किंचनविलापिना । विधातुमसमानेन युद्धं दीनेन लज्जते ॥ ९४ ॥
विप्रलब्धस्तथाप्येतैर्युद्धं चेत्कर्तुमर्हसि । मव्यक्तं काललब्धोऽसि निर्वेदीवासि जीविते ॥ ९५ ॥
ततो लक्ष्मीधरोऽवोचद्वेद्मि त्वं यादृशः प्रभुः । अद्य ते गर्जितं पाप हरामि किमिहोदितैः ॥९६॥
इत्युक्तो रावणो बाणैः स बाणैः कैकयीसुतम् । प्रावृषेण्यघनाकारो गिरिकल्पं निरुद्धवान् ॥९७॥
वज्रदंडैः शरैस्तस्य विशल्यारमणः शरान् । अदृष्टचापसंबंधैरंतराले न्यवारयत् ॥ ९८ ॥
छिन्नैर्विपाटितैः क्षोदं गतैश्च विशिखोत्करैः । द्यौश्च भूमिश्च संजाता विवेकपरिवर्जिता ॥ ९९ ॥
कैकयीसूनुना व्यस्त्रः कैकसीनंदनः कृतः । माहेन्द्रमस्त्रमुत्सृष्टं चकार गगनासनम् ॥ १०० ॥
संप्रयुज्य समीरास्त्रमस्त्रक्रमविपश्चिता । सौमित्रिणा परिध्वंसं तं नीतं क्षणमात्रतः ॥ १०१ ॥
भूयः श्रेणिक संरंभस्फुरिताननतेजसा । रावणेनास्त्रमाग्नेयं क्षिप्तं ज्वलितसर्वदिक् ॥ १०२ ॥

लक्ष्मीधरेण तच्चापि वारुणास्त्रप्रयोगतः । निर्वापितं निमेषेण स्थितं कार्यविवर्जितम् ॥ १०३ ॥
कैकयेयस्ततः पापमस्त्रं चिक्षेप रक्षसि । रक्षसा तच्च धर्मास्त्रप्रयोगेण निवारितम् ॥ १०४ ॥
ततोऽस्त्रमिंधनं नाम लक्ष्मणेन प्रयुज्यते । रोंधनेनैव तं नीतं रावणेन हतार्थताम् ॥ १०५ ॥
फलासारं विमुंचद्भिः प्रसूनपटलान्वितम् । गगनं वृक्षसंघातैरत्यन्तगहनीकृतम् ॥ १०६ ॥
भूयस्तामसबाणौघैरंधकारीकृतांबरैः । लक्ष्मीधरकुमारेण छादितो राक्षसाधिपः ॥ १०७ ॥
सहस्रकिरणास्त्रेण तामसास्त्रमपोह्य सः । प्रायुङ्क्त दंदशूकास्त्रं विस्फुरत्फणमंडलम् ॥ १०८ ॥
ततस्तार्क्ष्यसमास्त्रेण लक्ष्मणेन निराकृतम् । पन्नगास्त्रं नभश्चाभूद्धेमभासेव पूरितम् ॥ १०९ ॥
संहारांबुदनिर्घोषमुरुगास्त्रमथो पुनः । पद्मनाभानुजोऽमुंचद्विषाग्निकणदुःसहम् ॥ ११० ॥
बर्हणास्त्रेण तद्वीरस्त्रिकूटेंदुरसारयत् । प्रयोक्षीच्च दुरुत्सारमस्त्रं विघ्नमनायकम् ॥ १११ ॥
विसृष्टे तत्र विघ्नास्त्रे वांछितच्छेदकारिणि । प्रयोगे त्रिदशास्त्राणां लक्ष्मणो मोहमागमत् ॥ ११२ ॥
वज्रदंडान् शरानेव विससर्ज स भूरिशः । रावणोऽपि शरैरेव स्वभावस्थैरयुध्यत ॥ ११३ ॥
आकर्णसंहतैर्बाणैरासीद्युद्धं तयोः समम् । लक्ष्मीभृद्रक्षसोर्घोरं तृपृष्ठयुकंठयोः ॥ ११४ ॥
कर्मण्युपेतेऽभ्युदयं पुराणे । संप्रेरके सत्यतिदारुणांगे ॥

तस्योचितं प्राप्तफलं मनुष्याः । क्रियापवर्गप्रकृतं भजन्ते ॥ ११५ ॥
उदारसंरम्भवशं प्रपन्नाः । प्रारब्धकार्यार्थनियुक्तचित्ताः ॥
नरा न तीव्रं गणयंति शस्त्रं । न पावकं नैव रविं न वायुम् ॥ ११६ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे रावणलक्ष्मणयुद्धवर्णनाभिधानं नाम चतुःसप्ततितमं पर्व ।

---

# अथ पंचसप्ततितमं पर्व ।

खिन्नाभ्यां दीयते स्वादु जलं ताभ्यां सुशीतलम् । महातर्षाभिभूताभ्यामयं हि समरे विधिः १
अमृतोपममन्नं च क्षुधाग्लपनमीयुषोः । गोशीर्षचंदनं स्वेदसंगिनो हृदि कारणम् ॥ २ ॥
तालवृंतादिवातश्च हिमवारिकणं रणे । क्रियते तत्परैः कार्यं तथाऽन्यदपि पार्श्वगैः ॥ ३ ॥
यथा तयोस्तथाऽन्येषामपि स्वपरवर्गतः । इति कर्तव्यतासिद्धिः सकला प्रतिपद्यते ॥ ४ ॥
दशाहोऽतिगतस्तीव्रमेतयोर्युध्यमानयोः । बलिनोर्भंगनिर्मुक्तचित्तयोरतिवीरयोः ॥ ५ ॥
रावणेन समं युद्धं लक्ष्मणस्य बभूव यत् । लक्ष्मणेन समं युद्धं रावणस्य बभूव यत् ॥ ६ ॥

यक्षकिंनरगंधर्वाप्सरसो विस्मयं गताः । साधुशब्दविमिश्राणि पुष्पवर्षाणि चिक्षिपुः ॥ ७ ॥
चंद्रवर्धननाम्नोथ विद्याधरजनप्रभोः । अष्टौ दुहितरो व्योम्नि विमानशिखरस्थिताः ॥ ८ ॥
अप्रमत्तैर्महाशंकैः कृतरक्षमहत्तरैः । पृष्टाः संगतिमेताभिरप्सरोभिः कुतूहलात् ॥ ९ ॥
का यूयं देवताकारा भक्तिं लक्ष्मणसुंदरे । दधाना इव वर्त्तध्वे सुकुमारशरीरिकाः ॥ १० ॥
सलज्जा इव ता ऊचुः श्रूयतां यदि कौतुकम् । वैदेहीवरणे पूर्वमस्माभिः सहितः पिता ॥ ११ ॥
आसीद्गतः तदास्थानं राज्ञां कौतुकचोदितः । दृष्ट्वा च लक्ष्मणं तत्र ददावस्मै धियैव नः ॥ १२॥
ततोऽधिगम्य मात्रातो वृत्तमेतन्निवेदितम् । दर्शनादेव चाऽऽरभ्य मनस्येष व्यवस्थितः ॥ १३ ॥
सोऽयं महति संग्रामे वर्त्तते संशयावहे । भविष्यति कथं त्वेतदिति विद्मो न दुःखिताः ॥ १४ ॥
अस्य मानवचंद्रस्य हृदयेशस्य या गतिः । लक्ष्मीधरकुमारस्य सैवास्माभिर्विनिश्चिता ॥ १५ ॥
मनोहरस्वनं तासां श्रुत्वा तद्वचनं ततः । चक्षुरूर्द्ध्वं नियुंजानो लक्ष्मणस्ता व्यलोकत ॥ १६ ॥
तद्दर्शनात्परं प्राप्ताः प्रमोदं ताः सुकन्यकाः । सिद्धार्थः सर्वथा नाथ भवेत्युदगिरन् स्वनम् ॥१७॥
सिद्धार्थशब्दनात्तस्मात् स्मृत्वा विहसिताननः । अस्त्रं सिद्धार्थनामानं लक्ष्मणः कृतितां गतः १८
स सिद्धार्थमहास्त्रेण क्षिप्रं विघ्नविनायकम् । अस्त्रमस्तगतं कृत्वा सुदीप्तं योद्धुमुद्यतः ॥ १९ ॥

गृह्णाति रावणो यद्यदस्त्रं शस्त्रविशारदः । छिनत्ति लक्ष्मणस्तत्तत्परमास्त्रविशारदः ॥ २० ॥
ततः पतत्रिसंघातैरस्य पत्रीन्द्रकेतुना । सर्वा दिशः परिच्छन्ना जीमूतैरिव भूभृतः ॥ २१ ॥
ततो भगवतीं विद्यां बहुरूपविधायिनीम् । प्रविश्य रक्षसामीशः समरक्रीडनं श्रितः ॥ २२ ॥
लक्ष्मीधरशरैस्तीक्ष्णैः शिरो लंकापुरीप्रभोः । छिन्नं छिन्नमभूद्भूयः श्रीमत्कुंडलमंडितम् ॥ २३ ॥
एकस्मिन् शिरसिच्छिन्ने शिरोद्वयमजायत । तयोरुत्कृत्तयोर्वृद्धिं शिरांसि द्विगुणां ययुः ॥ २४ ॥
निकृत्ते बाहुयुग्मे च जज्ञे बाहुचतुष्टयम् । तस्मिन् छिन्ने ययौ वृद्धिं द्विगुणा बाहुसंततिः ॥२५॥
सहस्रैरुत्तमांगानां भुजानां चातिभूरिभिः । पद्मखंडैरगण्यैश्च ज्ञायते रावणो वृतः ॥ २६ ॥
नभःकरिकराकारैः करैः केयूरभूषितैः । शिरोभिश्चाभवत्पूर्णं शस्त्ररत्नांशुपिंजरम् ॥ २७ ॥
शिरोग्राहसहस्रोग्रस्तुंगबाहुतरंगभृत् । अवर्द्धत महाभीमो राक्षसाधिपसागरः ॥ २८ ॥
बाहुसौदामिनीदंडप्रचंडो घोरनिस्वनः । शिरःशिखरसंघातैर्ववृधे रावणांबुदः ॥ २९ ॥
बाहुमस्तकसंघट्टनिःस्वनच्छत्रभूषणः । महासैन्यसमानोऽभूदेकोऽपि त्रिककुप्पतिः ॥ ३० ॥
पुराऽनेकेन युद्धोऽहमधुनैकाकिनाऽमुना । युद्धे कथमितीवायं लक्ष्मणेन बहूकृतः ॥ ३१ ॥
रत्नशस्त्रांशुसंघातकरजालप्रदीपितः । संजातो राक्षसाधीशो दह्यमानवनोपमः ॥ ३२ ॥

चक्रेषुशक्तिकुंतादिशस्त्रवर्षेण रावणः । शक्तश्छादयितुं बाहुसहस्रैरपि लक्ष्मणम् ॥ ३३ ॥
लक्ष्मणोऽपि परं क्रुद्धो विषादपरिवर्जितः । अर्कतुंडैः शरैः शत्रुं प्रच्छादयितुमुद्यतः ॥ ३४ ॥
एकं द्वे त्रीणि चत्वारि पंच षट् दश विंशतिः । शतं सहस्रमयुतं चिच्छेदारिशिरांसि सः ॥३५॥
शिरःसहस्रसंछन्नं पतद्भिः सह बाहुभिः । सोल्कादंडं पतज्ज्योतिश्चक्रमासीदिवांबरम् ॥ ३६ ॥
सबाहुमस्तकच्छन्ना रणक्षोणी निरन्तरम् । सनागभोगराजीव खंडशोभामधारयत् ॥ ३७ ॥
समुत्पन्नं समुत्पन्नं शिरो बाहुकदम्बकम् । रक्षसो लक्ष्मणोच्छित्त कर्मेव मुनिपुंगवः ॥ ३८ ॥
गलद्रुधिरधाराभिः संतताभिः समाकुलम् । वियत्संध्याविनिर्माणं समुद्भूतमिवापरम् ॥ ३९ ॥
असंख्यातभुजः शत्रुर्लक्ष्मणेन द्विबाहुना । महानुभावयुक्तेन कृतो निष्फलविग्रहः ॥ ४० ॥
निरुच्छ्वासाननः स्वेदबिन्दुजालचिताननः । सत्त्ववाताकुलस्वांगः संवृत्तो रावणः क्षणम् ॥ ४१ ॥
तावच्छ्रेणिक निर्वृत्ते तस्मिन्संरुधेऽतिरौरवे । स्वभावावस्थितो भूत्वा रावणः क्रोधदीपितः ॥४२॥
युगावसानमध्याह्नसहस्रकिरणप्रभः । परपक्षक्षयक्षीबश्चक्ररत्नमचिंतयत् ॥ ४३ ॥
अप्रमेयप्रभाजालं मुक्ताजालपरिष्कृतम् । स्वयं प्रभास्वरं दिव्यं वज्रतुंडं महाद्भुतम् ॥ ४४ ॥
नानारत्नपरीतांगं दिव्यमालानुलेपनम् । अग्निप्राकारसंकाशं धारामंडलदीधितिम् ॥ ४५ ॥

वैडूर्यारसहस्रेण युक्तं दर्शनदुःसहम् । सदा यक्षसहस्रेण कृतरक्षं प्रयत्नतः ॥ ४६ ॥
महासंरंभसंबंधकृतांताननसन्निभम् । चिंतानंतरमेतस्य चक्रं सन्निहितं करे ॥ ४७ ॥
कृतस्तत्र प्रभास्त्रेण निष्प्रभो ज्योतिषां पतिः । चित्रार्पितरविच्छायमात्रशेषो व्यवस्थितः ॥४८॥
गंधर्वाऽप्सरसो विश्वा–वसुतुंबुरुनारदाः । परित्यज्य रणप्रेक्षां गताः क्वापि विगीतिकाः ॥४९॥
मर्तव्यमिति निश्चित्य तथाप्यत्यंतधीरधीः । शत्रुं तथाविधं वीक्ष्य पद्मनाभानुजोऽवदत् ॥ ५० ॥
संगतेनामुना किं त्वं स्थितोऽस्यैवं कदर्यवत् । शक्तिश्चेदस्ति ते काचित्प्रहरस्व नराधम ॥ ५१ ॥
इत्युक्तः परमं क्रुद्धो दन्तदष्टरदच्छदः । मंडलीकृतविस्फारिप्रभापटललोचनः ॥ ५२ ॥
क्षुब्धमेघकुलस्वानं प्रभ्रम्य सुमहाजवम् । चिक्षेप रावणश्चक्रं जनसंशयकारणम् ॥ ५३ ॥
दृष्ट्वाऽभिमुखमागच्छत्तदुत्पातार्कसंनिभम् । निवारयितुमुद्युक्तो वज्रास्यैर्लक्ष्मणः शरैः ॥ ५४ ॥
वज्रावर्तेन पद्माभो धनुषा वेगशालिना । हलेन चोग्रपात्रेण भ्राम्यते नाऽन्यबाहुना ॥ ५५ ॥
संभ्रमं परमं बिभ्रत्सुग्रीवो गदया तदा । मंडलाग्रेण तीक्ष्णेन प्रभामंडलसुंदरः ॥ ५६ ॥
अरातिप्रतिकूलेन शूलेनासौ विभीषणः । उल्कामुद्गरलांगूलकनकाद्यैर्मरुत्सुतः ॥ ५७ ॥
अंगदः पारदेनांगकुठारेणोरुतेजसा । शेषा अपि तथा शेषैः शस्त्रैः खेचरपुंगवाः ॥ ५८ ॥

एकीभूय समुद्युक्ता अपि जीवितनिःस्पृहाः । ते निवारयितुं शेकुर्न तत्त्रिदशपालितम् ॥ ५९ ॥
तेनाऽऽगत्य परीत्य त्रिर्विनयस्थितिरक्षकम् । सुखं शांतवपुः स्वैरं लक्ष्मणस्य करस्थितम् ॥६०॥
माहात्म्यमेतत्सुसमासतस्ते । निवेदितं कर्तृ सुविस्मयस्य ॥
रामस्य नारायणसंगतस्य । महर्द्धिकं श्रेणिक ! लोकतुंगम् ॥ ६१ ॥
एकस्य पुण्योदयकालभाजः । संजायते नुः परमा विभूतिः ॥
पुण्यक्षयेऽन्यस्य विनाशयोग–श्चन्द्रोऽभ्युदेत्येति रविर्यथाऽस्तम् ॥ ६२ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे चक्ररत्नोत्पत्तिवर्णनं नाम पंचसप्ततितमं पर्व ।

---

# अथ षट्सप्ततितमं पर्व ।

उत्पन्नचक्ररत्नं तं वीक्ष्य लक्ष्मणसुंदरम् । हृष्टा विद्याधराधीशाश्चकुरित्यभिनंदनम् ॥ १ ॥
ऊचुश्चासीत्समादिष्टः पुरा भगवता तदा । नाथेनानंतवीर्येण योऽष्टमः कृष्णतायुजान् ॥ २ ॥
जातो नारायणः सोऽयं चक्रपाणिर्महाद्युतिः । अत्युत्तमवपुःश्रीमान् न शक्यो बलवर्णने ॥ ३ ॥

अयं च बलदेवोऽसौ रथं यस्य वहंत्यमी । उद्वृत्तकेसरसटाः सिंहा भास्करभासुराः ॥ ४ ॥
नीतो मयमहादैत्यो येन वंदिग्रहं क्षणे । हलरत्नं करे यस्य भृशमेतद्विराजते ॥ ५ ॥
रामनाराणावेतौ तौ जातौ पुरुषोत्तमौ । पुण्यानुभावयोगेन परमप्रेमसंगतौ ॥ ६ ॥
लक्ष्मणस्य स्थितं पाणौ समालोक्य सुदर्शनम् । रक्षसामधिपश्चितायोगमेवमुपागतः ॥ ७ ॥
वंद्येनानंतवीर्येण दिव्यं यद्भाषितं तदा । ध्रुवं तदिदमायातं कर्मानिलसमीरितम् ॥ ८ ॥
यस्यातपत्रमालोक्य संत्रस्ता खेचराधिपाः । भंगं प्रापुर्महासैन्याः पर्यस्तच्छत्रकेतनाः ॥ ९ ॥
आकूपारपयोवासा हिमवद्विंध्यसुस्तना । दासीवाज्ञाकरी यस्य त्रिखंडवसुधाभवत् ॥ १० ॥
सोऽहं भूगोचरेणाजौ जेतुमालोचितः कथम् । कष्टेयं वर्त्ततेऽवस्था पश्यताद्भुतमीदृशम् ॥ ११ ॥
धिगिमां नृपतेर्लक्ष्मीं कुलटासमचेष्टिताम् । भक्तुमेकपदे पापान् त्यजंती चिरसंस्तुतान् ॥ १२ ॥
किंपाकफलवद्भोगा विपाकविरसा भृशम् । अनंतदुःखसंबंधकारिणः साधुगर्हिताः ॥ १३ ॥
भरताद्याः सधन्यास्ते पुरुषा भुवनोत्तमाः । चक्रांकं ये परिस्फीतं राज्यं कंटकवर्जितम् ॥ १४ ॥
विषमिश्रान्नवत्त्यक्त्वा जैनेन्द्रं व्रतमाश्रिताः । रत्नत्रयं समाराध्य प्रापुश्च परमं पदम् ॥ १५ ॥
मोहेन बलिनाऽत्यंतं संसारस्फीतिकारिणा । पराजितो वराकोऽहं धिङ्मामीदृशचेष्टितम् ॥ १६ ॥

उत्पन्नचक्ररत्नेन लक्ष्मणेनाथ रावणः । विभीषणास्यमालोक्य जगदे पुरुतेजसा ॥ १७ ॥
अद्यापि खगसंपूज्य समर्प्य जनकात्मजाम् । रामदेवप्रसादेन जीवामीति वचो वद ॥ १८ ॥
ततस्तथाविधैवेयं तव लक्ष्मीरवस्थिता । विधाय मानभंगं हि संतो यांति कृतार्थताम् ॥ १९ ॥
रावणेन ततोऽवोचि लक्ष्मणः स्मितकारिणा । अहो कारणनिर्मुक्तो गर्वः क्षुद्रस्य ते मुधा ॥२०॥
दर्शयाम्यद्य तेऽवस्थां यां तामनुभवाधम । अहं रावण एवाऽसौ स च त्वं धरणीधरः ॥ २१ ॥
लक्ष्मणेन ततोऽभाणि किमत्र बहुभाषितैः । सर्वथाऽहं समुत्पन्नो हंता नारायणस्तव ॥ २२ ॥
उक्तं तेन निजाकूताद्यदि नारायणायसे । इच्छामात्रात्सुरेन्द्रत्वं कस्मान्न प्रतिपद्यसे ॥ २३ ॥
निर्वासितस्य ते पित्रा दुःखिनो वनचारिणः । अपत्रपाविहीनस्य ज्ञाता केशवता मया ॥ २४ ॥
नारायणो भवाऽन्यो वा यत्ते मनसि वर्त्तते । विस्फूर्जितं करोत्येष तव भग्नमनोरथम् ॥ २५ ॥
अनेनाल्मातचक्रेण किल त्वं कृतितां गतः । अथवा क्षुद्रजंतूनां खलेनाऽपि महोत्सवम् ॥ २६ ॥
सहामीभिः खगैः पापैः सचक्रं सहवाहनम् । पाताले त्वां नयाम्यद्य कथितेनापरेण किम् ॥२७॥
एवमुक्तं समाकर्ण्य नवनारायणो रुषा । प्रभ्रम्य चक्रमुद्यम्य चिक्षेप प्रति रावणम् ॥ २८ ॥
वज्रप्रभवमेघौघघोरनिर्घोषभीषणम् । प्रलयार्कसमच्छायं तच्चक्रमभवत्तदा ॥ २९ ॥

हिरण्यकशिपुक्षिप्तं हरिणेव तदायुधम् । निवारयितुमुद्युक्तः संरब्धो रावणः शरैः ॥ ३० ॥
भूयश्चंडेन दंडेन जविना पविना पुनः । तथाऽपि ढौकते चक्रं वक्रं पुण्यपरिक्षये ॥ ३१ ॥
चंद्रहासं समाकृष्य ततोऽभ्यर्णत्वमागतम् । जघान गहनोत्सर्पिस्फुलिंगांचितपुष्करम् ॥ ३२ ॥
स्थितस्याभिमुखस्यास्य राक्षसेंद्रस्य शालिनः । तेन चक्रेण निर्भिन्नं वज्रसारमुरःस्थलम् ॥३३॥
उत्पातवातसन्नुन्नमहांजनगिरिप्रभः । पपात रावणः क्षोण्यां पतिते पुण्यकर्मणि ॥ ३४ ॥
रतेरिव पतिः सुप्तश्च्युतः स्वर्गादिवामरः । महीस्थितो रराजासौ संदष्टदशनच्छदः ॥ ३५ ॥
स्वामिनं पतितं दृष्ट्वा सैन्यं सागरनिस्वनम् । शीर्णं वितानतां प्राप्तं पर्यस्तच्छत्रकेतुकम् ॥ ३६ ॥
उत्सारय रथं देहि मार्गमश्वमितो नय । प्राप्तोऽयं पृष्ठतो हस्ती विमानं कुरु पार्श्वतः ॥ ३७ ॥
पतितोऽयमहो नाथः कष्टं जातमनुत्तमम् । इत्यालापमलं भ्रांतं बलं तत्रैव विह्वलम् ॥ ३८ ॥
अन्योन्यापूरणाशक्तान्महाभयविकंपितान् । दृष्ट्वा निःशरणानेताञ्जनान्पतितमस्तकान् ॥ ३९ ॥
किष्किंधपतिवैदेहसमीरणसुतादयः । न भेतव्यं न भेतव्यमिति साधारमानयन् ॥ ४० ॥
भ्रमितोपरिवस्त्रांतः पल्लवानां समंततः । सैन्यमाश्वासितं तेषां वाक्यैः कर्णरसायनैः ॥ ४१ ॥

तथाविधां श्रियमनुभूय भूयसीं । कृताद्भुतां जगति समुद्रवारिते ॥

परिक्षये सति सुकृतस्य कर्मणः । खलामिमां प्रकृतिमितो दशाननः ॥ ४२ ॥
धिगीदृशीं श्रियमतिचंचलात्मिकां । विवर्जितां सुकृतसमागमाशया ॥
इति स्फुटं मनसि निधाय भो जना—स्तपोधना भवत रवेर्जितौजसः ॥ ४३ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे दशग्रीववधाभिधानं नाम षट्सप्ततितमं पर्व ।

---

# अथ सप्तसप्ततितमं पर्व ।

सोदरं पतितं दृष्ट्वा महादुःखसमन्वितः । क्षुरिकायां करं चक्रे स्ववधाय विभीषणः ॥ १ ॥
वारयंती वधं तस्य निश्चेष्टीकृतविग्रहा । मूर्च्छा कालं कियंतं च चकारोपकृतिं पराम् ॥ २ ॥
लब्धसंज्ञो जिघांसुः स्वं तापं दुःसहमुद्वहन् । रामेण विधुतः कृच्छ्रादुत्तीर्य निजतो रथात् ॥ ३ ॥
त्यक्तास्त्रकवचो भूम्यां पुनर्मूर्छामुपागतः । प्रतिबुद्धः पुनश्चक्रे विलापं करुणाकरम् ॥ ४ ॥
हा भ्रातः करुणोदार शूर संश्रितवत्सल । मनोहर कथं प्राप्तोऽस्यवस्थामिति पापिकाम् ॥ ५ ॥
किं तन्मद्वचनं नाथ गद्यमानं हितं परम् । न मानितं यतो युद्धे वीक्षे त्वां चक्रताडितम् ॥ ६ ॥

कष्टं भूमितले देव विद्याधरमहेश्वर । कथं सुप्तोऽसि लंकेश भोगदुर्ललितात्मकः ॥ ७ ॥
उत्तिष्ठ देहि मे वाक्यं चारुवाक्यगुणाकर । साधारय कृपाधार मग्नं मां शोकसागरे ॥ ८ ॥
एतस्मिन्नंतरे ज्ञातं दशाननिपातनम् । क्षुब्धमंतःपुरं शोकमहाकल्लोलसंकुलम् ॥ ९ ॥
सर्वाश्च वनिता बाष्पधारासिक्तमहीतलाः । रणक्षोणीं समाजग्मुर्मुहुः प्रस्खलितक्रमाः ॥ १० ॥
तं चूडामणिसंकाशं क्षितेरालोक्य सुंदरम् । निश्चेतनं पतिं नार्यो निपेतुरतिवेगतः ॥ ११ ॥
रंभा चंद्रानना चंद्रमंडलाब्जवरोर्वशी । मंदोदरी महादेवी सुंदरी कमलानना ॥ १२ ॥
रूपिणी रुक्मिणी शीला रत्नमाला तनूदरी । श्रीकांता श्रीमती भद्रा कनकाभा मृगावती १३
श्रीमाला मानवी लक्ष्मीरानंदानंगसुंदरी । वसुंधरा तडिन्माला पद्मा पद्मावती सुखा ॥ १४ ॥
देवी पद्मावती कांतिः प्रीतिः संध्यावली शुभा । प्रभावती मनोवेगा रतिकांता मनोवती॥१५॥
अष्टादशैवमादीनां सहस्राणि सुयोषिताम् । परिवार्य पतिं चक्रुराक्रंदं सुमहाशुचा ॥ १६ ॥
काश्चिन्मोहं गताः सत्यः सिक्ताश्चंदनवारिणा । समुत्प्लुतमृणालानां पद्मिनीनां श्रियं दधुः १७
आश्लिष्टदयिताः काश्चिद्गाढं मूर्च्छामुपागताः । अंजनाद्रिसमासक्तसंध्यारेखाद्युतिं दधुः ॥ १८ ॥
निर्व्यूढमूर्च्छनाः काश्चिदुरस्ताडनचंचलाः । घनाघनसमासंगितडिन्मालाकृतिं श्रिताः ॥ १९ ॥

विधाय वदनांभोजं काचिदंके सुविह्वला । वक्षःस्थलपरामर्शकारिणी मूर्च्छिता मुहुः ॥ २० ॥
हा हा नाथ गतः क्वासि त्यक्त्वा मामतिकातराम् । कथं नाऽपेक्षसे दुःखनिमग्नं जनमात्मनः२१
स त्वं सत्वयुतः कांतिमंडनः परमद्युतिः । विभूत्या शक्रसंकाशो मानी भरतभूपतिः ॥ २२ ॥
प्रधानपुरुषो भूत्वा महाराज मनोरमः । किमर्थं स्वपिषि क्षोण्यां विद्याधरमहेश्वरः ॥ २३ ॥
उत्तिष्ठ कांत कारुण्य-पर स्वजनवत्सल । अमृतप्रतिमं वाक्यं यच्छैकमपि सुंदरम् ॥ २४ ॥
अपराधविमुक्तानामस्माकं सक्तचेतसाम् । प्राणेश्वर किमित्येवं स्थितस्त्वं कोपसंगतः ॥ २५ ॥
परिहासकथासक्तं दंतज्योत्स्नामनोहरम् । वदनेंदुमिमं नाथ सकृद्धारय पूर्ववत् ॥ २६ ॥
वरांगनापरिक्रीडास्थानेस्मिन्नपि सुंदरे । वक्षःस्थले कथं न्यस्तं पदं ते चक्रधारया ॥ २७ ॥
बंधूकपुष्पसंकाशस्तवायं दशनच्छदः । नर्मोत्तरप्रदानाय कथं स्फुरति नाधुना ॥ २८ ॥
प्रसीद न चिरं कोपः सेवितो जातुचित्त्वया । प्रत्युतास्माकमेवत्वमकरोः सान्त्वनं पुरा ॥२९॥
उदपाद्येष यस्त्वत्तः कल्पलोकात्परिच्युतः । बंधने मेघवाहोऽसौ दुःखमास्ते तथेंद्रजित् ॥ ३० ॥
विधाय सुकृतज्ञेन वीरेण गुणशालिना । पद्माभेन सह प्रीतिं भ्रातृपुत्रौ विमोचय ॥ ३१ ॥
जीवितेश समुत्तिष्ठ प्रयच्छ वचनं प्रियम् । सुचिरं देव किं शेषे विधत्स्व नृपतेः क्रियाम् ॥३२॥

विरहाग्निप्रदीप्तानि भृशं सुंदरविभ्रम । कांत विध्यापयांगानि प्रसीद प्रणयिप्रिय ॥ ३३ ॥
अवस्थामेतिकां प्राप्तमिदं वदनपंकजम् । प्रियस्य हृदयालोक्य दीर्यते शतधा न किम् ॥ ३४ ॥
वज्रसारमिदं नूनं हृदयं दुःखभाजनम् । ज्ञात्वापि यत्तवावस्थामिमां तिष्ठति निर्दयम् ॥ ३५ ॥
विधे किं कृतमस्माभिर्भवतः सुंदरेतरम् । विहितं येन कर्मेदं त्वया निर्दय दुष्करम् ॥ ३६ ॥
समालिंगनमात्रेण दूरं निर्धूय मानकम् । परस्परार्पणस्वादु नाथ यन्मधु सेवितम् ॥ ३७ ॥
यच्चान्यत्प्रमदागोत्रग्रहणस्खलिते सति । कांचीगुणेन नीतोऽसि बहुशो बंधनं प्रियम् ॥ ३८ ॥
वतंसेंदीवराघातात्कोपप्रस्फुरिताधरम् । प्रापितोऽसि प्रभो यच्च किंजल्कोच्छ्रसितालिकम् ॥ ३९ ॥
प्रेमकोपविनाशाय यच्चातिप्रियवादिना । कृतं पादार्पणं मूर्ध्नि हृदयद्रवकारणम् ॥ ४० ॥
यानि चात्यंतरम्याणि रतानि परमेश्वर । कांत चाटुसमेतानि सेवितानि यथेप्सितम् ॥ ४१ ॥
परमानंदकारीणि तदेतानि मनोहर । अधुना स्मर्यमाणानि दहंति हृदये भृशम् ॥ ४२ ॥
कुरु प्रसादमुत्तिष्ठ पादावेषा नमामि ते । न हि प्रियजने कोपः सुचिरं नाथ शोभते ॥ ४३ ॥
एवं रावणपत्नीनां श्रुत्वापि परिदेवनम् । कस्य न प्राणिनः प्राप्तं हृदयं द्रवतामलम् ॥ ४४ ॥
अथ पद्माभसौमित्री साकं खेचरपुंगवैः । स्नेहगर्भं परिष्वज्य बाष्पापूरितलोचनौ ॥ ४५ ॥

ऊचतुः करुणोद्युक्तौ परिसान्त्वनकोविदौ । विभीषणमिदं वाक्यं लोकवृत्तांतपंडितौ ॥ ४६ ॥
राजन्नलं रुदित्वैवं विषादमधुना त्यज । जानास्येव ननु व्यक्तं कर्मणामिति चेष्टितम् ॥ ४७ ॥
पूर्वकर्मानुभावेन प्रमादं भजतां नृणाम् । प्राप्तव्यं जायतेऽवश्यं तत्र शोकस्य कः क्रमः ॥ ४८ ॥
प्रवर्त्तते यदाऽकार्ये जनो ननु तदैव सः । मृतश्चिरं मृते तस्मिन् किं शोकः क्रियतेऽधुना ॥ ४९ ॥
यः सदा परमप्रीत्या हिताय जगतो रतः । समाहितमतिर्बाढं प्रजाकर्मणि पंडितः ॥ ५० ॥
सर्वशास्त्रार्थसंबोधक्षालितात्मापि रावणः । मोहेन बलिना नीतोऽवस्थामेतां सुदारुणाम् ॥ ५१ ॥
असौ विनाशमेतेन प्रकारेणानुभूतवान् । नूनं विनाशकाले हि नृणां ध्वांतायते मतिः ॥ ५२ ॥
रामीयवचनस्यांते प्रभामंडलपंडितः । जगाद वचनं विभ्रन्माधुर्यं परमोत्कटम् ॥ ५३ ॥
विभीषण रणे भीमे युध्यमानो महामनाः । मृत्युना वीरयोगेन रावणः स्वस्थितिं श्रितः ॥५४॥
किं तस्य पतितं यस्य मानो न पतितः प्रभोः । नन्वत्यंतमसौ धन्यो योऽसून्प्रत्यर्थ्यमुंचत ॥५५॥
महासत्त्वस्य वीरस्य शोच्यं तस्य न विद्यते । शत्रुंदमसमा लोके शोच्याः पार्थिवगोत्रजाः ५६
लक्ष्मीहरिध्वजो दृतो बभूवाक्षपुरे नृपः । अरिंदम इति ख्यातः पुरंदरसमश्रिया ॥ ५७ ॥
स जित्वा शत्रुसंघातं नानादेशव्यवस्थितम् । प्रत्यागच्छन्निजं स्थानं देवीदर्शनकांक्षया ॥५८॥

परमोत्कंठया युक्तः केतुतोरणमंडितम् । पुरं विवेश सोऽकस्मादश्वैर्मानसगत्वरैः ॥ ५९ ॥
स्वं गृहं संस्कृतं दृष्ट्वा भूषितां च स्वसुंदरीम् । अपृच्छद्विदितोऽहं ते कथमेतीत्यवेदितम् ॥ ६० ॥
सा जगौ मुनिमुख्येन नाथ कीर्त्तिधरेण मे । अवधिज्ञानिना शिष्टं पृष्टेनैतेन पारणाम् ॥ ६१ ॥
अवोचदीर्ष्यया युक्तो गत्वाऽसौ मुनिपुंगवम् । यदि त्वं वेत्सि तच्चिंतां मदीयां मम बोधय ॥६२॥
मुनिना गदितं चित्ते त्वयेदं विनिवेशितम् । यथा किल कथं मृत्युः कदा वा मे भविष्यति ६३
स त्वमस्माद्दिनादह्नि सप्तमे वज्रताडितः । मृत्वा भविष्यसि स्वस्मिन् कीटो विड्भवने महान् ६४
ततः प्रीतिंकराभिख्यमागत्य तनयं जगौ । त्वयाऽहं विड्गृहे जातो हंतव्यं स्थूलकीटकः ॥६५॥
तथाभूतं स दृष्ट्वा तं तनयं हंतुमुद्यतम् । विड्मध्यमविशद्दूरं मृत्युभीतिपरिद्रुतः ॥ ६६ ॥
मुनिं प्रीतिंकरो गत्वा पप्रच्छ भगवन् कुतः । संदिश्य मार्यमाणोऽसौ कीटो दूरं पलायते ॥६७॥
उवाच वचनं साधुर्विषादमिह मा कृथाः । योनिं यामश्नुते जंतुस्तत्रैव रतिमेति सः ॥ ६८ ॥
आत्मनस्तत्कुरु श्रेयो मुच्यसे येन किल्बिषात् । ननु स्वकृतसंप्राप्तिप्रवणाः सर्वदेहिनः ॥ ६९ ॥
एवं भवस्थितिं ज्ञात्वा परमासुखकारिणीम् । प्रीतिंकरो महायोगी बभूव विगतस्पृहः ॥ ७० ॥

एवं ते विविधा विभीषण न किं ज्ञाता जगत्संस्थिति—

येच्छूरं कृतनिश्चयं विधिवशान्नारायणेनाहतम् ॥
संग्रामेऽभिमुखं प्रधानपुरुषं शोचस्यहो रावणं ।
स्वार्थे संप्रति यच्छ चित्तममुना शोकेन किं कारणम् ॥ ७१ ॥
श्रुत्वेमां प्रतिबोधदानकुशलां चित्रस्वभावान्वितां ।
सत्प्रीतिंकरसंयतस्य चरितप्रोत्कीर्त्तनीयां कथाम् ॥
सर्वैः खेचरपुंगवैरभिहितैः साधूदितं साध्विति ।
भ्रष्टः शुक्तिमिराद्विभीषणरविर्लोकोत्तराचारवित् ॥ ७२ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे प्रीतिंकरोपाख्यानं नाम सप्तसप्ततितमं पर्व ।

---

# अथाष्टसप्ततितमं पर्व ।

ततो हलधरोऽवोचत्कर्त्तव्यं किमतः परम् । मरणांतानि वैराणि जायंते हि विपश्चिताम् ॥ १ ॥
परलोके गतस्यातो लंकेशस्योत्तमं वपुः । महानरस्य संस्कारं प्रापयामः सुखैधितम् ॥ २ ॥

तत्राभिनंदिते वाक्ये विभीषणसमन्वितौ । बलनारायणौ साकं शेषैस्तां ककुभं श्रितौ ॥ ३ ॥
यत्र मंदोदरी शोकविह्वला कुररीसमम् । योषित्सहस्रमध्यस्था विरौति करुणावहम् ॥ ४ ॥
अवतीर्य महानागात्सत्त्वरं बलकेशवौ । मंदोदरीमुपायातौ साकं खेचरपुंगवैः ॥ ५ ॥
दृष्ट्वा तौ सुतरां नार्यो रुरुदुर्मुक्तकण्ठकम् । विरुग्नरत्नवलया वसुधापांशुधूसराः ॥ ६ ॥
मंदादर्या समं सर्वमंगनानिवहं बलः । वाग्भिश्चित्राभिरानिन्ये समाश्वासं विचक्षणः ॥ ७ ॥
कर्पूरागुरुगोशीर्षचंदनादिभिरुत्तमैः । संस्कार्य रावणं याताः सर्वे पद्मसरो महत् ॥ ८ ॥
उपविश्य सरस्तीरे पद्मेनोक्तं सुचेतसा । कुंभादयो विमुच्यंतां सामंतैः सहिता इति ॥ ९ ॥
खेचरेशैस्ततः कैश्चिदुक्तं ते क्रूरमानसाः । हन्यंतां वैरिणो यद्वन्म्रियंतां बंधने स्वयम् ॥ १० ॥
बलदेवो जगौ भूयः क्षात्रं नेदं विचेष्टितम् । प्रसिद्धा वा न विज्ञाता भवद्भिः किमियं स्थितिः ॥
सुप्तबद्धनतत्रस्तदंतदष्टादयो भटाः । न हंतव्या इति क्षात्रो धर्मो जगति राजते ॥ १२ ॥
एवमस्त्विति सन्नद्धास्तानानेतुं महाभटाः । नानाऽऽयुधधरा जग्मुः स्वाम्यादेशपरायणाः ॥१३॥
इन्द्रजित्कुंभकर्णश्च मारीचो घनवाहनः । तथा मयमहादैत्यप्रमुखाः खेचरोत्तमाः ॥ १४ ॥
पूरिता निगडैः स्थूलैरमी खणखणायितैः । प्रमादरहितैः शूरैरानीयंते समाहितैः ॥ १५ ॥

विलोक्यानीयमानांस्तान्दिङ्मतङ्गजसन्निभान् । जजल्पुः कपयः स्वैरं संहतिस्थाः परस्परम् १६
प्रज्वलंतीं चितां वीक्ष्य रावणीयां रुषं यदि । प्रयातीन्द्रजितो यातु कुंभकर्णनृपोऽपि वा ॥१७॥
अनयोरेककस्यापि ततो विकृतिमीयुषः । कः समर्थः पुरः स्थातुं कपिध्वजबले नृपः ॥ १८ ॥
यो यत्रावस्थितस्तस्मात्स्थानादुद्याति नैव सः । अनयोर्हि बलं दृष्टमेतैः संग्राममूर्द्धनि ॥ १९ ॥
भामंडलेन चात्मीया गदिता भटपुंगवाः । यथा नाद्यापि विश्रंभो विधातव्यो विभीषणे ॥२०॥
कदाचित्स्वजनानेतात्प्राप्य निर्धूतबंधनान् । भ्रातृदुःखानुतप्तस्य जायतेऽस्य विकारिता ॥२१॥
इत्युद्भूतसमाशंकैर्वैदेहादिभिरावृताः । नीयंते कुंभकर्णाद्या बलनारायणांतिकम् ॥ २२ ॥
रागद्वेषविनिर्मुक्ता मनसा मुनितां गताः । धरणीं सौम्यया दृष्ट्या वीक्षमाणाः शुभाननाः २३
संसारे सारगंधोऽपि न कश्चिदिह विद्यते । धर्म एको महाबंधुः सारः सर्वशरीरिणाम् ॥ २४ ॥
विमोक्षं यदि नामास्मात्प्राप्स्यामो बंधनाद्वयम् । पारणां पाणिमात्रेण करिष्यामो निरंबराः २५
प्रतिज्ञामेवमारूढा रामस्यांतिकमाश्रिताः । विभीषणं समाजग्मुः कुंभकर्णादयो नृपाः ॥ २६ ॥
वृत्ते यथायथं तत्र दुःखसंभाषणेऽगदन् । प्रशांताः कुंभकर्णाद्या बलनारायणाविति ॥ २७ ॥
अहो वः परमं धैर्यं गांभीर्यं चेष्टितं बलम् । सुरैरप्यजयो नीतो मृत्युं मद्राक्षसाधिपः ॥ २८ ॥

परं कृतापकारोऽपि मानी निर्व्यूढभाषितः । अत्युन्नतगुणः शत्रुः श्लाघनीयो विपश्चिताम् ॥२९॥
परिसांत्व्य ततश्चक्री वचनैर्हृदयंगमैः । जगाद पूर्ववद्यूयं भोगैस्तिष्ठत संगताः ॥ ३० ॥
गदितं तैरलं भोगैरस्माकं विषदारुणैः । महामोहावहैर्भीमैः सुमहादुःखदायिभिः ॥ ३१ ॥
उपायाः संति तेनैव यैर्न ते कृतसांत्वनाः । तथापि भोगसंबंधं प्रतीयुर्न मनस्विनः ॥ ३२ ॥
नारायणे तथा लग्ने स्वयं हलधरेऽपि च । दृष्टिर्भोगे पराचीना तेषामासीद्रवाविव ॥ ३३ ॥
भिन्नांजनदलच्छाये तस्मिन् सुसरसो जले । अबंधनैरिमैः साकं स्नाताः सर्वे सुगंधिनि ॥ ३४ ॥
राजीवसरसस्तस्मादुत्तीर्यानुक्रमेण च । यथा स्वं निलयं जग्मुः कपयो राक्षसास्तथा ॥ ३५ ॥
सरसोऽस्य तटे रम्ये खेचरा बद्धमंडलाः । केचिच्छूरकथां चक्रुर्विस्मयव्याप्तमानसाः ॥ ३६ ॥
ददुः केचिदुपालंभं दैवस्य क्रूरकर्मणः । मुमुचुः केचिदस्राणि संततानि स्वनोज्झितम् ॥ ३७ ॥
आपूर्यमाणचेतस्का गुणैः स्मृतिपथं गतैः । रावणीयैर्जनाः केचिद्रुरुदुर्मुक्तकण्ठकम् ॥ ३८ ॥
चित्रतां कर्मणां केचिदवोचन्नतिसंकटाम् । अन्ये संसारकांतारं निनिंदुरतिदुस्तरम् ॥ ३९ ॥
केचिद्भोगेषु विद्वेषं परमं समुपागताः । राजलक्ष्मीं चलां केचिदमन्यंत निरर्थकाम् ॥ ४० ॥
गतिरेषैव वीराणामिति केचिद्वभाषिरे । अकार्यगर्हणं केचिच्चक्रुरुत्तमबुद्धयः ॥ ४१ ॥

रावणस्य कथां केचिदभजन् गर्वशालिनीम् । केचित्पद्मगुणानूचुः शक्तिं केचिच्च लाक्ष्मणीम् ॥४२॥
केचिद्बलममृष्यंतो मंदकंपितमस्तकाः । सुकृतस्य फलं वीराः शशंसुः स्वच्छचेतसः ॥ ४३ ॥
गृहे गृहे तदा सर्वाः क्रियाः प्राप्ताः परिक्षयम् । प्रावर्त्तत कथा एव शिशूनामपि केवलाः ॥४४॥
लंकायां सर्वलोकस्य वाष्पदुर्दिनकारिणः । शोकेनैव व्यलीयंत महता कुट्टिमान्यपि ॥ ४५ ॥
शेषभूतव्यपोहेन जलात्मकमिवाभवत् । नयनेभ्यः प्रवृत्तेन वारिणा भुवनं तदा ॥ ४६ ॥
हृदयेषु पदं चक्रुस्तापाः परमदुःसहाः । नेत्रवारिप्रवाहेभ्यो भीता इव समंततः ॥ ४७ ॥
धिक्धिकष्टमहो हा ही किमिदं जातमद्भुतम् । एवं निर्जग्मुरालापा जनेभ्यो वाष्पसंगताः ॥४८॥
भूमिशय्यासु मौनेन केचिन्नियमिताननाः । निष्कंपविग्रहास्तस्थुः पुस्तकर्मगता इव ॥ ४९ ॥
बभंजुः केचिदस्त्राणि चिक्षिपुर्भूषणानि च । रमणीवदनांभोजदृष्टिद्वेषमुपागताः ॥ ५० ॥
उष्णैर्निश्वासवातूलैर्द्राघिष्ठैः कलुषैरलम् । अमुंचदिव तद्दुःखं प्रारोहान्विरलेतरान् ॥ ५१ ॥
केचित्संसारभावेभ्यो निर्वेदं परमागतः । चक्रुर्नैरंबरीं दीक्षां मानसे जिनभाषिताम ॥ ५२ ॥
अथ तस्य दिनस्यांते महासंघसमन्वितः । अप्रमेयबलः ख्यातो लंकां प्राप्तो मुनीश्वरः ॥ ५३ ॥
रावणे जीवति प्राप्तो यदि स्यात्स महामुनिः । लक्ष्मणेन समं प्रीतिर्जाता स्यात्तस्य पुष्कला ५४

तिष्ठंति मुनयो यस्मिन्देशे परमलब्धयः । तथा केवलिनस्तत्र योजनानां शतद्वयम् ॥ ५५ ॥
पृथिवी स्वर्गसंकाशा जायते निरुपद्रवा । वैरानुबंधमुक्ताश्च भवंति निकटे नृपाः ॥ ५६ ॥
अमूर्तत्वं यथा व्योम्नश्चलत्वमनिलस्य च । महामुनेर्निसर्गेण लोकस्याह्लादनं तथा ॥ ५७ ॥
अनेकाद्भुतसंपन्नैर्मुनिभिः स समावृतः । यथाऽऽगतस्तथा वक्तुं केन श्रेणिक शक्यते ॥ ५८ ॥
सुवर्णकुंभसंकाशसंयतद्वर्या स संगतः । आगत्याऽऽवासितो धीमानुद्याने कुसुमायुधे ॥ ५९ ॥
षट्पंचाशत्सहस्रैस्तु खेचरैर्मुनिभिः परैः । रेजे तत्र समासीनो ग्रहैर्विधुरिवाऽऽवृतः ॥ ६० ॥
शुक्लध्यानप्रवृत्तस्य सद्विविक्ते शिलातले । तस्यामेव समुत्पन्नं शर्वर्यां तस्य केवलम् ॥ ६१ ॥
तस्यातिशयसंबंधं कीर्त्यमानं मनोहरम् । शृणु श्रेणिक ! पापस्य नोदनं परमाद्भुतम् ॥ ६२ ॥

अथ मुनिवृषभं तथाऽनंतसत्त्वं मृगेन्द्रासने सन्निविष्टं भुवोऽधोनिवासाः मरुन्नागविद्यु-त्सुपर्णादयो विंशतेरर्धभेदा । तथा षोडशार्द्धप्रकाराः स्मृता व्यंतराः किंनराद्याः सहस्रांशु-चंद्रग्रहाद्याश्च पंचप्रकारान्विता ज्योतिराख्या, द्विरष्टप्रकाराश्च कल्पालयाः ख्यातसौधर्मना-मादयो धातकीखंडवास्ये समुद्भूतकालोत्सवे स्फीतपूजां सुमेरोः शिरस्युत्तमे देवदेवं जिनेंद्रं

१ भुजंगप्रयातछन्दोमयोऽयं भागः ।

शुभै रत्नधार्त्विद्रकुंभैः सुमक्त्याभिषिच्य प्रणुत्य, प्रगीर्भिः पुनर्मातुरंके सुखं स्थापयित्वा प्रभुं बालकं बालकर्मप्रमुक्तं प्रबंध प्रहृष्टा विधायोचितं वस्तुकृत्यं परावर्त्तमानाः, समालोक्य तस्याभिजग्मुः समीपं, प्रभावानुकृष्टाः प्रवरविमानानि केचित्समानानि रत्नोरुदामानि दीप्तांशु-बिंबप्रकाशानि देवाः समारूढवंतोऽत्र केचिच्च शंखप्रतीकाशसद्राजहंसाश्रिताः केचिदुद्दामदान प्रसेकातिसद्गंधसंबंधसंभ्रान्तगुंजत्षडंघ्रि—प्रहृष्टोरुचक्रातिनीलप्रभाजालकोच्छ्रासिगंडस्थलानेक-पाधीशपृष्ठाधिरूढास्तथा बालचंद्राभदंष्ट्राकरालाननव्याघ्रसिंहादिवाहाधिरूढा मुनेरंतिकं प्रस्थिता-श्चारुचित्ताः पटुपटहमृदंगगंभीरभेरीनिनादैः कणद्वंशवीणासुमुंदैज्झणज्झर्झरीकैः, स्वनद्भूरिशंखै-र्महामेघसंघातनिर्घोषमंद्रध्वनिं दुंदुभिव्रातरम्यैर्मनोहारिदेवांगनागीतकांतैर्नभोमंडलं व्याप्तमासी त्तदा प्रतिभयतमसि प्रभाचक्रमालोक्य तत्रार्द्धरात्रेविमानस्थरत्नादिजातं निशम्य ध्वनिं दुंदुभीनां च तारां समुद्विग्नचित्तोऽभवद्राघवो लक्ष्मणश्च क्षणं तद्विदित्वा यथावत्पुनस्तुष्टिमेतौ। उदधिरिव कपिध्वजानां बलं क्षुभ्यते राक्षसानां तथैवोर्जितं भक्तितस्ते च विद्याधराः पद्मनारा-यणाद्याश्च सन्मानवाः सद्विपेन्द्राधिरूढास्तथा भानुकर्णेन्द्रजिन्मेघवाहादयो गंतुमभ्युद्यताः रथ वरतुरगान् समारुह्य शुभ्रातपत्रध्वजप्रौढहंसावलीशोभनप्रोल्लसच्चामराटोपयुक्ता नभश्छादयंत-

समीपीबभूवुः । प्रसूनायुधोद्यानमिन्द्रा इवोदारसंमोदगंधर्वयक्षाप्सरःसंघसंसेविता वाहनेभ्योऽव-
तीर्याधिनिर्मुक्तकेत्वादिपत्रादियोगाः समागत्य योगीन्द्रमभ्यर्च्य पादारविंदद्वयं संविधाय प्रणामं
प्रभक्त्या परिष्टुत्य सत्स्तोत्रमंत्रप्रगाढैर्वचोभिर्यथार्हं क्षितौ संनिविश्य स्थिता धर्मशुश्रूषया युक्त-
चित्ताः सुखं शुश्रुवुर्धर्ममेवं मुनीन्द्रास्यतो निर्गतम् । गतय इव चतस्रो भवे यासु नानामहादुःख-
चक्राधिरूढाः सदा देहिनः पर्यटंत्यष्टकर्मावनद्धाः शुभं चाशुभं च स्वयं कर्म कुर्वन्ति रौद्रार्त्त-
युक्ताः महामोहनीयेन तस्मिन्नरा बुद्धियुक्ताः कृता ये सदा प्राणिघातैरसत्यैः परद्रव्यहारैः पर-
स्त्रीपरिष्वंगरागैः प्रमाणप्रहीणार्थसंगैर्महालोभसंवर्द्धितैर्यांति योगं कुकर्माभिनुन्नास्तके मृत्युमाप्य
प्रपद्यंत्यधस्तान्महीरत्नप्रभाशर्करावालुकापंकधूमप्रभाध्वांतभातिप्रकृष्टांधकाराभिधास्ताश्च नित्यं
महाध्वांतयुक्ताः सुदुर्गंधवीभत्सदुःप्रेक्ष्यदुःस्पर्शरूपा महादारुणास्तप्तलोहोपमक्ष्मातलाः क्रंदना-
क्रोशनत्रासनैराकुला यत्र ते नारकाः पापबंधेन दुष्कर्मणा सर्वकालं महातीव्रदुःखामनेका-
र्णवोपम्यबंधस्थितिं प्राप्नुवंतीदमेवं विदित्वा बुधाः पापबंधादतिद्विष्टचित्ता रमध्वं सुधर्मे व्रत-
नियमविनाकृताश्च स्वभावार्जवाद्यैर्गुणैरंचिताः केचिदायांति मानुष्यमन्ये तपोभिर्विचित्रैः सुराणां
निवासं ततश्च्युताः प्राप्य भूयो मनुष्यत्वमुत्सृष्टधर्माभिलाषा जना ये भवंत्येतके श्वेकसा विप्र-

मुक्ताः पुनर्जन्ममृत्युद्रुमोदारकांतारमध्ये भ्रमंत्युग्रदुःखाहताशाः । अथातोऽपरे भव्यधर्मस्थिताः प्राणिनो देवदेवस्य वाग्भिर्भृशं भाविताः सिद्धिमार्गानुसारेण शीलेन सत्येन शौचेन सम्यक्तपोदर्शनज्ञानचारित्रयोगेन चात्युत्कटाः येन ये यावदष्टप्रकारस्य कुर्वंति निर्नाशनं कर्मणस्तावदुत्तुंग भूत्यन्विताः स्वर्भवानां भवंत्युत्तमाः स्वामिनस्तत्र चांभोधितुल्यान्प्रभूताननेकप्रभेदान्समासाद्य सौख्यं ततः प्रच्युता धर्मशेषस्य लब्ध्वा फलं स्फीतभोगान् श्रियं प्राप्य बोधिं परित्यज्य राज्यादिकं जैनलिंगं समादाय कृत्वा तपोऽत्यंतघोरं समुत्पाद्य सद्ध्यामिनः केवलज्ञानमायुःक्षये कृत्स्नकर्मप्रमुक्ता भवंतस्त्रिलोकाग्रमारुह्य सिद्धा अनंते शिवं सौख्यमात्मस्वभावं परिप्राप्नुवंत्युत्तमम् ॥

अथेन्द्रजिद्वारिदवाहनाभ्यां । पृष्टः स्वपूर्वं जननं मुनीन्द्रः ॥
उवाच कौशांब्यभिधानपुर्यां । भ्रातृद्वयं निःस्वकुलीनमासीत् ॥ ६३ ॥
आद्योऽत्र नाम्ना 'प्रथमो' द्वितीयः । प्रकीर्तितः 'पश्चिम' नामधेयः ॥
अथाऽन्यदा तां भवदत्तनामा । पुरीं प्रयातो विहरन् भदन्तः ॥ ६४ ॥
श्रुत्वाऽस्य पार्श्वे विनयेन धर्मं । तौ भ्रातरौ क्षुल्लकरूपमेतौ ॥

मुनिं च तं द्रष्टुमितो नगर्या—स्तस्याः पतिः सद्युतिरिन्द्रनामा ॥ ६५ ॥
उपेक्षयैवाऽऽदरकार्यमुक्तः । स्थितः समालोक्य मुनिर्मनीषी ॥
मिथ्या यतो दर्शनमस्य राज्ञो । विज्ञातमेतेन तदानुपायम् ॥ ६६ ॥
श्रेष्ठीति नंदीति जिनेन्द्रभक्त—स्ततः पुरो द्रष्टुमितो भदन्तम् ॥
तस्यादरो राजसमस्य भूत्या । कृतोऽनगारेण यथाभिधानम् ॥ ६७ ॥
तमादृतं वीक्ष्य मुनीश्वरेण । निदानमाबाध्यत पश्चिमेन ॥
भवाम्यहं नंदिसुतो यथेति । धर्मं तदर्थं च कुधीरकार्षीत् ॥ ६८ ॥
स बोध्यमानोऽप्यनिवृत्तचित्तो । मृतो निदानग्रहदूषितात्मा ॥
सुतोऽभवन्नंदिन इंदुमुख्यां । सुयोषिति श्लाघ्यगुणान्वितायाम् ॥ ६९ ॥
गर्भस्य एवाऽत्र महीपतीनां । स्थानेषु लिंगानि बहून्यभूवन् ॥
एतस्य राज्योद्भवसूचनानि । प्राकारपातप्रभृतीनि सद्यः ॥ ७० ॥
ज्ञात्वा नृपास्तं विविधैर्निमित्तै—र्महानरं भाविनमुग्रम्नतिम् ॥
जन्मप्रभृत्यादरसंप्रयुक्तै—द्रव्यैरसेवंत सुदूतनीतैः ॥ ७१ ॥

रतेरसौ वर्द्धनमादधानः । समस्तलोकस्य यथार्थशब्दः ।।
अभून्नरेशो रतिवर्द्धनाख्यो । यस्येन्दुरभ्यागतवान्प्रणामम् ।। ७२ ।।
एवं स तावत्सुमहाविभूत्या । मत्तोऽभवद्यः पुनरस्य पूर्वम् ।।
ज्यायानभूद्धर्ममसौ विधाय । मृत्वा गतः कल्पनिवासिभावम् ।। ७३ ।।
स पूर्वमेव प्रतिबोधकार्ये । कनीयसा याचित उद्यदेवः ।।
समाश्रितः क्षुल्लकरूपमेतं । प्रबोधमानेतुमभूत्कृताशः ।। ७४ ।।
गृहं च तस्य प्रविशन्नियुक्तै-र्द्वारे नरैर्दूरनिराकृतः सन् ।।
रूपं श्रितोऽसौ रतिवर्द्धनस्य । देवः क्षणेनोपनतं यथावत् ।। ७५ ।।
कृत्वा च तं तन्नगरप्रभावि-तोन्मत्तकाकारमरण्यमारात् ।।
निर्वास्य गत्वा गदितस्य का ते । वार्त्ताऽधुना मत्परिभूतभाजः ।। ७६ ।।
जगौ च पूर्वं जननं यथाव-त्ततः प्रबोधं समुपागतोऽसौ ।।
सम्यक्त्वयुक्तो रतिवर्द्धनोऽभू-न्नंद्यादयश्चापि नृपा विशेषात् ।। ७७ ।।
प्रव्रज्य राजा प्रथमामरस्य । गतः सकाशं कृतकालधर्मः ।।

ततश्च्युतौ तौ विजयेऽभिजातौ । उर्वार्वसाख्यौ नगरे नरेन्द्रात् ॥ ७८ ॥
सहोदरौ तौ पुनरेव धर्मे । विधाय जैनं त्रिदशावभूताम् ॥
ततश्च्युताविंद्रजिदब्दवाहौ । जातौ भवंताविह खेचरेशौ ॥ ७९ ॥
या नंदिनश्चेन्दुमुखी द्वितीया । भवांतरान्तर्हितजन्मिका सा ॥
मंदोदरी स्नेहवशेन सेयं । माताऽभवद्वा जिनधर्मसक्ता ॥ ८० ॥
श्रुत्वा भवमिति विविधं त्यक्त्वा संसारवस्तुनि प्रीतिम् ।
पुरुसंवेगसमेतौ जगृहतुरुग्रामिमौ दीक्षाम् ॥ ८१ ॥
कुंभश्रुतिमारीचावन्येऽत्र महाविशालसंवेगाः ।
अपगतकषायरागाः श्रामण्येऽवस्थिताः परमे ॥ ८२ ॥
तृणमिव खेचरविभवं विहाय विधिना सुधर्मचरणस्थाः ।
बहुविधलब्धिसमेताः पर्यादुरिमे महीं मुनयः ॥ ८३ ॥
मुनिसुव्रततीर्थकृतस्तीर्थे तपसा परेण संबद्धा ।
ज्ञेयास्ते वरमुनयो वंद्या भव्याः सुवाहानाम् ॥ ८४ ॥

पतिपुत्रविरहदुःखज्वलनेन विदीपिता सती जाता ।
मंदोदरी नितांतं विह्वलहृदया महाशोका ॥ ८५ ॥
मूर्च्छामेत्य विबोधं प्राप्य पुनः कुररकामिनी करुणम् ।
कुरुते स्म समाक्रंदं पतिता दुःखांबुधावुग्रे ॥ ८६ ॥
हा पुत्रेंद्रजितेदं व्यवसितमीदृक्कथं त्वया कृत्यम् ।
हा मेघवाहन कथं जननी नापेक्षिता दीना ॥ ८७ ॥
युक्तमिदं किं भवतोरनपेक्ष्य यदुग्रदुःखसंतप्ताम् ।
मातरमेतद्विहितं किंचित्कार्यं सुदुःखेन ॥ ८८ ॥
विरहितविद्याविभवौ मुक्ततनू क्षितितले कथं परुषे ।
स्थातास्थो मे वत्सौ देवोपमभोगदुर्ललितौ ॥ ८९ ॥
हा तात कृतं किमिदं भवताऽपि विमुच्य भोगमुत्तमं रूपम् ।
एकपदे कथय कथं त्यक्तस्नेहस्त्वया त्वपत्यासक्तः ॥ ९० ॥
जनको भर्त्ता पुत्रः स्त्रीणामेतावदेव रक्षनिमित्तम् ।

मुक्ता सर्वैरेभिः कं शरणं संश्रयामि पुण्यविहीना ॥ ९१ ॥
परिदेवनमिति करुणं भजमाना वाष्पदुर्दिनं जनयन्ती ।
शशिकांतयाऽऽर्ययाऽसौ प्रतिबोधं वाग्भिरुत्तमाभिरानीता ॥ ९२ ॥
मूढे ! रोदिषि किं त्वनादिसमये संसारचक्रे त्वया ।
तिर्यङ्मानुषभूरियोनिनिवहे संभूतिमायातया ॥
नानाबंधुवियोगविह्वलधियाः भूयः कृतं रोदनं ।
किं दुःखं पुनरभ्युपैषि पदवीं स्वास्थ्यं भजस्वाधुना ॥ ९३ ॥
संसारप्रकृतिप्रबोधनपरैर्वाक्यैर्मनोहारिभि—
स्तस्याः प्राप्य विबोधमुत्तमगुणा संवेगमुग्रं श्रिता ।
त्यक्ताशेषगृहस्थवेषरचना मंदोदरी संयता ॥
जाताऽत्यंतविशुद्धधर्मनिरता शुक्लैकवस्त्राऽऽवृता ॥ ९४ ॥
लब्ध्वा बोधिमनुत्तमां शशिनखाऽप्यार्यामिमामाश्रिता ।
संशुद्धश्रमणा व्रतोरुविभवा जाता नितांतोत्कटा ॥

चत्वारिंशदथाष्टकं सुमनसां ज्ञेयं सहस्राणि हि ।
स्त्रीणां संयममाश्रितानि परमं तुल्यानि भासां रवेः ॥ ९५ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे इन्द्रजितादिनिष्क्रमणाभिधानं नामाष्टसप्ततितमं पर्व ।

---

# अथैकोनाशीतितमं पर्व ।

ततश्च पद्मनाभस्य लक्ष्मणस्य च पार्थिव । कर्त्तव्या सुमहाभूतिः कथा लंकाप्रवेशने ॥ १ ॥
महाविमानसंघातैर्घटाभिश्च सुदंतिनाम् । परमैरश्ववृन्दैश्च रथैश्च भवनोपमैः ॥ २ ॥
निकुंजजप्रतिस्वानबधिरीकृतदिङ्मुखैः । वादित्रनिःस्वनै रम्यैः शंखस्वनविमिश्रितैः ॥ ३ ॥
विद्याधरमहाचक्रसमेतौ परमद्युती । बलनारायणौ लंकां प्रविष्टाविंद्रसंनिभौ ॥ ४ ॥
दृष्ट्वा तौ परमं हर्षं जनता समुपागता । मेने जन्मांतरोपात्तधर्मस्य विपुलं फलम् ॥ ५ ॥
तस्मिन्राजपथेप्राप्ते बलदेवे सचक्रिणि । व्यापाराः पौरलोकस्य प्रयाताः क्वापि पूर्वकाः ॥ ६ ॥
विकचाक्षैर्मुखैः स्त्रीणां जालमार्गैस्तिरोहिताः । सनीलोत्पलराजीवैरिव रेजुर्निरंतरम् ॥ ७ ॥

महाकौतुकयुक्तानामाकुलानां निरीक्षणे । तासां मुखेषु निश्चेरुरिति वाचो मनोहराः ॥ ८ ॥
सखि पश्यैष रामोऽसौ राजा दशरथात्मजः । राजत्युत्तमया योऽयं रत्नराशिरिव श्रिया ॥ ९ ॥
संपूर्णचंद्रसंकाशः पुंडरीकायतेक्षणः । अपूर्वकर्मणां सर्गः कोऽपि स्तुत्यधिकाकृतिः ॥ १० ॥
इमं या लभते कन्या धन्या रमणमुत्तमम् । कीर्तिस्तंभस्तया लोके स्थापितोऽयं स्वरूपया ॥११॥
परमश्चरितो धर्मश्चिरं जन्मांतरे यया । ईदृशं लभते नाथं सा सुनारी कुतोऽपरा ॥ १२ ॥
सहायतां निशास्वस्य या नारी प्रतिपद्यते । सैवैका योषितां मूर्द्धि वर्त्तते परया तु किम् ॥१३॥
स्वर्गतः प्रच्युता नूनं कल्याणी जनकात्मजा । इमं रमयति श्लाघ्यं पतिमिन्द्रं शचीव या ॥१४॥
असुरेन्द्रसमो येन रावणो रणमस्तके । साधितो लक्ष्मणः सोऽयं चक्रपाणिर्विराजते ॥ १५ ॥
भिन्नांजनदलच्छाया कांतिरस्य बलत्विषः । भिन्ना प्रयागतीर्थस्य धत्ते शोभां विसारिणीम् १६
चंद्रोदरसुतः सोऽयं विराधितनरेश्वरः । नययोगेन येनेयं विपुला श्रीरवाप्यते ॥ १७ ॥
असौ किष्किधराजोऽयं सुग्रीवः सत्त्वसंगतः । परमं रामदेवेन प्रेम यत्र नियोजितम् ॥ १८ ॥
अयं स जानकीभ्राता प्रभामंडलमंडितः । इंदुना खेचरेंद्रेण यो नीतः पदमीदृशम् ॥ १९ ॥
वीरोऽङ्गदकुमारोऽयमसौ दुर्लडितः परम् । यस्तदा राक्षसेन्द्रस्य विघ्नं कर्त्तुं समुद्यतः ॥ २० ॥

पश्य पश्येममुत्तुंगं स्यंदनं सखि सुन्दरम् । वातेरितमहाध्मातघनाभा यत्र दंतिनः ॥ २१ ॥
रणांगणे विपक्षाणां यस्य वानरलक्ष्मणं । ध्वजयष्टिरलं भीष्मा श्रीशैलोऽयं स मारुतिः ॥ २२ ॥
एवं वाग्भिर्विचित्राभिः पूज्यमाना महौजसः । राजमार्गं व्यगाहंत पद्मनाभादयः सुखम् ॥२३॥
अथांतिकस्थितामुक्त्वा पद्मश्चामरधारिणीम् । पप्रच्छ सादरं प्रेमरसार्द्रहृदयः परम् ॥ २४ ॥
या सा मद्विरहे दुःखं परिप्राप्ता सुदुःसहम् । भामंडलस्वसा कासाविह देशेऽवतिष्ठते ॥ २५ ॥
ततोऽसौ रत्नवलयप्रभाजटिलबाहुका । करशाखां प्रसार्योचे स्वामितोषणतत्परा ॥ २६ ॥
अट्टहासान्विमुंचतमिमं निर्झरवारिभिः । पुष्पप्रकीर्णनामानं राजन् पश्यति यं गिरिम् ॥ २७ ॥
नंदनप्रतिमेऽमुष्मिन्नुद्याने जनकात्मजा । कीर्त्तिशीलपरीवारा रमणी तव तिष्ठति ॥ २८ ॥
तस्या अपि समीपस्था सखी सुप्रियकारिणी । अंगुलीमूर्मिकां रम्यां प्रसार्यैवमभाषत ॥ २९ ॥
आतपत्रमिदं यस्य चंद्रमंडलसंनिभम् । चंद्रादित्यप्रतीकाशे धत्ते यश्चैष कुंडले ॥ ३० ॥
शरन्निर्झरसंकाशो हारो यस्य विराजते । सोऽयं मनोहरो देवि महाभूतिर्नरोत्तमः ॥ ३१ ॥
परमं त्वद्वियोगेन सुवक्त्रे खेदमुद्वहन् । दिग्गजेंद्र इवाऽऽयाति पद्मः पद्मनिरीक्षणे ॥ ३२ ॥
मुखारविंदमालोक्य प्राणनाथस्य जानकी । चिरात्स्वप्नमिव प्राप्तं मेने भूयो विषादिनी ॥ ३३ ॥

उत्तीर्ण द्विरदाधीशात्पद्मनाभः ससंभ्रमः । प्रमोदमुद्वहन्सीतां ससार विकचेक्षणः ॥ ३४ ॥
घनवृंदादिवोत्तीर्य चंद्रवल्लांगलायुधः । रोहिण्या इव वैदेह्यास्तुष्टिं चक्रे समाव्रजन् ॥ ३५ ॥
प्रत्यासन्नत्वमायातं ज्ञात्वा नाथं ससंभ्रमात् । मृगीवदाकुला सीता समुत्तस्थौ महाधृतिः ॥३६॥
भूरेणुधूसरीभूतकेशीं मलिनदेहिकाम् । कालनिर्गलितच्छायबंधूकसदृशाधराम् ॥ ३७ ॥
स्वभावेनैव तन्वंगीं विरहेण विशेषतः । तथापि किंचिदुच्छ्रासं दर्शनेन समागताम् ॥ ३८ ॥
आलिंगतीमिव स्निग्धैर्मयूखैः करजोद्गतैः । स्नपयंतीमिवोद्वेलविलोचनमरीचिभिः ॥ ३९ ॥
लिंपंतीमिव लावण्यसंपदा क्षणवृद्धया । वीजयंतीमिवोच्छ्रासैर्हर्षनिर्भदनिर्गतैः ॥ ४० ॥
पृथुलारोहवच्छ्रोणीं नेत्रविश्रामभूमिकाम् । पाणिपल्लवसौंदर्यजितश्रीपाणिपंकजाम् ॥ ४१ ॥
सौभाग्यरत्नसंभूतिधारिणीं धर्मरक्षिताम् । संपूर्णचंद्रवदनां कलंकपरिवर्जिताम् ॥ ४२ ॥
सौदामिनीसमच्छायामतिधीरत्वयोगिनीम् । मुखचंद्रांतरोद्भूतस्फीतनेत्रसरोरुहाम् ॥ ४३ ॥
कलुषत्वविनिर्मुक्तां समुन्नतपयोधराम् । चापयष्टिमनंगस्य वक्रतापरिवर्जिताम् ॥ ४४ ॥
आयांतीमंतिकं किंचिद्वैदेहीमापराजितः । विलोक्य निरुपाख्यानं भावं कमपि संगतः ॥ ४५ ॥
विनयेन समासाद्य रमणं रतिसुंदरी । वाष्पाकुलेक्षणा तस्थौ पुरः संगमनाकुला ॥ ४६ ॥

शचीव संगता शक्रं रतिर्वा कुसुमायुधम् । जिनधर्ममहिंसा नु सुभद्रा भरतेश्वरम् ॥ ४७ ॥
चिरस्यालोक्य तां पद्मः संगमं नूतनं विदन् । मनोरथशतैर्लब्धां फलभारप्रणामिभिः ॥ ४८ ॥
हृदयेन वहन् कंपं चिरासंगस्वभावजम् । महाद्युतिधरः कांतः संभ्रांततरलेक्षणः ॥ ४९ ॥
केयूरदष्टमूलाभ्यां भुजाभ्यां क्षणमात्रतः । संजातपीवरत्वाभ्यामालिलिंग रसाधिकम् ॥ ५० ॥
तामालिंगन्विलीनो नु मग्नो नु सुखसागरे । हृदयं संप्रविष्टो नु पुनर्विरहतो भयात् ॥ ५१ ॥
प्रियकंठसमासक्तबाहुपाशा सुमानसा । कल्पपादपसंसक्तहेमवल्लीव सा बभौ ॥ ५२ ॥
उद्भूतपुलकस्यास्य संगमेनातिसौख्यतः । मिथुनस्योपमां प्राप्तं तदेव मिथुनं परम् ॥ ५३ ॥
दृष्ट्वा सुविहितं सीता रामदेवसमागमम् । तमंबरगता देवा मुमुचुः कुसुमांजलिम् ॥ ५४ ॥
गंधोदकं च संगुंजन्भ्रांतभ्रमरभीरुकम् । विमुच्य मेघपृष्ठस्थाः ससृजुर्भारतीरिति ॥ ५५ ॥
अहो निरुपमं धैर्यं सीतायाः साधुचेतसः । अहो गांभीर्यमक्षोभमहो शीलमनोज्ञता ॥ ५६ ॥
अहो नु व्रतनैष्कम्प्यमहो सत्त्वं समुन्नतम् । मनसाऽपि यया नेष्टो रावणः शुद्धवृत्तया ॥ ५७ ॥
संभ्रांतो लक्ष्मणस्तावद्वैदेह्याश्चरणद्वयम् । अभिवाद्य पुरस्तस्थौ विनयानतविग्रहः ॥ ५८ ॥
पुरंदरसमच्छायं दृष्ट्वा चक्रधरं तदा । अस्रान्वितेक्षणा साध्वी जानकी परिषस्वजे ॥ ५९ ॥

उवाच च यथा भद्र गदितं श्रमणोत्तमैः । महाज्ञानधरैः प्राप्तं पदमुच्चैस्तथा त्वया ॥ ६० ॥
स त्वं चक्रांकराज्यस्य भाजनत्वमुपागतः । न हि निर्ग्रन्थसंभूतं वचनं जायतेऽन्यथा ॥ ६१ ॥
एषोऽसौ बलदेवत्वं तव ज्येष्ठः समागतः । विरहानलमग्नाया येन मे जनिता कृपा ॥ ६२ ॥
उडुनाथांशुविशदद्युतिस्तावदुपाययौ । स्वसुःसमीपधरणीं श्रीभामंडलमंडितः ॥ ६३ ॥
दृष्ट्वा तं मुदितं सीता सौदर्यस्नेहनिर्भरा । रणप्रत्यागतं वीरं विनीतं परिषस्वजे ॥ ६४ ॥
सुग्रीवो वायुतनयो नलो नीलांगदस्तथा । विराधितोऽथ चंद्राभः सुषेणो जांबवो बली ॥६५॥
जीमूतशल्यदेवाद्यास्तथा परमखेचराः । संश्राव्य निजनामानि मूर्ध्ना कृत्वाभिवादनम् ॥ ६६ ॥
विलेपनानि चारूणि वस्त्राण्याभरणानि च । पारिजातादिजातानि माल्यानि सुरभीणि च ॥६७॥
सीताचरणराजीवयुगलांतिकभूतले । अतिष्ठिपन् सुवर्णादिपात्रस्थानि प्रमोदिनः ॥ ६८ ॥

ऊचुश्च देवि त्वमुदारभावा । सर्वत्र लोके प्रथितप्रभावा ॥
श्रिया महत्या गुणसंपदा च । प्राप्ता पदं तुंगतमं मनोज्ञम् ॥ ६९ ॥
देवस्तुताचारविभूतिधानी । प्रीताऽधुना मंगलभूतदेहा ॥
येयं जयश्रीर्बलदेवयुक्ता । प्रभारवेर्यद्वदुदात्तलीला ॥ ७० ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे सीतासमागमाभिधानं नामैकोनाशीतितमं पर्व ।

# अथाशीतितमं पर्व ।

ततस्तां संगमादित्यप्रबोधितमुखांबुजाम् । पाणावादाय हस्तेन समुत्तस्थौ हलायुधः ॥ १ ॥
ऐरावतोपमं नागमारोप्य स्ववशानुगम् । आरोपयन्महातेजाः समग्रां कांतिमुद्वहन् ॥ २ ॥
चलद्घंटाभिरामस्य नागमेघस्य पृष्ठतः । जानकीरोहिणीयुक्तः शुशुभे पद्मचंद्रमाः ॥ ३ ॥
समाहितमतिः प्रीतिं दधानोऽत्यर्थमुन्नताम् । पूर्यमाणो जनौघेन महद्धर्या परितो वृतः ॥ ४ ॥
महद्भिरनुयातेन खेचरैरनुरागिभिः । अन्वितश्चक्रहस्तेन लक्ष्मणेनोत्तमत्विषा ॥ ५ ॥
रावणस्य विमानाभं भवनं भवनद्युतेः । पद्मनाभः परिप्राप्तः प्रविष्टश्च विचक्षणः ॥ ६ ॥
अपश्यच्च गृहस्यास्य मध्ये परमसुंदरम् । भवनं शांतिनाथस्य युक्तविस्तारतुंगतम् ॥ ७ ॥
हेमस्तंभसहस्रेण रचितं विकटद्युति । नानारत्नसमाकीर्णभित्तिभागं मनोरमम् ॥ ८ ॥
विदेहमध्यदेशस्थमंदराकारशोभितम् । क्षीरोदकेन पटलच्छायं नयनबंधनम् ॥ ९ ॥
क्वणत्किंकिणिकाजालमहाध्वजविराजितम् । मनोज्ञरूपसंकीर्णमशक्यपरिवर्णनम् ॥ १० ॥
उत्तीर्य नागतो मत्तनागेन्द्रसमविक्रमः । प्रसन्ननयनः श्रीमान् तद्विवेश सहांगनः ॥ ११ ॥

कायोत्सर्गविधानेन प्रलंबितभुजद्वयः । प्रशांतहृदयः कृत्वा सामायिकपरिग्रहम् ॥ १२ ॥
बद्धा करद्वयांभोजकुड्मलं सह सीतया । अघप्रमथनं पुण्यं रामः स्तोत्रमुदाहरत् ॥ १३ ॥
यस्यावतरणे शांतिर्जाता सर्वत्र विष्टपे । प्रलयं सर्वरोगाणां कुर्वती द्युतिकारिणी ॥ १४ ॥
चलितासनकैरिन्द्रैरागत्योत्तमभूतिभिः । यो मेरुशिखरे हृष्टैरभिषिक्तः सुभक्तिभिः ॥ १५ ॥
चक्रेणारिगणं जित्वा बाह्यं बाह्येन यो नृपः । आंतरं ध्यानचक्रेण जिगाय मुनिपुंगवः ॥ १६ ॥
मृत्युजन्मजराभीतिखड्गाद्यायुधचंचलम् । भावासुरं परिध्वस्य योऽगात्सिद्धिपुरं शिवम् ॥ १७ ॥
उपमारहितं नित्यं शुद्धमात्माश्रयं परम् । प्राप्तं निर्वाणसाम्राज्यं यो नात्यंतदुरासदम् ॥ १८ ॥
तस्मै ते शांतिनाथाय त्रिजगच्छांतिहेतवे । नमस्त्रिधा महेशाय प्राप्तात्यंतकशांतये ॥ १९ ॥
चराचरस्य सर्वस्य नाथ त्वमतिविह्वलः । शरण्यः परमस्त्राता समाधिद्युतिबोधिदः ॥ २० ॥
गुरुर्बंधुः प्रणेता च त्वमेकः परमेश्वरः । चतुर्णिकायदेवानां सशक्राणां समर्चितः ॥ २१ ॥
त्वं कर्त्ता धर्मतीर्थस्य येन भव्यजनः सुखम् । प्राप्नोति परमं स्थानं सर्वदुःखविमोक्षदम् ॥२२॥
नमस्ते देवदेवाय नमस्ते स्वस्तिकर्मणे । नमस्ते कृतकृत्याय लब्धलभ्याय ते नमः ॥ २३ ॥
महाशांतिस्वभावस्थं सर्वदोषविवर्जितम् । प्रसीद भगवन्नुच्चैः पदं नित्यं विदेहिनः ॥ २४ ॥

एवमादि पठन् स्तोत्रं पद्मः पद्मायतेक्षणः । चैत्यं प्रदक्षिणं चक्रे दक्षिणः पुण्यकर्मणि ॥ २५ ॥
प्रह्वांगा पृष्ठतस्तस्य जानकी स्तुतितत्परा । समाहितकरांभोजकुड्मला भाविनी स्थिता ॥ २६ ॥
महादुंदुभिनिर्घोषप्रतिमे रामनिस्वने । जानकीस्वनितं जज्ञे वीणानिःक्वणकोमलम् ॥ २७ ॥
सविशल्यस्ततश्चक्री सुग्रीवो रश्मिमंडलः । तथा वायुसुताद्याश्च मंगलस्तोत्रतत्पराः ॥ २८ ॥
बद्धपाणिपुटा धन्या भाविता जिनपुंगवे । गृहीतमुकुलांभोजा इव राजंति ते तदा ॥ २९ ॥
विमुंचत्सु स्वनं तेषु मुरजस्वनसुंदरम् । मेघध्वनिकृताशंका ननृतुश्छेकबर्हिणः ॥ ३० ॥
कृत्वा स्तुतिं प्रणामं च भूयो भूयः सुचेतसः । यथासुखं समासीनाः प्रांगणे जिनवेश्मनः ॥३१॥
यावत्ते वंदनां चक्रुस्तावद्राजा विभीषणः । सुमालिमाल्यवद्रत्नश्रवप्रभृतिबांधवान् ॥ ३२ ॥
संसारानित्यताभावदेशनात्यंतकोविदः । परिसांत्वनमानिन्ये महादुःखनिपीडितान् ॥ ३३ ॥
आर्यौ तात स्वकर्मोत्थफलभोजिषु जंतुषु । विधीयते मुधा शोकः क्रियतां स्वहिते मनः ॥३४॥
दृष्टागमा महाचित्ता यूयमेवं विचक्षणाः । वितथ जातो यदि प्राणी मृत्युं न प्रतिपद्यते ॥ ३५ ॥
पुष्पसौंदर्यसंकाशं यौवनं दुर्व्यतिक्रमम् । पल्लवश्रीसमालक्ष्मीर्जीवितं विद्युदध्रुवम् ॥ ३६ ॥
जलबुद्बुदसंयोगप्रतिमा बंधुसंगमाः । संध्यारागसमा भोगाः क्रियाः स्वप्नक्रियोपमाः ॥ ३७ ॥

यदि नाम प्रपद्येरन् जंतवो नैव पंचताम् । कथं संभवतां गोत्रमागतः स्याद्भवांतरात् ॥ ३८ ॥
आत्मनोऽपि यदा नाम नियमाद्विशरारुता । तदा कथमिवात्यर्थं क्रियते शोकमूढता ॥ ३९ ॥
एवमेतदिति ध्यानं संसाराचारगोचरम् । सतां शोकविनाशाय पर्याप्तं क्षणमात्रकम् ॥ ४० ॥
भाषितान्यनुभूतानि दृष्टानि च सुबंधुभिः । समं वृत्तानि साधूनां तापयंति मनः क्षणम् ॥ ४१ ॥
भवत्येव हि शोकेन संगो बंधुवियोगिनः । बलादिव विशालेन स्मृतिविभ्रंशकारिणा ॥ ४२ ॥
तथाऽप्यनादिकेऽमुष्मिन्संसारे भ्रमतो मम । केन बांधवतां प्राप्ता इति ज्ञात्वा सुगुह्यताम् ॥४३॥
यथा शक्त्या जिनेन्द्राणां भवध्वंसविधायिनाम् । विधाय शासने चित्तमात्मा स्वार्थे नियुज्यताम् ॥
एवमादिभिरालापैर्मधुरैर्हृदयंगमैः । परिसांत्व्य समाधाय बंधून् कृत्ये गृहं गतः ॥ ४५ ॥
अग्रां देवीसहस्रस्य व्यवहारविचक्षणाम् । प्रतिघाय विदग्धाख्यां महिषीं हलिनोंऽतिकम् ॥ ४६ ॥
आगत्य साभिजातेन प्रणामेन कृतार्थतां । ससीतौ भ्रातरौ वाक्यमिदं क्रमविदब्रवीत् ॥ ४७ ॥
अस्मत्स्वामिगृहं देव स्वगृहाशयलक्षितम् । कर्तुं पादतलासंगान्महानुग्रहमर्हसि ॥ ४८ ॥
वर्तते संकथा यावत्तेषां वार्तासमुद्भवा । स्वयं बिभीषणस्तावत्प्राप्तोऽत्यंतमहादरः ॥ ४९ ॥
उत्तिष्ठत गृहं यामः प्रसादः क्रियतामिति । तेनोक्तः सानुगः पद्मस्तद्गृहं गंतुमुद्यतः ॥ ५० ॥

यानैर्नानाविधैस्तुंगैर्गजैरंबुदसंनिभैः । तरंगचंचलैरश्वै रथैः प्रासादशोभिभिः ॥ ५१ ॥
विधाय कृतसंस्कारं राजमार्गं निरन्तरम् । विभीषणगृहं तेन प्रस्थितास्ते यथाक्रमम् ॥ ५२ ॥
प्रलयांबुदनिर्घोषास्तूर्यशब्दाः समुद्गताः । शंखकोटिरवोन्मिश्रा गह्वरप्रतिवादिनः ॥ ५३ ॥
भंभाभेरीमृदंगानां पटहानां सहस्रशः । लंपाककाहलाधुंधुदुंदुभीनां च निःस्वनैः ॥ ५४ ॥
झल्लाम्लातकढक्कानां हैकानां च निरंतरम् । गुंजाहुंकारसुंदानां तथा पूरितमंबरम् ॥ ५५ ॥
स्फीतैर्हलहलाशब्दैरट्टहासैश्च संततैः । नानावाहननादैश्च दिगंता बधिरीकृताः ॥ ५६ ॥
केचिच्छार्दूलपृष्ठस्थाः केचित्केसरिपृष्ठगाः । केचिद्रथादिभिर्वीराः प्रस्थिताः खेचरेश्वराः ॥५७॥
नर्त्तकीनटभंडाद्यैर्नृत्यद्भिरतिसुंदरम् । वंदिवृंदैश्च ते जग्मुः स्तूयमाना महास्वनैः ॥ ५८ ॥
अकांडकौमुदीसर्गमंडितैश्छत्रमंडलैः । नानायुधदलैश्चासन् भानुभासस्तिरोहिताः ॥ ५९ ॥
दिव्यस्त्रीवदनांभोजखंडनंदनमुत्तमम् । कुर्वन्तस्ते परिप्राप्ता विभीषणनृपालयम् ॥ ६० ॥
विभूतिर्या तदा तेषां बभूव शुभलक्षणा । सा परं द्युनिवासानां विद्यते जनिताद्भुता ॥ ६१ ॥
अवतीर्याथ नागेंद्राद्रत्नार्घादिपुरस्कृतौ । रम्यं विविशतुः सद्म ससीतौ रामलक्ष्मणौ ॥ ६२ ॥
मध्ये महालयस्यास्य रत्नतोरणसंगतम् । पद्मप्रभजिनेन्द्रस्य भवनं हेमसन्निभम् ॥ ६३ ॥

प्रांतावस्थितहर्म्यालीपरिवारमनोहरम् । शेषपर्वतमध्यस्थं मंदरौपम्यमागतम् ॥ ६४ ॥
हेमस्तंभसहस्रेण धृतमुत्तमभासुरम् । पूजितायामाविस्तारं नानामणिगणार्चितम् ॥ ६५ ॥
बहुरूपधरैर्युक्तं चंद्राभैर्वलभीपुटैः । गवाक्षप्रांतसंशक्तैर्मुक्ताजालैर्विराजितम् ॥ ६६ ॥
अनेकाद्भुतसंकीर्णैर्युक्तैः प्रतिसरादिभिः । प्रदेशैर्विविधैः कांतं पापप्रमथनं परम् ॥ ६७ ॥
एवंविधे गृहे तस्मिन्पद्मरागमयीं प्रभोः । पद्मप्रभजिनेंद्रस्य प्रतिमां प्रतिमोज्झिताम् ॥ ६८ ॥
भासमंभोजखंडानां दिशंतीं मणिभूमिषु । स्तुत्वा च परिवंदित्वा यथाऽर्हं समवस्थिताः ॥६९॥
यथायथं ततो याता खेचरेन्द्रा निरूपितम् । समाश्रयं बलं चित्ते विभ्राणाश्चक्रिणां तथा ॥७०॥
अथ विद्याधरस्त्रीभिः पद्मलक्ष्मणयोः पृथक् । सीतायाश्च शरीरस्य क्रियायोगः प्रवर्त्तितः ॥७१॥
अक्तासुगंधिभिः पथ्यैः स्नेहैः पूर्णमनोहरैः । घ्राणदेहानुकूलैश्च शुभैरुद्वर्तनैः कृतः ॥ ७२ ॥
स्थितानां स्नानपीठेषु प्राङ्मुखानां सुमंगलः । ऋद्ध्या स्नानविधिस्तेषां क्रमयुक्तः प्रवर्त्तितः ७३
वपुःकषणपानीयविसर्जनलयान्वितम् । हारि प्रवृत्तमातोद्यं सर्वोपकरणाश्रितम् ॥ ७४ ॥
हैमैर्मारकतैर्वज्रैः स्फाटिकैरिन्दुनीलजैः । कुंभैर्गंधोदकापूर्णैः स्नानं तेषां समापितम् ॥ ७५ ॥
पवित्रवस्त्रसंवीताः सुस्नाताः सदलंकृताः । प्रविश्य चैत्यभवनं पद्माभं ते ववन्दिरे ॥ ७६ ॥

तेषां प्रत्यवसानार्थो कार्या विस्तारिणी कथा । घृताद्यैः पूरिता वाप्यः सन्नद्भ्यैः पर्वताकृताः ७७
वनेषु नंदनाद्येषु वस्तुजातं यदुद्गतम् । मनोघ्राणेक्षणाभीष्टं तत्कृतं भोजनावनौ ॥ ७८ ॥
मृष्टमन्नं स्वभावेन जानक्या तु समंततः । कथं वर्णयितुं शक्यं पद्मनाभस्य चेतसः ॥ ७९ ॥
पंचानामर्थयुक्तत्वमिन्द्रियाणां तदेव हि । यदाभीष्टसमायोगे जायते कृतनिर्वृतिः ॥ ८० ॥
तदा भुक्तं तदा घ्रातं तदा स्पृष्टं तदेक्षितम् । तदा श्रुतं यदा जंतोर्जायते प्रियसंगमः ॥ ८१ ॥
विषयः स्वर्गतुल्योऽपि विरहे नरकायते । स्वर्गायते महारण्यमपि प्रियसमागमे ॥ ८२ ॥
रसायनरसैः कांतरद्भुतैर्बहुवर्णकैः । भक्ष्यैश्च विविधैस्तेषां निवृत्ता भोजनक्रिया ॥ ८३ ॥
खेचरेंद्रा यथायोग्यं कृतभूमिनिवेशनाः । भोजिता कृतसन्मानाः परिवारसमन्विताः ॥ ८४ ॥
चंदनाद्यैः कृताः सर्वैर्गंधैराबद्धषट्पदैः । भद्रशोभाद्यरण्योत्थैः कुसुमैश्च विभूषिताः ॥ ८५ ॥
स्पर्शानुकूललघुभिर्वस्त्रैर्युक्ता महाधनैः । नानारत्नप्रभाजालकरालितदिगाननाः ॥ ८६ ॥
सर्वे संभाविताः सर्वे फलयुक्तमनोरथाः । दिवा रात्रौ च चित्राभिः कथाभी रतिमागताः ॥८७॥
अहो राक्षसवंशस्य भूषणोऽयं विभीषणः । अनुवृत्तिरियं येन कृतेदृक्पद्मचक्रिणोः ॥ ८८ ॥
श्लाघ्यो महानुभावोऽयं जगत्युत्तुंगतां यतः । कृतार्थो भवने यस्य स्थितः पद्मः सलक्ष्मणः॥८९॥

एवं विभीषणाधारगुणग्रहणतत्परः । विद्याधरजनस्तस्थौ सुखं मत्सरवर्जितः ॥ ९० ॥
पद्मलक्ष्मणवैदेहीविभीषणकथागतः । पौरलोकः समस्तोऽभूत्परित्यक्तान्यसंकथः ॥ ९१ ॥
संप्राप्तबलदेवत्वं पद्मं लांगललक्षणम् । नारायणं च संप्राप्तचक्ररत्नं नरेश्वरम् ॥ ९२ ॥
अभिषेक्तुं समासक्ता विभीषणपुरःसराः । सर्वविद्याधराधीशा विनयेन ढुढौकिरे ॥ ९३ ॥
ऊचतुस्तौ गुरोःपूर्वमभिषेकमवाप्तवान् । प्रभुर्भरत एवाऽऽस्तेऽयोध्यायां व स एव नौ ॥ ९४ ॥
उक्तं तैरेवमेवैतत्तथाप्यभिषवेऽत्र कः । मंगले दृश्यते दोषो महापुरुषसेविते ॥ ९५ ॥
क्रियमाणामसौ पूजां भवतोरनुमन्यते । श्रूयतेऽत्यंतधीरोऽसौ मनसो नैति विक्रियाम् ॥ ९६ ॥
वस्तुतो बलदेवत्वचक्रित्वप्राप्तिकारणात् । संप्रतिष्ठा तयोरासीत्पूजा संभारसंगता ॥ ९७ ॥
एवमत्युन्नतां लक्ष्मीं संप्राप्तौ रामलक्ष्मणौ । लंकायामूचतुःस्वर्गनगर्यां त्रिदशाविव ॥ ९८ ॥
पुरे तत्रेंद्रनगरप्रतिमे स्फीतभोगदे । नदीसरस्तटाद्येषु देशेष्वस्थुर्नभश्चराः ॥ ९९ ॥
विद्यालंकारतांबूलवस्त्रहारविलेपनाः । चिक्रीडुस्तत्र ते स्वेच्छं सस्त्रीकाः स्वर्गिणो यथा ॥१००॥
दिनरत्नकरालीढसितपद्मांतरद्युतिः । वैदेहीवदनं पश्यन्पद्मस्तृप्तिमियाय न ॥ १०१ ॥
विरामरहितं रामस्तयात्यंताभिरामया । रामया सहितो रेमे रमणीयासु भूमिषु ॥ १०२ ॥

विशल्यासुंदरीयुक्तस्तथा नारायणो रतिम् । जगाम चिंतितप्राप्तसर्ववस्तुसमागमः ॥ १०३ ॥
याताः स्मः स्व इति स्वांतं कृत्वापि पुनरुत्तमाम् । संप्राप्य रतिमेतेषां गमनं स्मृतितश्च्युतम् १०४
तयोर्बहूनि वर्षाणि रतिभोगोपयुक्तयोः । गतान्येकदिनौपम्यं भजमानानि सौख्यतः ॥ १०५ ॥
कदाचिदथ संस्मृत्य लक्ष्मणश्चारुलक्षणः । पुराणि कूबरादीनि प्रजिघाय विराधितम् ॥ १०६ ॥
साभिज्ञानानसौ लेखानुपादाय महर्द्धिकः । कन्याभ्योऽदर्शयद्दत्वा क्रमेण विधिकोविदः ॥१०७॥
संवादजनितानंदाः पितृभ्यामनुमोदिताः । आजग्मुरनुरूपेण परिवारेण संगताः ॥ १०८ ॥
देशांगभोगनगरस्वामिनः कुलिशश्रुते । प्राप्ता रूपवती नाम कन्या रूपवती परा ॥ १०९ ॥
कूबरस्थाननाथस्य वालिखिल्यस्य देहजा । सर्वकल्याणमालाख्या प्राप्ता परमसुंदरी ॥ ११० ॥
पृथिवीपुरनाथस्य पृथिवीधरभूभृतः । प्रथिता वनमालेति दुहिता समुपागता ॥ १११ ॥
क्षेमांजलिपुरेशस्य जितशत्रोर्महीक्षितः । जितपद्मेति विख्याता तनया समुपागमत् ॥ ११२ ॥
उज्जयिन्यादितोऽप्येता नगराद्राजकन्यकाः । जन्मांतरकृतात्पुण्यात्परमात्पतिमीदृशम् ॥ ११३ ॥
दमदानदयायुक्तं शीलाढ्यं गुरुसाक्षिकम् । नह्युत्तमं तपोऽकृत्वा प्राप्यते पतिरीदृशः ॥ ११४ ॥
नूनं नास्तमिते भानौ भुक्तं साध्वी न दूषिता । विमानिता न दिग्वस्त्रा जातोऽयं पतिरीदृशः ॥

योग्यो नारायणस्तासां योग्या नारायणस्य ताः । अन्योऽन्यं तेन ताभिश्च गृहीतं सुरतामृतम् ॥
न सा संपन्नता शोभा न सा लीला न सा कला। तस्य तासां च या नाऽऽसीत्तत्र श्रेणिक का कथा।।
कथं पद्मं कथं चंद्रः कथं लक्ष्मीः कथं रतिः । भण्यतां सुंदरत्वेन श्रुत्वा तं किल तास्तथा ११८
रामलक्ष्मणयोर्दृष्ट्वा संपदं तां तथाविधाम् । विद्याधरजनौघानां विस्मयः परमोऽभवत् ॥ ११९ ॥
चंद्रवर्द्धनजातानामपि संगमनी कथा । कर्तव्या सुमहानंदा विवाहस्य च सूचनी ॥ १२० ॥
पद्मनाभस्य कन्यानां सर्वासां संगमस्तथा । स विवाहोऽभवत्सर्वलोकानंदकरः परः ॥ १२१ ॥
यथेप्सितमहाभोगसंबंधसुखभागिनौ । ताविन्द्राविव लंकायां रेमाते प्रमदान्वितौ ॥ १२२ ॥
वैदेहीदेहविन्यस्तसमस्तेंद्रियसंपदः । वर्षाणि षडतीतानि लंकायां सीरलक्ष्मणः ॥ १२३ ॥
सुखार्णवे निमग्नस्य चारुचेष्टाविधायिनः । काकुत्स्थस्य तदा सर्वमन्यत्स्मृतिपथाच्च्युतम् ॥१२४॥
एवं तावदिदं वृत्तं कथांतरमिदं पुनः । पापक्षयकरं भूप शृणु तत्परमानसः ॥ १२५ ॥
असाविन्द्रजितो योगी भगवान् सर्वपापहा । विद्यालब्धिसुसंपन्नो विजहार महीतलम् ॥ १२६ ॥
वैराग्यानिलयुक्तेन सम्यक्त्वारणिजन्मना । कर्मकक्षं महाघोरमदहद्ध्यानवह्निना ॥ १२७ ॥
मेघवाहानगारोऽपि विषयेंधनपावकः । केवलज्ञानतः प्राप्तः स्वभावं जीवगोचरम् ॥ १२८ ॥

तयोरनंतरं सम्यग्दर्शनज्ञानचेष्टितः । शुक्ललेश्याविशुद्धात्मा कलशश्रमणो मुनिः ॥ १२९ ॥
पश्यंल्लोकमलोकं च केवलेन तथाविधम् । विरजस्कः परिप्राप्तः परमं पदमच्युतम् ॥ १३० ॥
सुरासुरजनाधीशैरुद्गीतोत्तमकीर्तयः । शुद्धशीलधरा दीप्ताः प्रणताश्च महर्षयः ॥ १३१ ॥
गोष्पदीकृतनिःशेषगहनज्ञेयतेजसः । संसारक्लेशदुर्मोचजालबंधननिर्गताः ॥ १३२ ॥
अपुनःपतनस्थानसंप्राप्तिस्वार्थसंगताः । उपमानविनिर्मुक्तनिष्प्रत्यूहसुखात्मकाः ॥ १३३ ॥
एतेऽन्ये च महात्मानः सिद्धा निर्धूतशत्रवः । दिशंतु बोधिमारोग्यं श्रोतॄणां जिनशासने १३४
यशसा परिवीतान्यद्यत्वेऽपि परमात्मनाम् । स्थानानि तानि दृश्यंते दृश्यंते साधवो न ते १३५
विंध्यारण्यमहास्थल्यां सार्द्धमिन्द्रजितो यतः । मेघनादस्थितस्तेन तीर्थं मेघरवं स्मृतम् ॥ १३६॥
तूणीगतिमहाशैले नानाद्रुमलताकुले । नानापक्षिगणाकीर्णे नानाश्वापदसेविते ॥ १३७ ॥
परिप्राप्तोऽहमिन्द्रत्वं जंबुमाली महाबलः । अहिंसादिगुणाढ्यस्य किमु धर्मस्य दुष्करम् ॥ १३८॥
ऐरावतेऽवतीर्यासौ महाव्रतविभूषणः । कैवल्यतेजसा युक्तः सिद्धस्थानं गमिष्यति ॥ १३९ ॥
अरजा निस्तमो योगी कुंभकर्णो महामुनिः । निर्वृत्तो नर्मदातीरे तत्तीर्थं पिठरक्षतम् ॥ १४० ॥
नभोविचारिणीं पूर्वं लब्धिं प्राप्य महाद्युतिः । मयो विहरणं चक्रे स्वेच्छं निर्वाणभूमिषु ॥१४१॥

प्रदेशानृषभादीनां देवागमनसेवितान् । महाधृतिपरोऽपश्यद्रत्नत्रितयमंडनः ॥ १४२ ॥
मारीचः कल्पवासित्वं प्राप्याऽन्ये च महर्षयः । सत्त्वं यथाविधं यस्य फलं तस्य तथाविधम् ॥
वैदेह्याः पश्य माहात्म्यं दृढव्रतसमुद्भवम् । यथा संपालितं शीलं द्विषंतश्च विवर्जिताः ॥ १४४ ॥
सीताया अतुलं धैर्यं रूपं सुभगता मतिः । कल्याणगुणपूर्णायाः स्नेहबंधश्च भर्तरि ॥ १४५ ॥
शीलतः स्वर्गगामिन्या स्वभर्तृपरितुष्टया । चरितं रामदेवस्य सीतया साधु भूषितम् ॥ १४६ ॥
एकेन व्रतरत्नेन पुरुषांतरवर्जिना । स्वर्गारोहणसामर्थ्यं योषितामपि विद्यते ॥ १४७ ॥
मयोऽपि मायया तीव्रः कृत्वा प्राणिवधान् बहून् । प्रपद्य वीतरागत्वं प्राप लब्धीः सुसंयतः ॥
उवाच श्रेणिको नाथ ! श्रुतमिन्द्रजितादिजम् । माहात्म्यमधुना श्रोतुं वांछामि मयसंभवम्१४९
संत्यन्याः शीलवत्यश्च नृणां वसुमतीतले । स्वभर्तृनिरतात्मानस्ता नु किं स्वर्गताविताः ॥१५०॥
गण्यूचे यदि सीताया निश्चयेन व्रतेन च । तुल्याः पतिव्रताः स्वर्गं व्रजंत्येव गुणान्विताः १५१
सुकृतासुकृतास्वादनिस्पंदीकृतवृत्तयः । शीलवत्यः समा राजन्नु सर्वा विचेष्टितैः ॥ १५२ ॥
वीरुदाश्वेभलोहानामुपलद्रुमवाससाम् । योषितां पुरुषाणां च विशेषोऽस्ति महान्नृपः ॥ १५३ ॥
न हि चित्रभृतं वल्ल्यां वल्ल्यां कूष्मांडमेव वा । एवं न सर्वनारीषु सद्वृत्तं नृप विद्यते॥१५४॥

पतिव्रताभिमाना च प्रतिवंशसमुद्भवा । शीलांकुशादिनिर्याता प्राप्ता दुर्मतवारणम् ॥ १५५ ॥
लोकशास्त्रातिनिःसारस्तृणिना नैष शक्यते । वशीकर्तुं मनोहस्ती कुगतिं नयते ततः ॥ १५६ ॥
सर्वज्ञोक्त्यंकुशेनैव दयासौख्यान्विते पथि । शक्यो योजयितुं युक्तमतिना भव्यजंतुना ॥१५७॥
शृणु संक्षेपतो वक्ष्येऽभिमाना शीलवर्णनम् । परंपरासमायातमाख्यानकं विपश्चिताम् ॥ १५८ ॥
आसीज्जनपदो यस्मिन्काले रोगानिलाहतः । धान्यग्रामात्तदा पत्न्या सहैको निर्गतो द्विजः ॥
आसीन्नोदननामासावभिमानाभिधांगना । अग्निनाम्ना समुत्पन्ना मानिन्यामभिमानिनी ॥१६०॥
नोदनेनाभिमानासौ क्षुद्बाधाविह्वलात्मना । त्यक्त्वा गजवने प्राप्ता पतिं कररुहं नृपम् ॥१६१॥
पुष्पप्रकीर्णनगरस्वामी लब्धप्रसादया । पादेन मस्तके जातु तयाऽसौ ताडितो रतौ ॥ १६२ ॥
आस्थानस्थः प्रभातेऽसौ पर्यपृच्छद्बहुश्रुतान् । पादेनाऽऽहंति यो राज–शिरस्तस्य किमिष्यते १६३
तस्मिन् बहवः प्रोचुः सभ्याः पंडितमानिनः । यथाऽस्य छिद्यते पादः प्राणैर्वा स वियोज्यताम् ॥
हेमांकस्तत्र नामैको विप्रोऽभिप्रायकोविदः । जगाद तस्य पादोऽसौ पूजां संप्राप्यतां पराम् १६५
कोविदः कथमीदक्त्वमिति पृष्टः स भूभृता । दष्टस्त्रीदंतशस्त्रीजं क्षतमिष्टं स्वमैक्षयत् ॥ १६६ ॥
अभिप्रायविदित्येष हेमांकस्तेन भूभृता । प्रापितः परमामृद्धिः सर्वेभ्याश्चांतरं गताः ॥ १६७ ॥

हेमांकस्य गृहे तस्य नाम्ना मित्रयशाः सती । अमोघशरसंज्ञस्य भार्गवस्य प्रियाऽवसत् ॥१६८॥
विधवा दुःखिनी तस्मिन्त्रसंती भवने सुतम् । अशिक्षयदसावेवं स्मृतभर्तृगुणोत्करा ॥ १६९ ॥
सुनिश्चितात्मना येन बाल्ये विद्यागमः कृतः । हेमांकस्य द्युतिं तस्य विदुषः पश्य पुत्रक॥१७०॥
शरविज्ञाननिर्धूतसर्वभार्गवसंपदः । पितुस्तथाविधस्य त्वं तनयो बालिशो भव ॥ १७१ ॥
वाष्पविप्लुतनेत्रायाः श्रुत्वा मातुर्वचस्तदा । प्रशाम्यतां गतो विद्यां शिक्षितुं सोऽभिमानवान् ॥
ततो व्याघ्रपुरे सर्वाः कलाः प्राप्य गुरोर्गृहे । तत्प्रदेशसुकांतस्य सुतां हृत्वा विनिर्गतः ॥ १७३ ॥
तस्याः शीलाभिधानायाः कन्यकाया सहोदरः । सिंहेदुरिति निर्यातो युद्धार्थी पुरविक्रमः ॥१७४॥
एकको बलसंपन्नं जित्वा सिंहेंदुमाहवे । श्रीवर्द्धितोऽन्वितो मात्रा संप्राप्तः परमां धृतिम् ॥१७५॥
महाविज्ञानयुक्तेन तेन प्रख्यातकीर्त्तिना । लब्धं करुहाद्राज्यं नगरे पोदनाह्वये ॥ १७६ ॥
सुकांते पंचतां प्राप्ते सिंहेदुर्द्युतिशत्रुणा । अभिभूतः समं देव्या निरैद्गेहात्सुरंगया ॥ १७७ ॥
संभ्रांतः शरणं गच्छन् भगिनीं खेदवान्भृशम् । प्राप्तस्तांबूलिकैर्भारं वाहितः सह भार्यया ॥१७८॥
भानावस्तंगतेऽभ्यासं पोदनस्य स संगतः । मुक्तो राजन् भटै रात्रौ त्रासितो गहनं श्रितः १७९
महोरगेण संदष्टस्तं देवी परिदेवनी । कृत्वा स्कधे परिप्राप्ता देशं यत्र मयः स्थितः ॥ १८० ॥

वज्रस्तंभसमानस्य प्रतिमास्थानमीयुषः । महालब्धेः समीपस्य पादयोस्तमतिष्ठिपत् ॥ १८१ ॥
पादौ मुनेः परामृष्य पत्युर्गात्रं समापृशत् । देवी ततः परिप्राप्तः सिंहेंदुर्जीवितं पुनः ॥ १८२ ॥
चैत्यस्य वंदनां कृत्वा भक्त्या केसरिचंद्रमाः । प्रणनाम मुनिं भूयो भूयो दयितया समम् १८३
उद्गते भास्करे साधुः समाप्तनियमोऽभवत् । प्राप्तो विनयदत्तस्तं वंदनार्थमुपासकः ॥ १८४ ॥
संदेशाच्छ्रावको गत्वा पुरं श्रीवर्द्धितायतम् । सिंहेंदुं प्राप्तमाचख्यौ श्रुत्वा सन्नद्धमुद्यतः ॥ १८५ ॥
ततो यथावदाख्याते प्रीतिसंगतमानसः । महोपचारशेमुष्या स्यालं श्रीवर्द्धितोऽगमत् ॥ १८६ ॥
ततो बंधुसमायोगं प्राप्तः परमसंमदः । श्रीवर्द्धितः सुखासीनं पप्रच्छेति मयं नतः ॥ १८७ ॥
भगवन् ज्ञातुमिच्छामि पूर्वकं जन्ममात्मनः (?)। स्वजनानां च सत्साधुस्ततो वचनमब्रवीत् १८८
आसीच्छोभपुरे नाम्ना भद्राचार्यो दिगंबरः । अमलाख्यः पुरस्यास्य स्वामी गुणसमुत्करः १८९
स तं प्रत्यहमाचार्यं सेवितुं याति सन्मनाः । अन्यदा गंधमाजघ्रौ देशे तत्र सुदुःसहम् ॥१९०॥
स तं गंधं समाघ्राय कुष्टिन्यंगसमुद्गतम् । पद्भ्यामेव निजं गेहं गतोऽसहनको द्रुतम् ॥ १९१ ॥
अन्यतः कुष्टिनी सा तु प्राप्ता चैत्यांतिके तदा । विश्रांताऽऽसीद्व्रणेभ्योऽस्या दुर्गंधोऽसौ विनिर्ययौ ॥
अणुव्रतानि सा प्राप्य भद्राचार्यसकाशतः । देवलोकं गता च्युत्वाऽसौ कांता शीलवत्यभूत् १९३

यस्त्वसावमलो राजा पुत्रन्यस्तनृपक्रियः । संतुष्टः सोऽष्टभिर्ग्रामैः श्रावकत्वमुपाचरत् ॥ १९४ ॥
देवलोकमसौ गत्वा च्युतः श्रीवर्द्धितोऽभवत् । अधुना पूर्वकं जन्म मातुस्तव वदाम्यहम् ॥१९५॥
एको वैदेशिको भ्राम्यन्ग्रामं क्षुद्व्याधितोऽविशत् । स भोजनगृहे भुक्तिमलब्ध्वा कोपसंगतः १९६
सर्वं ग्रामं दहामीति निगद्य कटुकः स्वरम् । निष्क्रांतः सृष्टितोऽसौ च ग्रामः प्राप्तः प्रदीपनम् ॥
ग्राम्यैरानीय संक्रुद्धः क्षिप्तोऽसौ तत्र पावके । मृतो दुःखेन संभूतः सूपकारी नृपालये ॥ १९८ ॥
ततो मृता परिप्राप्ता नरकं घोरवेदनम् । तस्मादुत्तीर्य माताऽभूत्तव मित्रयशोभिधा ॥ १९९ ॥
बभूव पोदनस्थाने नाम्ना गोवाणिजो महान् । भुजपत्रेति तद्भार्या सौकांतिः सोभवन्मृतः २००
भुजपत्रापि जाताऽस्य कामिनी रतिवर्द्धनी । पीडनाद्गर्दभादीनां पुरा भारं च वाहितौ ॥२०१॥
एवमुक्त्वा मयो व्योम भासयन् स्वेप्सितं ययौ । श्रीवर्द्धितोऽपि नगरं प्राप्तबंधुसमागमः ॥२०२॥
पूर्वभाग्योदयाद्राजन् संसारे चित्रकर्मणि । राज्यं कश्चिदवाप्नोति प्राप्तं नश्यति कस्यचित् २०३
अप्येकस्माद्गुरोः प्राप्य जंतूनां धर्मसंगतिः । निदानानिर्निदानाभ्यां मरणाभ्यां पृथग्गतिः २०४
उत्तरंत्युदधिं केचिद्रत्नपूर्णः सुखान्विताः । मध्ये केचिद्विशीर्यंते तटे केचिद्धनाधिपाः ॥ २०५ ॥
इति ज्ञात्वाऽत्मनः श्रेयः सदा कार्यं मनीषिभिः । दयादमतपःशुद्ध्या विनयेनागमेन वा २०६

सकलं पोदनं नूनं तदा मयवचःश्रुतेः । उपशांतमभूद्भर्मगतचिंतं नराधिप ॥ २०७ ॥
ईदृग्गुणो विधिज्ञः प्रासुविहारी मयः प्रशांतात्मा । पंडितमरणं प्राप्तोऽभूदीशाने सुरश्रेष्ठः॥२०८॥
एतन्मयस्य साधोर्माहात्म्यं ये पठंति सच्चित्ताः । अरयः क्रव्यादा वा हिंसंति न तान् कदाचिदपि ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे मयोपाख्यानं नामाऽशीतितमं पर्व ॥ २० ॥

---

# अथैकाशीतितमं पर्व ।

ब्रह्मलोकभवाकारां लक्ष्मीं लक्ष्मणपूर्वजः । चंद्रार्कचूडदेवेंद्रप्रतिमोऽनुभवन्नसौ ॥ १ ॥
भर्तृपुत्रवियोगाग्निज्वालाशोषितविग्रहाम् । विस्मृतः कथमेकांतं जननीमपराजिताम् ॥ २ ॥
सप्तमं तलमारूढा प्रासादस्य सखीवृता । उद्विग्नाऽस्रप्रपूर्णाक्षा नवधेनुरिवावृता ॥ ३ ॥
वीक्षते सा दिशः सर्वाः पुत्रस्नेहपरायणा । कांक्षंती दर्शनं तीव्रशोकसागरवर्त्तिनी ॥ ४ ॥
पताकाशिखरे तिष्ठन्नुत्पतोत्पतवायसः । पद्मः पुत्रो ममाऽऽयातु तव दास्यामि पायसम् ॥ ५ ॥
इत्युक्त्वा चेष्टितं तस्य ध्यात्वा ध्यानं मनोहरम् । विलापं कुरुते नेत्रवास्यदुर्दिनकारिणी ॥ ६ ॥

हा वत्सक क्व यातोऽसि सततं सुखलालितः । विदेशभ्रमणे प्रीतिस्तव केयं समुद्गता ॥ ७ ॥
पादपल्लवयोः पीडां प्राप्नोषि परुषे पथि । विश्रमिष्यसि कस्याऽधो गहनस्योत्कटश्रमः ॥ ८ ॥
मंदभाग्यां परित्यज्य मकामत्यर्थदुःखिताम् । यातोऽसि कतमामाशां भ्रातृ पुत्रकसंगतः ॥ ९ ॥
परिवेदनमारेभे सा कर्तुं चैवमादिकम् । देवर्षिश्च परिप्राप्तो गगनांगणगोचरः ॥ १० ॥
जटाकूर्चधरः शुक्लवस्त्रप्रावृतविग्रहः । अवद्धारगुणाभिख्यो नारदः क्षितिविश्रुतः ॥ ११ ॥
तं समीपस्थमायातमभ्युत्थायापराजिता । आसनाद्युपचारेण सादरं सममानयत् ॥ १२ ॥
सिद्धयोगमुनिर्दृष्ट्वा तामश्रुतरलेक्षणाम् । आकारसूचितोदारशोकां संपरिपृष्टवान् ॥ १३ ॥
कुतः प्राप्ताऽसि कल्याणि विमाननमिदं यतः । रुद्यते न तु संभाव्यं तव दुःखस्य कारणम् १४
सुकोशलमहाराजदुहिता लोकविश्रुता । श्लाघ्याऽपराजिताभिख्या पत्नी दशरथश्रुतेः ॥ १५ ॥
पद्मनाभनृरत्नस्य प्रसवित्री सुलक्षणा । येन त्वं कोपिता मान्या देवतेव हतात्मना ॥ १६ ॥
अद्यैव कुरुते तस्य प्रतापाक्रांतविष्टपः । नृपो दशरथः श्रीमान्निग्रहं प्राणहारिणम् ॥ १७ ॥
उवाच नारदं देवी स त्वं चिरतरागतः । देवर्षे वेत्सि वृत्तांतं नेमं येनेति भाषसे ॥ १८ ॥
अन्य एवासि संवृत्तो वात्सल्यं तत्पुरातनम् । कुतो विशिथिलीभूतं लक्ष्यते निष्ठुरस्य ते ॥१९॥

कथं वार्त्तामपीदानीं त्वं नोपलभसे गुरुः । अतिदूरादिवायातः कुतोऽपि भ्रमणप्रियः ॥ २० ॥
तेनोक्तं धातकीखंडे सुरेन्द्ररमणे पुरे । विदेहेऽजनि पूर्वस्मिंस्त्रैलोक्यपरमेश्वरः ॥ २१ ॥
मंदरे तस्य देवेंद्रैः सुरासुरसमन्वितः । दिव्ययाऽद्भुतया भूत्या जननाभिषवः कृतः ॥ २२ ॥
तस्य देवाधिदेवस्य सर्वपापप्रणाशनः । अभिषेको मया दृष्टः पुण्यकर्मप्रवर्द्धकः ॥ २३ ॥
आनंदं ननृतुस्तत्र देवाः प्रमुदिताः परम् । विद्याधराश्च विभ्राणा विभूतिमति शोभनाम् ॥२४॥
जिनेंद्रदर्शनासक्तस्तस्मिन्नतिमनोहरे । त्रयोविंशतिवर्षाणि द्वीपेऽहमुषितः सुखम् ॥ २५ ॥
तथापि जननीतुल्यां संस्मृत्य भरतक्षितिम् । महाधृतिकरीमेष प्राप्तोऽहं चिरसेविताम् ॥ २६ ॥
जंबूभरतमागत्य व्रजाम्यद्यापि न क्वचित् । भवतीं द्रष्टुमायातो वार्त्ताज्ञानपिपासितः ॥ २७ ॥
ततोऽपराजिताऽवादीद्यथावृत्तमशेषतः । सर्वप्राणिहिताचार्यस्यागतिं गणधारिणः ॥ २८ ॥
वैदेहस्य समायोगं महाविद्याधरप्रभोः । दशस्यंदनराजस्य प्रव्रज्यां पार्थिवैः समम् ॥ २९ ॥
सीतालक्ष्मणयुक्तस्य पद्मनाभस्य निर्गमम् । वियोगं सीतया साकं सुग्रीवादिसमागमम् ॥ ३० ॥
लक्ष्मणं समरे शक्त्या लंकानाथेन ताडितम् । द्रोणमेघस्य कन्याया नयनं त्वरयान्वितम् ॥३१॥
इत्युक्त्वाऽनुस्मृतात्यंततीव्रदुःखपरायणा । अश्रुधारां विमुंचंती सा पुनः पर्यदेवत ॥ ३२ ॥

हा हा पुत्र गतः क्वासि चिरमेहि प्रयच्छ मे । वचनं कुरु साधारं मग्नायाः शोकसागरे ॥३३॥
पुण्योज्झिता त्वदीयास्यमपश्यंती सुजातक । तीव्रदुःखानलालीढा हतं मन्ये स्वजीवितम् ॥३४॥
बंदिग्रहं समानीता राजपुत्री सुखैधिता । बाला वनमृगीमुग्धा सीता दुःखेन तिष्ठति ॥ ३५ ॥
निर्घृणेन दशास्येन शक्त्या लक्ष्मणसुंदरः । ताडितो जीवितं धत्ते नेति वार्त्ता न विद्यते ॥ ३६ ॥
हा सुदुर्लभकौ पुत्रौ हा सीते सति बालिके । प्राप्तासि जलधेर्मध्ये कथं दुःखमिदं परम् ॥ ३७ ॥
तं वृत्तातं ततो ज्ञात्वा वीणां क्षिप्त्वा महीतले । उद्विग्नो नारदस्तस्थौ हस्ताघाघाय मस्तके ३८
क्षणनिष्कंपदेहश्च विमृश्य बहुवीक्षितः । अब्रवीद्देवि नो सम्यग्वृत्तमेतद्विभाति मे ॥ ३९ ॥
त्रिखंडाधिपतिश्चंडो विद्याधरमहेश्वरः । वैदेहकपिनाथाभ्यां रावणः किं प्रकोपितः ॥ ४० ॥
तथापि कौशले शोकं मा कृथाः परमं शुभे । अचिरादेष ते वार्त्तामानयामि न संशयः ॥ ४१ ॥
कृत्यं विधातुमेतावद्देवि सामर्थ्यमस्ति मे । शक्तः स एव शेषस्य कार्यस्य तव नंदनः ॥ ४२ ॥
प्रतिज्ञामेवमादाय नारदः खं समुद्गतः । वीणां कक्षांतरे कृत्वा सखीमिव परां प्रियाम् ॥ ४३ ॥
ततो वातगतिः क्षोणीं पश्यन्दुर्लक्ष्यपर्वताम् । लंकां प्रतिकृताशंको नारदश्चकितं ययौ ॥ ४४ ॥
समीपीभूय लंकायाश्चितामेवमुपागतः । कथं वार्त्तापरिज्ञानं करोमि निरुपायकम् ॥ ४५ ॥

पद्मलक्ष्मणवार्त्तायाः प्रश्ने दोषोऽभिलक्ष्यते । पृच्छतो दशवक्त्रं तु स्फीतमार्गो न दृश्यते ॥४६॥
अनेनैवानुपूर्व्येण वार्त्तां ज्ञास्ये मनीषिताम् । इति ध्यात्वा सुविश्रब्धो गतः पद्मसरो यतः॥४७॥
तस्यां च तत्र वेलायामन्तःपुरसमन्वितः । तारायास्तनयः क्रीडां कुरुते चारुविभ्रमः ॥ ४८ ॥
तटस्थं पुरुषं तस्य कृतपूर्वप्रियोदितः । कुशलं रावणस्येति पप्रच्छावस्थितः क्षणम् ॥ ४९ ॥
श्रुत्वा तद्वचनं क्रुद्धाः किंकराः स्फुरिताधराः । जगदुःकथमेव त्वं दुष्टं तापस भाषसे ॥ ५० ॥
कुतो रावणवर्गीणो मुनिखेटस्त्वमागतः । इत्युक्त्वा परिवार्यासावंगदस्यांतिकीकृतः ॥ ५१ ॥
कुशलं रावणस्यायं पृच्छतीत्युदिते भटैः । न कार्यं दशवक्त्रेण ममेति मुनिरभ्यधात् ॥ ५२ ॥
तैरुक्तं यद्यदः सत्यं तस्य कस्मात्प्रमोदवान् । कुशलोदंतसंप्रश्नो वर्त्तसे परमादरः ॥ ५३ ॥
ततोऽगदः प्रहस्योचे व्रजतैनं कुतापसम् । दुरीहं पद्मनाभाय मूढं दर्शयत द्रुतम् ॥ ५४ ॥
पृष्ठतः प्रेर्यमाणोऽसौ वाह्वाकर्षणतत्परैः । सुकष्टं नीयमानस्तैरिति चिंतामुपागतः ॥ ५५ ॥
बहवः पद्मनाभाख्याः संत्यत्र वसुधातले । न जाने कतमः स स्यान्नीये यस्याहमंतिकम् ॥५६॥
अर्हच्छासनवात्सल्या देवता मम तायनम् । काचित्कुर्वीत किं नाम पतितोऽस्म्यतिसंशये॥५७॥
शिखांतिकगतप्राणो नारदः पुरुवेपथुः । विभीषणगृहद्वारं प्रविष्टः सद्गुहाकृतिम् ॥ ५८ ॥

पद्माभं दूरतो दृष्ट्वा सहसोद्भ्रांतमानसः । अब्रह्मण्यमिति स्फीतं प्रस्वेदी मुमुचे स्वरम् ॥ ५९ ॥
श्रुत्वा तस्य रवं दत्त्वा दृष्टिं लक्ष्मणपूर्वजः । अवद्वारं परिज्ञाय स्वयमाहादरान्वितः ॥ ६० ॥
मुंचध्वमाशु मुंचध्वमेतमित्युज्झितश्च सः । पद्माभस्यांतिकं गत्वा प्रहृष्टोऽवस्थितः पुरः ॥ ६१ ॥
स्वस्त्याशीर्भिः समानंद्य पद्मनारायणावृषिः । परित्यक्तपरित्रासः स्थितो दत्ते सुखासने ॥६२॥
पद्मनाभस्ततोऽवोचत्सोऽवद्वारगतिर्भवान् । क्षुल्लकोऽभ्यागतः कस्मादुक्तश्च स जगौ क्रमात् ६३
व्यसनार्णवमग्नाया जनन्या भवतोंऽतिकात् । प्राप्तोऽस्मि वेदितुं वार्त्तां त्वत्पादकमलांतिकम्॥६४॥
मान्यापराजिता देवी भव्या भगवती तव । माताऽश्रुधौतवदना दुःखमास्ते त्वया विना ॥६५॥
सिंही किशोररूपेण रहितेव समाकुला । विकीर्णकेशसंभारा कृतकुट्टिमलोठना ॥ ६६ ॥
विलापं कुरुते देव तादृशं येन तत्क्षणम् । मन्ये संजायते व्यक्तं दृषदामपि मार्दवम् ॥ ६७ ॥
तिष्ठति त्वयि सत्पुत्रे कथं तनयवत्सला । महागुणधरी स्तुत्या कृच्छ्रं सा परमं गता ॥ ६८ ॥
अद्यश्वीनमिदं मन्ये तस्याः प्राणविवर्जनम् । यदि तां नेक्षसे शुष्कां त्वद्वियोगोरुभानुना ॥६९॥
प्रसादं कुरुतां पश्य व्रजोत्तिष्ठ किमास्यते । एतस्मिन्ननु संसारे बंधुर्माता प्रधानतः ॥ ७० ॥
वार्त्तेयमेव कैकय्या अपि दुःखेन वर्त्तते । तया हि कुट्टिमतलं कृतमश्रेण पल्वलम् ॥ ७१ ॥

नाहारे शयने रात्रौ न दिवास्ति मनागपि । तस्याः स्वस्थतया योगो भवतोर्विप्रयोगतः ॥७२॥
कुररीव कृताक्रंदा शावकेन वियोगिनी । उरः शिरश्च सा हंति कराभ्यां विह्वला भृशम् ॥ ७३ ॥
हा लक्ष्मीधर सज्जात जननीमेहि जीवय । द्रुतं वाक्यं प्रयच्छेति विलापं सा निषेवते ॥ ७४ ॥
तनयायोगतीव्राग्निज्वालालीढशरीरके । दर्शनामृतधाराभिर्मातरौ नयतं समम् ॥ ७५ ॥
एवमुक्तं निशम्यैतौ संजातौ दुःखितौ भृशम् । विमुक्तास्रौ समाश्वासं खेचरेशैरुपाहृतौ ॥ ७६ ॥
उवाच वचनं पद्मः कथंचिद्धैर्यमागतः । अहो महोपकारोऽयमस्माकं भवता कृतः ॥ ७७ ॥
विकर्मणः स्मृतेरेव जननी नः परिच्युता । स्मरिता भवता साऽहं किमतोऽन्यन्महत्प्रियम् ॥७८॥
पुण्यवान् स नरो लोके यो मातुर्विनये स्थितः । कुरुते परिशुश्रूषां किंकरत्वमुपागतः ॥ ७९ ॥
एवं मातृमहास्नेहरसप्लावितमानसः । अपूजयदवद्धारं लक्ष्मणेन समं नृपः ॥ ८० ॥
अतिसंभ्रांतचित्तश्च समाहूय विभीषणम् । प्रभामंडलसुग्रीवसन्निधावित्यभाषत ॥ ८१ ॥
महेन्द्रभवनाकारे भवनेस्मिन्विभीषण । तव नो विदितोस्माभिर्यातः कालो महानपि ॥ ८२ ॥
ग्रैष्मादित्यांशुसंतानतापितस्यैव वत्सरः । चिरादवस्थितं चित्ते मातृदर्शनमद्य मे ॥ ८३ ॥
स्मृतमात्रवियोगाग्नितापिन्यतिमात्रकम् । तद्दर्शनांबुनांगानि प्रापयाम्यतिनिर्वृतिम् ॥ ८४ ॥

अयोध्यानगरीं द्रष्टुं मनो मेत्युत्सुकं स्थितम् । सा हि माता द्वितीयेव स्मरयत्यधिकं वरा ॥८५॥
ततो विभीषणोऽवोचत्स्वामिन्नेवं विधीयताम् । यथाज्ञापयसि स्वांतं देवस्योपैतु शांतताम् ॥८६॥
प्रेष्यंते नगरीं दूता वार्त्तां ज्ञापयितुं शुभाम् । भवतोश्चागमं येन जनन्यौ व्रजतः सुखम् ॥ ८७ ॥
त्वया तु षोडशाहानि स्थातुमत्र पुरे विभो । प्रसादो मम कर्त्तव्यः समाश्रितसुवत्सलः ॥ ८८ ॥
इत्युक्त्वा मस्तकं न्यस्य समणिं रामपादयोः । तावद्विभीषणस्तस्थौ यावत्स प्रतिपन्नवान्॥८९॥
अथ प्रासादमूर्धस्था नित्यदक्षिणदिङ्मुखी । दूरतः खेचरान् वीक्ष्य जगादेत्यपराजिता ॥ ९० ॥
पश्य पश्य सुदूरस्थानेतान् कैकयि खेचरान् । आयातोऽभिमुखानाशु वातेरितघनोपमान् ॥९१॥
अद्यैते श्राविकेऽवश्यं कथयिष्यंति शोभनाम् । वार्त्तां संप्रेषिता नूनं सानुजेन सुतेन मे ॥ ९२ ॥
सर्वथैवं भवत्वेतदिति यावत्कथा तयोः । वर्त्तते तावदायाताः समीपं दूतखेचराः ॥ ९३ ॥
उत्सृजंतश्च पुष्पाणि समुत्तीर्य नभस्तलात् । प्रविश्य भवनं ज्ञाताः प्रहृष्टा भरतं ययुः ॥ ९४ ॥
राज्ञा प्रमोदिना तेन सन्मानं समुपाहृताः । आशीर्वादप्रसक्तास्ते योग्यासनसमाश्रिताः ॥ ९५ ॥
यथावद्वृत्तमाचख्युरतिसुंदरचेतसः । पद्माभं बलदेवत्वं प्राप्तं लांगललक्ष्मणम् ॥ ९६ ॥
उत्पन्नचक्ररत्नं च लक्ष्मणं हरिताभितम् । तयोर्भरतवासस्य स्वामित्वं परमोन्नतम् ॥ ९७ ॥

रावणं पंचतां प्राप्तं लक्ष्मणेन हतं रणे । दीक्षामिन्द्रजितादीनां वंदिगृहमुपेयुषाम् ॥ ९८ ॥
तार्क्ष्यकेसरिसद्विद्याप्राप्तिं साधुप्रसादतः । विभीषणमहाप्रीतिं भोगं लंकाप्रवेशनम् ॥ ९९ ॥
एवं पद्माभलक्ष्मीभृदुदयस्तुतिसम्मदी । स्रक्तांबूलसुगंधाद्यैर्दूतानभ्यर्हयन्नृपः ॥ १०० ॥
गृहीत्वा तांस्तयोर्मात्रोः सकाशं भरतो ययौ। शोकिन्यौ वाष्पपूर्णाक्ष्यौ ते समानंदिते च तैः १०१
पद्माभचक्रभृन्मात्रोर्दूतानां च सुसंकथा । मनःप्रह्लादिनी यावद्वर्त्तते भूतिशंसिनी ॥ १०२ ॥
खेरावृत्य पंथानं तावत्तत्र सहस्रशः । हेमरत्नादिसंपूर्णैर्वाहनैरतिगत्वरैः ॥ १०३ ॥
विचित्रजलदाकाराः प्रापुर्वैद्याधरा गणाः । जिनावतरणे काले देवा इव महौजसः ॥ १०४ ॥
ततस्ते व्योमपृष्ठस्था नानारत्नमयीं पुरि । वृष्टिं मुमुचुरुद्योतपूरिताशां समंततः ॥ १०५ ॥
पूरितायामयोध्यायामेकैकस्य कुटुंबिनः । गृहेषु भूधराकाराः कृता हेमादिराशयः ॥ १०६ ॥
जन्मांतरकृतश्लाघ्यकर्मा स्वर्गच्युतोऽथवा । लोकोऽयोध्यानिवासी यो येन प्राप्तस्तथा श्रियम् ॥
तस्मिन्नेव पुरे दत्ता घोषणाऽनेन वस्तुना । मणिचामीकराद्येन यो न तृप्तिमुपागतः ॥ १०८ ॥
प्रविश्य स नरः स्त्री वा निर्भयं पार्थिवालयम् । द्रव्येण पूरयित्वाऽऽत्मभवनं निजयेच्छया १०९
श्रुत्वा तां घोषणां सर्वस्तस्यां जनपदोऽगदत् । अस्माकं भवने शून्यं स्थानमेव न विद्यते ११०

विस्मयादित्यसंपर्कविकचाननपंकजाः । शशंसुर्वनिताः पद्मं कृतदारिद्र्यनाशनाः ॥ १११ ॥
आगत्य बहुभिस्तावद्दक्षैः खेचरशिल्पिभिः । रूप्यहेमादिभिर्लेपैर्लिप्ता भवनभूमयः ॥ ११२ ॥
चैत्यागाराणि दिव्यानि जनितान्यतिभूरिशः । महाप्रासादमालाश्च विंध्यकूटावलीसमाः॥११३॥
सहस्रस्तंभसंपन्ना मुक्तादामविराजिताः । रचिता मंडपाश्चित्राश्चित्रपुस्तोपशोभिताः ॥ ११४ ॥
खचितानि महारत्नैर्द्वाराणि करभस्वरैः । पताकालीसमायुक्तास्तोरणौघाः समुच्छ्रिताः ॥११५॥
अनेकाश्चर्यसंपूर्णा प्रवृत्तसुमहोत्सवा । साऽयोध्या नगरी जाता लंकादिजयकारिणी ॥ ११६ ॥
महेंद्रशिखराभेषु चैत्यगेहेषु संततः । अभिषेकोत्सवा लग्नाः संगीतध्वनिनादिताः ॥ ११७ ॥
भ्रमरैरुपगीतानि समानि सजलैर्घनैः । उद्यानानि सुपुष्पाणि जातानि सफलानि च ॥ ११८ ॥
वहिराशास्वशेषासु वनैर्मुदितजंतुभिः । नंदनप्रतिमैर्जाता नगरी सुमनोहरा ॥ ११९ ॥
नवयोजनविस्तारा द्वादशायामसंगता । ह्यधिकानि तु षड्विंशत्परिक्षेपेण पूरसौ ॥ १२० ॥
दिनैः षोडशभिश्चारुनभोगोचरशिल्पिभिः । निर्मिता शंसितुं शक्या न सा वर्षशतैरपि ॥१२१॥
वाप्यः कांचनसोपाना दीर्घिकाश्च सुरोधसः । पद्मादिभिः समाकीर्णा जाता ग्रीष्मेप्यशोषिताः ॥
स्नानक्रीडातिसंभोग्यास्तटस्थितजिनालयाः । दधुस्ताः परमां शोभां वृक्षपालीसमावृताः १२३

कृतां स्वर्गपुरीतुल्यां ज्ञात्वा तां नगरीं हली । श्वो यानशंसिनीं स्थाने घोषणां समदापयत् १२४
यदैव वार्ता गगनांगणायना । मुनिस्तयोर्मातृसमुद्भवां जगौ ॥
ततः प्रभृत्येव हि सीरिचक्रिणौ । सदा सविज्यौ हृदयेन बभ्रतुः ॥ १२५ ॥
अचिंतितं कृत्स्नमुपैति चारुतां । कृतेन पुण्येन पुराऽसुधारिणाम् ॥
ततो जनः पुण्यपरोऽस्तु संततं । न येन चिंताविताषमश्नुते ॥ १२६ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे साकेतनगरीवर्णनं नामैकाशीतितमं पर्व ।

# अथ द्व्यशीतितमं पर्व ।

अथोदयमिते भानौ पद्मनारायणौ तदा । यानं पुष्पकमारुह्य साकेतां प्रस्थितौ शुभौ ॥ १ ॥
परिवारसमायुक्ता विविधैर्यानवाहनैः । विद्याधरेश्वरा गंतुं शक्तास्तत्सेवनोद्यताः ॥ २ ॥
छत्रध्वजनिरुद्धार्ककिरणं वायुगोचरम् । समाश्रितां महीं दूरं पश्यंतो गिरिभूषिताम् ॥ ३ ॥
विलसद्विविधप्राणिसंघातं क्षीरसागरम् । व्यतीत्य खेचरा लीलां वहंतो यांति हर्षिणः ॥ ४ ॥

पद्मस्यांकगता सीता सती गुणसमुत्कटा । लक्ष्मीरिव महाशोभा पुरो न्यस्तेक्षणा जगौ ॥ ५ ॥
जंबूद्वीपतलस्येदं मध्ये नाथ किमीक्ष्यते । अत्यंतमुज्ज्वलं पद्मस्ततोऽभाषत सुंदरी ॥ ६ ॥
देवि यत्र पुरा देवैर्मुनिसुव्रततीर्थकृत् । देवदेवप्रभुर्बाल्ये हृष्टैर्नीतोऽभिषेचनम् ॥ ७ ॥
सोऽयं रत्नमयैस्तुंगैः शिखरैश्चित्तहारिभिः । विराजते नगाधीशो मंदरो नाम विश्रुतः ॥ ८ ॥
अहो वेगादतिक्रांतं विमानं पदवीं पराम् । एहि भूयो व्रजं याम इति गत्वा पुनर्जगौ ॥ ९ ॥
एतत्तु दंडकारण्यमिभाभोगमहातमः । लंकानाथेन यत्रस्था हृता त्वं स्वोपघातिना ॥ १० ॥
चारणश्रमणौ यत्र त्वया सार्द्धं मया तदा । पारणं लंभितौ सैषा सुभगे दृश्यते नदी ॥ ११ ॥
सोऽयं सुलोचने भूभृद्वंशोऽभिख्योऽभिलक्ष्यते । हृष्टौ यत्र मुनी युक्तौ देशगोत्रविभूषणौ ॥ १२ ॥
कृतं मया ययोरासीद्भवत्या लक्ष्मणेन च । प्रातिहार्यं ततो यातं केवलं शिवसौख्यदम् ॥ १३ ॥
वालिखिल्यपुरं भद्रे तदेतद्यत्र लक्ष्मणः । प्राप कल्याणमालाख्यां कन्यां कांचित्त्वया समाम् १४
दशांगभोगनगरमदस्तद्दृश्यते प्रिये । रूपवत्याः पिता वज्रस्रवा यच्छ्रावकः पुरः ॥ १५ ॥
पुनरालोक्य धरणीं पुनः पप्रच्छ जानकी । कांतेयं नगरी कस्य खेचरेशस्य दृश्यते ॥ १६ ॥
विमानसदृशैर्गेहैरियमत्यंतमुत्कटा । न जातुचिन्मया दृष्टा त्रिविष्टपविडंबिनी ॥ १७ ॥

जानकीवचनं श्रुत्वा दिशश्चालोक्य मंथरम् । क्षणं विश्रान्तचेतस्को ज्ञात्वा पद्मः स्मितो जगौ ॥
पूरयोध्याप्रिये सेयं नूनं खेचरशिल्पिभिः । अन्येव रचिता भाति जितलंका परद्युतिः ॥ १९ ॥
ततोऽत्युग्रं विहायःस्थं विमानं सहसा परम् । द्वितीयादित्यसंकाशं वीक्ष्य क्षुब्धा नगर्यसौ ॥२०॥
आरुह्य च महानागं भरतः प्राप्तसंभ्रमः विभूत्या परया युक्तः शक्रवन्निरगात्पुरः ॥ २१ ॥
तावदैक्षत सर्वाशाः स्थगिता गगनायनैः । नानायानविमानस्थैर्विचित्रर्द्धिसमन्वितैः ॥ २२ ॥
दृष्ट्वा भरतमायांतं भूमिस्थापितपुष्पकौ । पद्मलक्ष्मीधरौ यातौ समीपत्वं सुसंमदौ ॥ २३ ॥
समीपौ तावितौ दृष्ट्वा गजादुत्तीर्यकैकयः । पूजामर्घशतैश्चक्रे तयोः स्नेहादिपूरितैः ॥ २४ ॥
विमानशिखरात्तौ तं निष्क्रम्य प्रीतिनिर्भरम् । केयूरभूषितभुजावग्रजावालिलिंगतुः ॥ २५ ॥
दृष्ट्वा पृष्टौ च कुशलं कृतशंसनसत्कथौ । भरतेन समेतौ तावारूढौ पुष्पकं पुनः ॥ २६ ॥
प्रविशंति ततः सर्वे क्रमेण कृतसत्क्रियाम् । अयोध्यानगरीं चित्रपताकाशबलीकृताम् ॥ २७ ॥
संघट्टसंगतैर्यानैर्विमानैर्ययुभी रथैः । अनेकपघटाभिश्च मार्गोऽभूद्व्यवकाशकः ॥ २८ ॥
प्रलयजलभृत्तुल्यास्तूर्यघोषाः समुद्ययुः । शङ्खकोटिरवोन्मिश्रा भंभाभेरीमहारवाः ॥ २९ ॥
पटहानां पटीयांसो मृदंगानां मंद्रता ययुः । लंपानां कंपशंपानां धुंधूनां मधुरा भृशम् ॥ ३० ॥

झल्लाम्लातकहक्कानां हैकहुंकारसंगिनाम् । गुंजाराटितनाम्नां च वादित्राणां महास्वनाः ॥ ३१ ॥
सुकलाः काहला नादा घना हलहलारवाः । भट्टहासास्तुरंगेभसिंहव्याघ्रादिनिस्वनाः ॥ ३२ ॥
वंशस्वनानुगामीनि गीतानि विविधानि च । विनर्दितानि भांडानां वंदिनां पठितानिच ॥ ३३ ॥
संक्रीडितानि रम्याणि रथानां सूर्यतेजसाम् । वसुधाक्षोभघोषाश्च प्रतिशब्दाश्च कोटिशः ॥ ३४ ॥
एवं विद्याधराधीशैर्विभ्रद्भिः परमां श्रियम् । वृतौ विविशतः कांतौ पुरं पद्माभचक्रिणौ ॥ ३५ ॥
आसन् विद्याधरा देवा इन्द्रौ पद्माभचक्रिणौ । अयोध्यानगरी स्वर्गो वर्णना तत्र कीदृशी ॥ ३६ ॥
पद्माननिशानाथं वीक्ष्य लोकमहोदधिः । कलध्वनिर्ययौ वृद्धिमत्या वर्त्तनवेलया ॥ ३७ ॥
विज्ञायमानपुरुषैः पूज्यमानौ पदे पदे । जय वर्द्धस्व जीवेति नंदेति च कृताशिषौ ॥ ३८ ॥
अत्युत्तुंगविमानाभभवनानां शिरः स्थिताः । सुंदर्यस्तौ विलोकंत्यो विकचांभोजलोचनाः ॥ ३९ ॥
संपूर्णचक्रसंकाशं पद्मं पद्मनिभेक्षणम् । प्रावृषेण्यघनच्छायं लक्ष्मणं च सुलक्षणम् ॥ ४० ॥
नार्यो निरीक्षितुं शक्ता मुक्ताशेषापरक्रियाः । गवाक्षान्वदनैश्चक्रुर्व्योमांभोजवनोपमान् ॥ ४१ ॥
राजन्नन्योन्यसंपर्के निर्भरे सति योषिताम् । सृष्टाऽपूर्वा तदा वृष्टिश्छिन्नहारैः पयोधरैः ॥ ४२ ॥
च्युतं न पतितं भूमौ कांचीनूपुरकुंडलम् । तासां तद्गतचित्तानां ध्वनयश्चैवमुद्गताः ॥ ४३ ॥

यस्यैषांकगता भाति प्रिया गुणधरा सती । देवी विदेहजा सोऽयं पद्मनाभो महेक्षणः ॥ ४४ ॥
निहतः प्रधने येन सुग्रीवाकृतितस्करः । वृत्रदैत्यपतेर्नप्ता स साहसगतिः खलः ॥ ४५ ॥
अयं लक्ष्मीधरो येन शक्रतुल्यपराक्रमः । हतो लंकेश्वरो युद्धे स्वेन चक्रेण वक्षसि ॥ ४६ ॥
सुग्रीवोऽयं महासत्त्वस्तनयोऽस्यायमंगदः । अयं भामंडलाभिख्यः सीतादेव्याः सहोदरः ॥ ४७ ॥
देवेन जातमात्रः सन्नासीद्योऽपहृतस्तदा । मुक्तोऽनुकंपया भूयो दृष्टो विद्याधरेंदुना ॥ ४८ ॥
उन्मादेन वने तस्मिन्गृहीत्वा च प्रमोदिना । पुत्रस्तवायमित्युक्त्वा पुष्पवत्यै समर्पितः ॥ ४९ ॥
एषोऽसौ दिव्यरत्नात्मकुंडलोद्योतिताननः । विद्याधरमहाधीशो भाति सार्थकशब्दितः ॥ ५० ॥
चंद्रोदरसुतः सोऽयं सखि श्रीमान् विराधितः । श्रीशैलः पवनस्यायं पुत्रो वानरकेतनः ॥५१॥
एवं विस्मययुक्ताभिस्तोषिणीभिः समुत्कटाः । लक्षिताः पौरनारीभिः प्राप्तास्ते पार्थिवालयम् ॥
तावत्प्रासादमूर्द्धस्थे पुत्रस्नेहपरायणे । संप्रस्नुतस्तने वीरमातरावववतेरतुः ॥ ५३ ॥
महागुणधरा देवी साधुशीलाऽपराजिता । केकयी केकया चापि सुप्रजाश्च सुचेष्टिताः ॥ ५४ ॥
भवांतरसमायोगमिव प्राप्तास्तयोरमा । मातरोऽयुः समीपत्वं मंगलोद्यतचेतसः ॥ ५५ ॥
ततो मातृजनं वीक्ष्य मुदितौ कमलेक्षणौ । पुष्पयानात्समुत्तीर्य लोकपालोपमद्युती ॥ ५६ ॥

कृतांजलिपुटौ नम्रौ सनृपौ सांगनाजनौ । मातॄणां नेमतुः पादावुपगम्य क्रमेण तौ ॥ ५७ ॥
आशीर्वादसहस्राणि यच्छन्त्यः शुभदानि ताः । परिषस्वजिरे पुत्रौ स्वसंवेद्यमिताः सुखम् ५८
पुनः पुनः परिष्वज्य तृप्तिसंबंधवर्जिताः । चुचुंबुर्मस्तके कंपिकरामर्शनतत्पराः ॥ ५९ ॥
आनंदवाष्पपूर्णाक्षाः कृतासनपरिग्रहाः । सुखदुःखं समावेद्य धृतिं ताः परमां ययुः ॥ ६० ॥
मनोरथसहस्राणि गुणितान्यसकृत्पुरा । तासां श्रेणिक पुण्येन फलितानीप्सिताधिकम् ॥ ६१ ॥
सर्वाः शूरजनन्यस्ताः साधुभक्ताः सुचेतसः । स्नुषाशतसमाकीर्णा लक्ष्मीविभवसंगताः ॥ ६२ ॥
वीरपुत्रानुभावेन निजपुण्योदयेन च । महिमानं परिप्राप्ता गौरवं च सुपूजितम् ॥ ६३ ॥
क्षारोदसागरांतायां प्रतिघातविवर्जिताः । क्षितावेकातपत्रायां ददुराज्ञां यथेप्सितम् ॥ ६४ ॥
इष्टसमागममेतं शृणोति यः पठति चातिशुद्धमतिः । लभते संपदमिष्टामायुः पूर्णं सुपुण्यं च ६५
एकोऽपि कृतो नियमः प्राप्तोऽभ्युदयं जनस्य सद्बुद्धेः । कुरुते प्रकाशमुच्चै रविरिव तस्मादिमं कुरुत ॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे रामलक्ष्मणसमागमाभिधानं नाम द्व्यशीतितमं पर्व ।

# अथ त्र्यशीतितमं पर्व ।

पुनः प्रणम्य शिरसा पृच्छति श्रेणिको यतिम् । गृहे श्रीविस्तरे तेषां समुद्भूतातिकौतुकः ॥ १ ॥
उवाच गौतमः पाद्माः लाक्ष्मणा भारता नृप । शात्रुघ्नाश्च न शक्यन्ते भोगाः कार्त्स्न्येन शंसितुम् ॥
तथाऽपि शृणु ते राजन् वेदयामि समासतः । रामचक्रिप्रभावेण विभवस्य समुद्भवम् ॥ ३ ॥
नंद्यावर्त्ताख्यसंस्थानं बहुद्वारोच्चगोपुरम् । शक्रालयसमं कांतं भवनं भवनं श्रियः ॥ ४ ॥
चतुःशाल इति ख्यातः प्राकारोऽस्य विराजते । महाद्रिशिखरोत्तुंगो वैजयंत्यभिधा सभा ॥ ५ ॥
शाला चन्द्रमणी रम्या सुवीथीति प्रकीर्त्तिता । प्रासादकूटमत्यन्तमुत्तुंगमवलोकनम् ॥ ६ ॥
प्रेक्षागृहं च विंध्याभं वर्द्धमानककीर्त्तनम् । परिकर्मोपयुक्तानि कर्मान्तभवनानि च ॥ ७ ॥
कुक्कुटांडप्रभं गर्भगृहकूटं महाद्भुतम् । एकस्तंभधृतं कल्पतरुतुल्यं मनोहरम् ॥ ८ ॥
मंडलेन तदावृत्य देवीनां गृहपालिका । तरंगाली परिख्याता स्थिता रत्नसमुज्ज्वला ॥ ९ ॥
महदंभोजकांडं च विद्युद्दलसमद्युतिः । सुश्लिष्टा सुभगस्पर्शा शय्या सिंहशिरःस्थिता ॥ १० ॥
उद्यद्भास्करसंकाशमुत्तमं हरिविष्टरम् । चामराणि शशांकांशुसंचयप्रतिमानि च ॥ ११ ॥

इष्टच्छायकरं स्फीतं छत्रं तारापतिप्रभम् । सुखेन गगने कान्ते पादुके विषमोचिके ॥ १२ ॥
अनर्घाणि च वस्त्राणि दिव्यान्याभरणानि च । दुर्भेद्यं कवचं कान्तं मणिकुंडलयुग्मकम् ॥ १३ ॥
अमोघाश्च गदा खड्गकनकारिशिलीमुखाः । अन्यानि च महास्त्राणि भासुराणि रणाजिरे ॥१४॥
पंचाशद्धलकोटीनां लक्षाणि गदितानि च । स्वयं लक्ष्मणशीलानां कोटिरभ्यधिका गवाम् ॥१५॥
सप्ततिः साधिकाः कोटयः कुलानां स्फीतसंपदाम् । नित्यं न्यायप्रवृत्तानां साकेतानगरीजुषाम् १६
भवनान्यतिशुभ्राणि सर्वाणि विविधानि च । अक्षीणकोशपूर्णानि रत्नवंति कुटुंबिनाम् ॥ १७ ॥
पाल्या बहुविधैर्धान्यैः पूर्णा गंडाद्रिसंनिभाः । विज्ञेयाः कुट्टिमतलाश्चतुःशालाः सुखावहाः॥१८॥
प्रवरोद्यानमध्यस्था नानाकुसुमशोभिताः । दीर्घिकाश्चारुसोपानाः परिक्रीडनकोचिताः ॥ १९ ॥
प्रेक्ष्यगोमहिषीवृंदस्फीतास्तत्र कुटुंबिनः । सौख्येन महता युक्ता रेजुः सुरवरा इव ॥ २० ॥
दंडनायकसामंता लोकपाला इवोदिताः । महेन्द्रतुल्यविभवा राजानः पुरुतेजसः ॥ २१ ॥
सुंदर्योऽप्सरसां तुल्याः संसारसुखभूमयः । निखिलं चोपशरणं यथाभिमतसौख्यदम् ॥ २२ ॥
एवं रामेण भरतं नीतं शोभां परामिदम् । हरिषेणनरेन्द्रेण यथा चक्रभृता पुरा ॥ २३ ॥
चैत्यानि रामदेवेन कारितानि सहस्रशः । भांति भव्यजनैर्नित्यं पूजितानि महर्द्धिभिः ॥ २४ ॥

देशग्रामपुरारण्यगृहरथ्यागतो जनः । सदेति संकथां चक्रे सुखी रचितमंडलः ॥ २५ ॥
साकेतविषयः सर्वः सर्वथा पश्यताऽधुना । विलंबयितुमुद्युक्तश्चित्रं गीर्वाणविष्टपम् ॥ २६ ॥
मध्ये शक्रपुरीतुल्या नगरी यस्य राजते । अयोध्या निलयैस्तुंगैरशक्यपरिवर्णनैः ॥ २७ ॥
किममी त्रिदशक्रीडापर्वतास्तेजसाऽऽवृताः । आहोस्विच्छरदभ्रौघाः किंवा विद्यामहालयाः २८
प्राकारोऽयं समस्ताशा द्योतयन् परमोन्नतः । समुद्रवेदिकातुल्यो महाशिखरशोभितः ॥ २९ ॥
सुवर्णरत्नसंघातो रश्मिदीपितपुष्करः । कुत ईदृक्त्रिलोकेऽस्मिन्मानसस्याप्यगोचरः ॥ ३० ॥
नूनं पुण्यजनैरेषा विनीता नगरी शुभा । संपूर्णा रामदेवेन विहिताऽन्येव शोभना ॥ ३१ ॥
संप्रदायेन यः स्वर्गः श्रूयते कोऽपि सुन्दरः । नूनं तमेवमादाय संप्राप्तौ रामलक्ष्मणौ ॥ ३२ ॥
आहोस्वित्सैव पूर्वेयं भवेदुत्तरकोशला । दुर्गमा जनितात्यन्तं प्राणिनां पुण्यवर्जिनाम् ॥ ३३ ॥
स्वशरीरेण लोकेन स्वस्त्रीपशुधनादिना । त्रिदिवं रघुचन्द्रेण नीता कान्तिमिमां गता ॥ ३४ ॥
एक एव महान्दोषः सुप्रकाशोऽत्र दृश्यते । महानिंदात्रपाहेतुः सतामत्यन्तदुस्त्यजः ॥ ३५ ॥
यद्विद्याधरनाथेन हृताभिरमिता ध्रुवम् । वैदेही पुनरानीता तत्किं पद्मस्य युज्यते ॥ ३६ ॥
क्षत्रियस्य कुलीनस्य ज्ञानिनो मानशालिनः । जनाः पश्यत कर्मेदं किमन्यस्याभिधीयताम् ३७

इति क्षुद्रजनोद्गीतः परिवादः समंततः । सीतायाः कर्मतः पूर्वाद्विस्तारं विष्टपे गतः ॥ ३८ ॥
अथासौ भरतस्तत्र पुरे स्वर्ग्यैत्रपाकरे । सुरेन्द्रसदृशैर्भोगैरपि नो विंदते रतिम् ॥ ३९ ॥
स्त्रीणां शतस्य सार्द्धस्य भर्त्ता प्राणमहेश्वरः । विद्वेष्टि संततं राज्यं लक्ष्मीं तुंगां तथापि ताम् ४०
निर्व्यूहवलभीशृंगप्रघणाद्यतिहारिभिः । प्रासादैर्मंडलीबंधरचितैरुपशोभितैः ॥ ४१ ॥
विचित्रमणिनिर्माणकुट्टिमे चारुदीर्घिके । मुक्तादामचिते हेमखचिते पुष्पितद्रुमे ॥ ४२ ॥
अनेकाश्चर्यसंकीर्णे यथाकाले मनोहरे । सर्वशमुरजस्थाने सुंदरीजनसंकुले ॥ ४३ ॥
प्रांतस्थितमदक्लिन्नकपोलवरवारणे । वासिते मदगंधेन तुरंगरवहारिणि ॥ ४४ ॥
कृतकोमलसंगीते रत्नोद्योतपटावृते । रम्ये क्रीडनकस्थाने रुचिष्ये स्वर्गिणामपि ॥ ४५ ॥
संसारभीरुरत्यन्तनृपशङ्कितमानसः । धृतिं न लभते व्याधभीरुः सारंगको यथा ॥ ४६ ॥
लभ्यं दुःखेन मानुष्यं चपलं जलविन्दुवत् । यौवनं फेनपुंजेन सदृशं दोषसंकटम् ॥ ४७ ॥
समाप्तिविरसा भोगा जीवितं स्वप्नसंनिभम् । संबन्धो बंधुभिः सार्द्धं पक्षिसंगमनोपमः ॥ ४८ ॥
इति निश्चित्य यो धर्मं करोति न शिवावहम् । सजराजर्जरः पश्चाद्दह्यते शोकवह्निना ॥ ४९ ॥
यौवनेऽभिनवे रागः कोऽस्मिन् मूढकवल्लभे । अपवादकुलावासे संध्योद्योतविनश्वरे ॥ ५० ॥

अवश्यं त्यजनीये च नानाव्याधिकुलालये । शुक्रशोणितसंमूले देहयंत्रेऽपि का रतिः ॥ ५१ ॥
न तृप्यंति धनैर्वन्हिः सलिलैर्न नदीपतिः । न जीवो विषयैर्यावत्संसारमपि सेवितैः ॥ ५२ ॥
कामासक्तमतिः पापो न किंचिद्वेत्ति देहवान् । यत्पतंगसमो लोभी दुखं प्राप्नोति दारुणम् ॥५३॥
गलगंडसमानेषु क्लेदक्षरणकारिषु । स्तनाख्यमांसपिंडेषु बीभत्सेषु कथं रतिः ॥ ५४ ॥
दंतकीटकसंपूर्णे तांबूलरसलोहिते । क्षुरिकाच्छेदसदृशे शोभा वक्त्रबिलेन का ॥ ५५ ॥
नारीणां चेष्टिते वायु दोषादिव समुद्गते । उन्मादजनिते प्रीतिर्विलासाभिहितेऽपि का ॥ ५६ ॥
गृहांतर्ध्वनिना तुल्ये मनोध्वातिनिवासिनि । संगीते रुदिते चैव विशेषो नोपलक्ष्यते ॥ ५७ ॥
अमेध्यमयदेहाभिश्छन्नाभिः केवलं त्वचा । नारीभिः कीदृशं सौख्यं सेवमानस्य जायते ॥५८॥
विट्कुंभद्वितयं नीत्वा संयोगमतिलज्जनम् । विमूढमानसः शोकः सुखमित्यभिमन्यते ॥ ५९ ॥
इच्छामात्रसमुद्भूतैर्दिव्यैर्यो भोगविस्तरैः । न तृप्यति कथं तस्य तृप्तिर्मानुषभोगकैः ॥ ६० ॥
तृप्तिं न तृणकोटिस्थैरवश्यायकणैर्वने । व्रजतींधनविक्रायः केवलं श्रममृच्छति ॥ ६१ ॥
तथाऽप्युत्तमया राज्यश्रिया तृप्तिमनाप्तवान् । सौदासः कुत्सितं कर्म तथाविधमसेवत ॥ ६२ ॥
गंगायां पूरयुक्तायां प्रविष्टा मांसलुब्धकाः । काका हस्तिशवं मृत्युं प्राप्नुवान्ति महोदधौ ॥६३॥

मोहपंकनिमग्नेयं प्रजा मंडूकिकायते । लोभाहिनाऽतितीव्रेण नरकाच्छिद्रमायिना ॥ ६४ ॥
एवं चिंतयतस्तस्य भरतस्य विरागिणः । विघ्नेन बहवो यांति दिवसाःशांतचेतसः ॥ ६५ ॥
व्रतमप्राप्नुवञ्जैनं सर्वं दुःखविनाशनम् । पंजरस्थो यथा सिंहः स समर्थोपि सीदति ॥ ६६ ॥
प्रशांतहृदयोऽस्यर्थके कयायाचनादसौ । ध्रियते हलिचक्रिभ्यां सस्नेहाभ्यां समुत्कटम् ॥ ६७ ॥
उच्यते च यथा भ्रातस्त्वमेव पृथिवीतले । सकले स्थापितो राजा पित्रा दीक्षाभिलाषिणा ६८
सोऽभिषिक्तो भवान्नाथो गुरुणा विष्टपेन तु । अस्माकमपि हि स्वामी कुरु लोकस्य पालनम् ६९
इदं सुदर्शनं चक्रमिमे विद्याधराधिपाः । तवाज्ञासाधनं पत्नीमिव भुंक्ष्व वसुंधराम् ॥ ७० ॥
धारयामि स्वयं छत्रं शशांकधवलं तव । शत्रुघ्नश्चामरं धत्ते मंत्री लक्ष्मणसुंदरः ॥ ७१ ॥
इत्युक्तोऽपि न चेद्वाक्यं ममेदं कुरुते भवान् । यास्यामोऽद्य ततो भूयस्तदेव मृगवद्वनम् ॥ ७२ ॥
जित्वा राक्षसवंशस्य तिलकं रावणाभिधम् । भवद्दर्शनसौख्यस्य तृषिता वयमागताः ॥ ७३ ॥
निःप्रत्यूहमिदं राज्यं भुज्यतां तावदायतम् । अस्माभिःसहितः पश्चात्प्रवेक्ष्यसि तपोवनम् ॥७४॥
एवं भाषितुमासक्तमेनं पद्मं सुचेतसम् । जगाद भरतोऽत्यंतविषयासक्तिनिःस्पृहः ॥ ७५ ॥
इच्छामि देव संत्यक्तुमेतां राज्यश्रियं द्रुतम् । त्यक्त्वा यां सत्तपः कृत्वा वीरा मोक्षं समाश्रिता ७६

सदा नरेन्द्र कामार्थौ चंचलौ दुःखसंगती । विद्वेष्यौ सूरलोकस्य सुमूढजनसेवितौ ॥ ७७ ॥
अशाश्वतेषु भोगेषु सुरलोकसमेष्वपि । हलायुध न मे तृष्णा समुद्रौपम्यवत्स्वपि ॥ ७८ ॥
संसारसागरं घोरं मृत्युपातालसंकुलम् । जन्मकल्लोलसंकीर्णं रत्यरत्युरुवीचिकम् ॥ ७९ ॥
रागद्वेषमहाग्राहं नानादुःखभयंकरम् । व्रतपोतं समारुह्य वांछामि तरितुं नृप ॥ ८० ॥
पुनःपुनरहं राजन् भ्राम्यन्निविधयोनिषु । गर्भवासादिषु श्रांतो दुसहं दुःखमाप्तवान् ॥ ८१ ॥
एवमुक्तं समाकर्ण्य वाष्पव्याकुललोचनाः । नृपा विस्मयमापन्ना जगदुः कंपितस्वनाः ॥ ८२ ॥
वचनं कुरु तातीयं लोकं पालय पार्थिव । यदितेऽस्वमता लक्ष्मीर्मुनिः पश्चाद्भविष्यसि ॥ ८३ ॥
उवाच भरतो वाढं तातस्योक्तं मया कृतम् । चिरं प्रपालितो लोको मानितो भोगविस्तरः ॥८४॥
दत्तं च परमं दानं साधुवर्गः सुतर्पितः । तातेन यत्कृतं कर्तुं तदपीच्छामि सांप्रतम् ॥ ८५ ॥
अनुमोदनमद्यैव मह्यं किं न प्रयच्छत । श्लाघ्ये वस्तुनि संबंधः कर्तव्यो हि यथा तथा ॥ ८६ ॥
जित्वा शत्रुगणं संख्ये द्विपसंघातभीषणे । नंदाद्यैरिव या लक्ष्मीर्भवद्भिः समुपार्जिता ॥ ८७ ॥
महत्यपि न सा तृप्तिं ममोत्पादयितुं क्षमा । गंगेव वारिनाथस्य तत्वमार्गे घटे ततः ॥ ८८ ॥
इत्युक्त्वात्यंतसंविग्नस्तानापृच्छय ससंभ्रमः । सिंहासनात्समुत्तस्थौ भरतो भरतो यथा ॥ ८९ ॥

मनोहरगतिश्चैव यावद्गंतुं समुद्यतः । नारायणेन संरुद्धस्तावत्सस्नेहसंभ्रमम् ॥ ९० ॥
करेणोद्वर्त्यन्नेप सौमित्रिकरपल्लवम् । यावदाश्वासयत्यश्रुदुर्दिनास्यां च मातरम् ॥ ९१ ॥
तावद्रामाज्ञया प्राप्ताः स्त्रियो लक्ष्मीसुविभ्रमाः । रुरुदुर्भरतं वातकंपितोत्पललोचनाः ॥ ९२ ॥
एतस्मिन्नंतरे सीता स्वयं श्रीरिव देहिनी । उर्वी भानुमती देवी विशल्या सुंदरी तथा ॥ ९३ ॥
ऐंद्री रत्नवती लक्ष्मीः सार्था गुणवती श्रुतिः । कांता बंधुमती भद्रा कौबेरी नलकूबरा ॥ ९४ ॥
तथा कल्याणमालासौ चंद्रिणी मानसोत्सवा । मनोरमा प्रियानंदा चंद्रकांता कलावती ॥ ९५ ॥
रत्नस्थली सुरवती श्रीकांता गुणसागरा । पद्मावती तथान्याश्च स्त्रियो दुःशक्यवर्णनाः ॥ ९६ ॥
मनःप्रहरणाकारा दिव्यवस्त्रविभूषणाः । समुद्भवशुभक्षेत्रभूमयः श्रेष्ठगोत्रजाः ॥ ९७ ॥
कलासमस्तसंदोहफलदर्शनतत्पराः । वृताः समंततश्चारुचेतसो लोभनोद्यताः ॥ ९८ ॥
सर्वादरेण भरतं जगदुर्हारिनिःस्वनाः । वातोद्भूतनवोदारपद्मिनीखंडकांतयः ॥ ९९ ॥
देवर क्रियतामेकः प्रसादोऽस्माकमुन्नतः । सेवामहे जलक्रीडां भवता सह सुंदरीम् ॥ १०० ॥
त्यज्यतामपरां चिंतां नाथ मानसखेदिनीं । भ्रातृजायासमूहस्य क्रियतामस्य सुप्रियम् ॥ १०१ ॥
तादृशीभिस्तथाप्यस्य संगतस्य न मानसम् । जगाम विक्रियां कांचिद्दाक्षिण्यं केवलं श्रितः ॥ १०२ ॥

संप्राप्तप्रसरास्तस्मात्ततः शंकाविवर्जिताः । नार्यस्ता भारतीयाश्च प्रापुः परमसंमदम् ॥१०३॥
परिवार्य ततस्तास्तं समस्ताश्चारुविभ्रमाः । अवतीर्णा महारम्यं सरः सरसिजेक्षणाः ॥ १०४ ॥
क्रीडानिस्पृहचित्तोऽसौ तत्त्वार्थगतमानसः । योषितामनुरोधेन जलसंगमशिश्रियत् ॥ १०५ ॥
देवीजनसभाकीर्णो विनयेन समन्वितः । विरराज सरः प्राप्तः करी यूथपतिर्यथा ॥१०६॥
स्निग्धैः सुगंधिभिः कांतैस्त्रिभिरुद्वर्त्तनैरसौ । उद्वर्त्तितः पृथुच्छायापट्टरंजितवारिभिः ॥ १०७ ॥
किंचित्संक्रीड्य संचेष्टः सुस्नातः सुमनोहरः । सरसः केकयासूनुरुत्तीर्णः परमेश्वरः ॥ १०८ ॥
विहितार्हन्महापूजः पद्मनीलोत्पलादिभिः । सादरेणांगनौघेन स समग्रमलंकृतः ॥१०९॥
एतस्मिन्नंतरे योऽसौ महाजलधराकृतिः । त्रिलोकमंडनाभिख्यः ख्यातो गजपतिः शुभः ॥११०॥
आलानं स समाभिद्य महाभैरवनिःस्वनः । निःससार निजावासाद्दानदुर्दिनितांबरः ॥ १११ ॥
घनाघनघनोदारगंभीरं तस्य गर्जितम् । श्रुत्वाऽयोध्यापुरी याता समुन्मत्तजनेव सा ॥ ११२ ॥
जनितोदारसंघट्टभयस्तब्धश्रुतेक्षणैः । राजमार्गान्तराः पूर्णाः सायासाधोरणैर्गजैः ॥ ११३ ॥
यथानुकूलमाश्रित्य दिशो दश महाभयाः । नेशुस्ते मदनिर्मुक्ता गृहीतययुरंहसः ॥ ११४ ॥
हेमरत्नमहाकूटं गोपुरं गिरिसन्निभम् । विध्वस्य भरतं तेन प्रवृत्तो वारणोत्तमः ॥११५॥

त्रासाकुलेक्षणा नार्यो महासंभ्रमसंगताः । शिश्रियुर्भरतं त्राणं भानुं दीधितयो यथा ॥ ११६ ॥
भरताभिमुखं यान्तं जनो वीक्ष्य गजोत्तमम् । हाहेति परमं तारं विलापं परितोऽकरोत् ॥११७॥
विव्हला मातरश्चास्य महोद्वेगसमागताः । बभूवुः परमाशंकाः पुत्रस्नेहपरायणाः ॥ ११८ ॥
तावत्परिकरं बद्धा पद्माभो लक्ष्मणस्तथा । उपसर्पति सच्छ्रमहाविज्ञानसंगतः ॥ ११९ ॥
नभश्चर महामात्रान्समुत्सार्य भयार्दितान् । बलाद्ग्रहीतुमुद्युक्तौ तमिभेन्द्रमलं चलम् ॥ १२० ॥
सरोषमुक्तनिस्वानो दुःप्रेक्ष्यः प्रबलो जवी । नागपाशैरपि गजः संरोद्धुं न स शक्यते ॥१२१॥
ततोंगना जनांतस्थं श्रीमंतं कमलेक्षणम् । भरतं वीक्ष्य नागोऽसौ व्यतीतं भवमस्मरन् ॥१२२॥
संजातोद्वेगभारश्च कृत्वा प्रशिथिलं करम् । भरतस्याग्रतो नागस्तस्थौ विनयसंगतः ॥ १२३ ॥
जगाद भरतश्चैनं परं मधुरया गिरा । अहोऽनेकपनाथ त्वं रोषितः केन हेतुना ॥१२४॥
निशम्य वचनं तस्य संज्ञां संप्राप्य वारणः । अत्यर्थशांतचेतस्को निश्चलः सौम्यदर्शनः ॥ १२५ ॥
स्थितमग्रे वरस्त्रीणां स्निग्धं भरतमीक्षते । पुरे वा सरसां वृंदे स्वर्गे गीर्वाणसत्तमम् ॥ १२६ ॥
परिज्ञानी ततो नागश्चिंतामेवं समाश्रितः । मुक्तात्याऽऽयतनिःश्वासो विकारपरिवर्जितः ॥१२७॥
एषोऽसौ यो महानासीत्कल्पे ब्रह्मोत्तराभिधे । देवः शशांकशुभ्रश्रीर्वयस्यः परमो मम ॥ १२८ ॥

च्युतोऽऽयं पुण्यशेषेण जातः पुरुषसत्तमः । कष्टं निंदितकर्माहं तिर्यग्योनिमुपागतः ॥ १२९ ॥
कार्याकार्यविवेकेन सुदूरं परिवर्तितम् । कथं प्राप्तोऽस्मि हस्तित्वं धिगेतदिति गर्हितम् ॥ १३० ॥
परितप्येऽधुना व्यर्थं किमिदं स्मृतिसंगतः । करोमि कर्म तद्येन लभ्यते हितमात्मने ॥ १३१ ॥
उद्वेगकरणं नात्र कारणं दुःखमोचने । तस्मादुपायमेवाहं घटे सर्वादरान्वितः ॥ १३२ ॥

इति स्मृतातीतभवो गजेंद्रो; भवेत्तु वैराग्यमलं प्रपन्नः ।
दुरीहितैकांतपराङ्मुखात्मा; स्थितः सुकर्मार्जनचिंतनाग्रः ॥१३३॥
कृतानि कर्माण्यशुभानि पूर्वं; संतापमुग्रं जनयंति पश्चात् ।
तस्माज्जनाः कर्म शुभं कुरुध्वं; रवौ सति प्रस्खलनं न युक्तम् ॥ १३४ ॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे त्रिभुवनालंकारक्षोभाभिधानं नाम त्र्यशीतितमं पर्व ।

# अथ चतुरशीतितमं पर्व ।

तथा विचिंतयन्नेष विनयी द्विपसत्तमः । पद्माभ चक्रपाणिभ्यां वहद्भ्यां विस्मयं परम् ॥ १ ॥
किंचिदाशंकितात्माभ्यामुपश्रित्य शनैः शनै । महाकालघनाकारो जगृहे भाषितप्रियः ॥ २ ॥

प्राप्यनारायणादाज्ञामन्यैरुत्तमसंमदैः । सर्वालंकारयोगेन परां पूजां च लंभितः ॥ ३ ॥
प्रशान्ते द्विरदश्रेष्ठे नगर्याकुलतोज्झिता । घनाघनपटोन्मुक्ता रराज शरदा समम् ॥ ४ ॥
विद्याधरजनाधीशैश्चंडा यस्योत्तमा गतिः । रोद्धुं नातिबलैः शक्या नाकसद्मभिरेव वा ॥ ५ ॥
सोऽयं कैलाशकंपस्य राक्षसेंद्रस्य वाहनः । कृतपूर्वेकथं रुद्धः सीरिणा लक्ष्मणेन च ॥ ६ ॥
तादृशी विकृतिं गत्वा यदयं शममागतः । तदस्य पूर्वलोकस्य पुण्यं दीर्घायुरावहम् ॥ ७ ॥
नगर्यामिति सर्वस्यां परं विस्मयमीयुषः । लोकस्य संकथा जाता विधूतकरमस्तका ॥ ८ ॥
ततः सीताविशल्याभ्यां समं तं वारणेश्वरम् । आरुह्य सुमहाभूतिभरतः प्रस्थितो गृहम् ॥ ९ ॥
महालंकारधारिण्यः शेषा अपि वरांगनाः । विचित्रवाहनारूढा भरतं पर्यवेष्टयन् ॥ १० ॥
तुरंगरथमारूढो विभूत्या परयाऽन्वितः । शत्रुघ्नोऽस्य महातेजाः प्रययावग्रतः स्थितः ॥ ११ ॥
झम्लाम्लातकभेर्यादिमहावादित्रनिस्वनः । संजातः शंखशब्देन मिश्रः कोलाहलान्वितः ॥ १२ ॥
कुसुमामोदमुद्यानं त्यक्त्वा ते नंदनोपमम् । त्रिदशा इव संप्रापुरालयं सुमनोहरम् ॥ १३ ॥
उत्तीर्य द्विरदाद्राजा प्रविश्याऽऽहारमंडपम् । साधून्संतर्प्य विधिवत्प्रणम्य च विशुद्धधीः ॥१४॥
मित्रामात्यादिभिः सार्द्धं भ्रातृपत्नीभिरेव च । आहारमकरोतत्स्वं स्वं ततो यातो जनःपदम् ॥१५॥

किं क्रुद्धः किं पुनः शांतः किंस्थितो भरतांतिके। किमेतदिति लोकस्य कथा नेभे निवर्त्तते ॥१६॥
मगधेन्द्राथ निःशेषा महामात्राः समागताः। प्रणम्यादरिणोऽवोचन्पद्मं लक्ष्मणसंगतम् ॥ १७॥
अहोऽद्य वर्तते देव तुरीयो राजदंतिनः। विमुक्तपूर्वकृत्यस्य श्लथविग्रहधारिणः ॥ १८॥
यतःप्रभृति संक्षोभं संप्राप्य सममागतः। तत एव समारंभ्य वर्तते ध्यानसंगतः ॥ १९॥
महायतं विनिःश्वस्य मुकुलाक्षोऽतिविह्वलः। चिरं किं किमपि ध्यात्वा हंति हस्तेन मेदिनीम् २०
बहुप्रियशतैः स्तोत्रैः स्तूयमानोऽपि संततम्। कवलं नैव गृह्णाति न हवं कुरुते श्रुतौ ॥२१॥
विधाय दंतयोरग्रे करं मीलितलोचनः। लेप्यकर्म गजेंद्रस्य चिरं याति समुन्नताम् ॥२२॥
किमयं कृत्रिमो दंती किंवा सत्यमहाद्विपः। इति तत्र समस्तस्य मतिर्लोकस्य वर्तते ॥ २३॥
चाटुवाक्यानुरोधेन गृहीतमपि कृच्छतः। विमुंचत्यास्यमप्राप्तं कवलं मृष्टमप्यलम् ॥ २४॥
त्रिपदीछेदललितं समुत्सज्य शुचान्वितः। आसज्य किंचिदालाने विनिःश्वस्यावतिष्ठते ॥ २५॥
समस्तशास्त्रसत्कारविमलीकृतमानसैः। प्रख्यातैरप्यलं वैद्यैर्भावो नास्योपलक्ष्यते ॥ २६॥
रचितं स्वादरेणापि संगीतं सुमनोहरम्। न शृणोति यथापूर्वं क्वापि निक्षिप्तमानसः ॥२७॥
मंगलैः कौतुकैर्योगैर्मंत्रैर्विद्याभिरौषधैः। न प्रत्यापत्तिमायाति लालितोऽपि महादरैः ॥ २८॥

न विहारे न निद्रायां न ग्रासे न च वारिणि । कुरुते याचितोऽपीच्छां सुहृन्मानमितो यथा ॥२९॥
दुर्ज्ञानांतरमीदृक्षं रहस्यं परमाद्भुतम् । किमेतदिति नो विद्मो गजस्य मनसि स्थितम् ॥ ३० ॥
न शक्यस्तोषमानेतुं न च लोभं कदाचन । न याति क्रोधमप्येष दंती चित्रार्पितो यथा ॥ ३१ ॥
सकलस्यास्य राज्यस्य मूलमद्भुतविक्रमः । त्रिलोकभूषणो देव वर्तते करटीदृशः ॥ ३२ ॥
इति विज्ञाय देवोऽत्र प्रमाणं कृत्यवस्तुनि । निवेदनक्रियामात्रसारा ह्यस्मादृशां मतिः ॥ ३३ ॥

श्रुत्वेहितं नागपतेस्तदीदृक्, पूर्वेहितात्यंतविभिन्नरूपम् ।
जातौ नरेंद्रावधिकं विचिंतौ पद्माभलक्ष्मीनिलयौ क्षणेन ॥ ३४ ॥
आलानगेहान्निसृतः किमर्थं शमं पुनः केन गुणेन जातः ।
वृणोसि कस्मादशनं न नाग इत्युद्युतिः पद्मरविर्बभूव ॥ ३५ ॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे त्रिभुवनालंकारशमाभिधानं नाम चतुरशीतितमं पर्व ।

# अथ पंचाशीतितमं पर्व ।

एतस्मिन्नंतरे राजन्भगवान्देशभूषणः । कुलभूषणयुक्तश्च संप्राप्तो मुनिभिः समम् ॥ १ ॥
ययोर्वंशगिरावासीत्प्रतिमां चतुराननाम् । श्रितयोरुपसर्गोऽसौ जनितः पूर्ववैरिणा ॥ २ ॥
पद्मलक्ष्मणवीराभ्यां प्रातिहार्ये कृते ततः । केवलज्ञानमुत्पन्नं लोकालोकावभासनम् ॥ ३ ॥
ततस्तुष्टेन तार्क्ष्येण भक्तिस्नेहमुपेयुषाम् । रत्नास्त्रवाहनान्याभ्यां दत्तानि विविधानि वै ॥ ४ ॥
यत्प्रसादाच्चिरस्त्रत्वं प्राप्तौ संशयितौ रणे । चक्रतुर्विजयं शत्रोर्यतो राज्यमवापतुः ॥ ५ ॥
देवासुरस्तुतावेतौ तौ लोकत्रयविश्रुतौ । मुनीन्द्रौ नगरीमुख्यां प्राप्तावुत्तरकोशलाम् ॥ ६ ॥
नंदनप्रतिमे तौ च महेंद्रोदयनामनि । उद्यानेऽवस्थितौ पूर्वं यथा संजयनंदनौ ॥ ७ ॥
महागणसमाकीर्णौ चंद्रार्कप्रतिमाविमौ । सम्प्राप्तौ नगरीलोको विवेद परमोदयौ ॥ ८ ॥
ततः पद्माभचक्रेशौ भरतारिनिषूदनौ । एते बंदारवो गंतुं संयतेंद्रौ समुद्यताः ॥ ९ ॥
आरुह्य वारणानुग्रानुक्त्वा भानौ समुद्गते । जातिस्मरं पुरस्कृत्य त्रिलोकाविजयं द्विपम् ॥ १० ॥
देवा इव प्रदेशं तं प्रस्थिताश्चारुचेतसः । कल्याणपर्वतौ यत्र स्थितौ निर्ग्रंथसत्तमौ ॥ ११ ॥

केकया कैकयी देवी कोशलेंद्रात्मजा तथा । सुप्रजा चेति विख्यातास्तेषां श्रेणिक मातरः॥ १२॥
जिनशासनसद्भावाः साधुभक्तिपरायणाः । देवीशतसमीकीर्णा देव्याभा गंतुमुद्यताः ॥ १३ ॥
मुनिदर्शनतृड्ग्रस्ता सुग्रीवप्रमुखा मुदा । विद्याधराः समायाता महाविभवसंगताः ॥ १४ ॥
आतपत्रं मुनेर्दृष्ट्वा सकलेंडुपसन्निभम् । उत्तीर्य पद्मनाभाद्या द्विरदेभ्यः समागताः ॥ १५ ॥
कृतांजलिपुटाःश्रुत्वा प्रणम्य च यथाक्रमम् । समर्च्य च मुनींस्तस्थुरात्मयोग्यासु भूमिषु ॥१६॥
शुश्रुवुश्च मुनेर्वाक्यं सुसमाहितचेतसः । संसारकारणध्वंसि धर्मशंसनतत्परम् ॥ १७ ॥
अणुधर्मोऽग्रधर्मश्च श्रेयसः पदवी द्वयी । पारंपर्येण तत्राद्या परा साक्षात्प्रकीर्तिता ॥ १८ ॥
गृहाश्रमविधिः पूर्वं महाविस्तारसंगतः । परो निर्ग्रंथशूराणां कीर्तितोऽत्यंतदुःसहः ॥ १९ ॥
अनादिनिधने लोके यत्र लोभेन मोहिताः । जंतवो दुःखमत्युग्रं प्राप्नुवंति कुयोनिषु ॥ २० ॥
धर्मो नाम परो बंधुः सोऽयमेको हितः पुमान् । मूलं यस्य दया शुद्धा फलं वक्तुं न शक्यते॥२१॥
ईक्षितं जंतुना सर्वं लभ्यते धर्मसंगमात् । धर्मः पूज्यतमो लोके बुधा धर्मेण भाविताः ॥ २२ ॥
दयामूलस्तु यो धर्मो महाकल्याणकारणम् । दग्धधर्मेषु सोऽन्येषु विद्यते नैव जातुचित् ॥ २३ ॥
जिनेंद्रविहिते सोऽयं मार्गे परमदुर्लभे । सदा सन्निहिते येन त्रैलोक्याग्रमवाप्यते ॥ २४ ॥

पातालेऽसुरनाथाद्या क्षोण्यां चक्रधरादयः । फलं शक्रादयः स्वर्गे परमं यस्य भुंजते ॥ २५ ॥
तावत्प्रस्तावमासाद्य साधुं नारायणः स्वयम् । प्रणम्य शिरसाऽपृच्छदिति संगतपाणिकः ॥२६॥
उपमृद्य प्रभो स्तंभं नागेन्द्रः क्षोभमागतः । प्रशमं हेतुना केन सहसा पुनरागतः ॥ २७ ॥
भगवन्निति संशीतिमप्यपाकर्तुमर्हसि । ततो जगाद वचनं केवली देशभूषणः ॥ २८ ॥
बलोद्रेकादयं तुंगात्संक्षोभं परमं गतः । स्मृत्वा पूर्वभवं भूयः शमयोगमशिश्रियत् ॥ २९ ॥
आसीदाद्ये युगेऽयोध्यानगर्यामुत्तमश्रुतिः । नाभितो मरुदेव्याश्च निमित्तात्तनुमाश्रितः ॥ ३० ॥
त्रैलोक्यक्षोभणं कर्म समुपार्य महोदयः । प्रकटत्वं परिप्रापदिति देवेन्द्रभूतिभिः ॥ ३१ ॥
विंध्याहिमनगोत्तुंगस्थलीं सागरमेखलाम् । पत्नीमिव निजां साध्वीं वश्यां योऽसेवत क्षितिम् ३२
भगवान्पुरुषेंद्रोऽसौ लोकत्रयनमस्कृतः । पुराऽरमत पुर्यस्यां दिवीव त्रिदशाधिपः ॥ ३३ ॥
श्रीमानृषभदेवोऽसौ द्युतिकांतिसमन्वितः । लक्ष्मीश्रीकांतिसंपन्नः कल्याणगुणसागरः ॥ ३४ ॥
त्रिज्ञानी धीरगंभीरो दृङ्मनोहारिचेष्टितः । अभिरामवपुः सत्त्वी प्रतापी परमोऽभवत् ॥ ३५ ॥
सौधर्मेन्द्रप्रधानैर्यस्त्रिदशैरग्रजन्मनि । हेमरत्नघटैर्मेरावभिषिक्तः सुभक्तिभिः ॥ ३६ ॥
गुणान्कस्तस्य शक्नोति वक्तुं केवलिवर्जितः । ऐश्वर्यं प्रार्थ्यते यस्य सुरेंद्रैरपि संततम् ॥ ३७ ॥

कालं द्राघिष्ठमत्यंतं भुक्त्वा श्रीविभवं परम् । अप्सरःपरमां वीक्ष्य तां नीलांजननर्तकीम् ॥३८॥
स्तुतो लोकांतिकैर्देवैः स्वयंबुद्धो महेश्वरः । न्यस्य पुत्रशते राज्यं निष्क्रांतो जगतां गुरुः ॥३९॥
उद्याने तिलकाभिख्ये प्रजाभ्यो यदसौ गतः । प्रयागमिति तत्तेन लोके तीर्थं प्रकीर्तितम् ॥४०॥
संवत्सरसहस्रं स दिव्यं मेरुरिवाचलः । गुरुः प्रतिमया तस्थौ त्यक्ताशेषपरिग्रहः ॥ ४१ ॥
स्वामिभक्त्या समं तेन ये श्रामण्यमुपस्थिताः । षण्मासाभ्यंतरे भग्ना दुःसहैस्ते परीषहैः ॥४२॥
ते भग्ननिश्चयाः क्षुद्राः स्वेच्छाविरचितव्रताः । वल्किनः फलमूलाद्यैर्वालवृत्तिमुपाश्रिताः ॥४३॥
तेषां मध्ये महामानो मरीचिरिति यो ह्यसौ । परिव्राज्यमयं चक्रे काषायी सकषायधीः ॥ ४४ ॥
सुप्रभस्य विनीतायां सूर्वचंद्रोदयौ सुतौ । प्रह्लादनाख्यमहिषीकुक्षिभूमिमहामणी ॥ ४५ ॥
स्वामिना सह निष्क्रांतौ प्रथितौ सर्वविष्टपे । भग्नौ श्रामयतोऽत्यंतप्रीतौ तं शरणं गतौ ॥ ४६ ॥
मरीचिशिष्ययोः कूटप्रतापव्रतमानिनोः । तयोः शिष्यगणो जातः परिव्राड्गदितो महान् ॥४७॥
कुधर्माचरणाद्भ्रांतौ संसारं तौ चतुर्गतिम् । सहितौ पूरिता क्षोणी ययोस्त्यक्तकलेवरैः ॥ ४८ ॥
ततश्चंद्रोदयः कर्मवशान्नागाभिधे पुरे । राज्ञो हरिपतेः पुत्रो मनोलूतासमुद्भवः ॥ ४९ ॥
जातः कुलंकराभिख्यः प्राप्तश्च नृपतां पराम् । पूर्वस्नेहानुबंधेन भावितेन भवान् बहून् ॥ ५० ॥

सूर्योदयः पुरेऽत्रैव ख्यातश्रुतिरतः श्रुतिः । विश्वाह्वेनाग्निकुंडायां जातोऽभूत्तत्पुरोहितः ॥ ५१ ॥
कुलंकरोऽन्यदा गोत्रसंतत्या कृतसेवनान् । तापसान्सेवितुं गच्छन्नपश्यन्मुनिपुंगवम् ॥ ५२ ॥
अभिनंदितसंज्ञेन तेनाऽसौ नतिमागतः । जगदेऽवधिनेत्रेण सर्वलोकहितैषिणा ॥ ५३ ॥
यत्र त्वं प्रस्थितस्तत्र तापसेभ्यः पितामहः । तापसः सर्पतां प्राप्तः काष्ठमध्येऽवतिष्ठते ॥ ५४ ॥
काष्ठे विपाट्यमाने तं तापसेन गतो भवान् । रक्षिस्यसि गतस्यास्य तच्च सर्वं तथाऽभवत् ॥५५॥
कदागमसमापन्नान् दृष्ट्वाऽसौ तापसांस्ततः । प्रबोधमुत्तमं प्राप्तः श्रामण्यं कर्तुमुद्यतः ॥ ५६ ॥
वसुपर्वतकश्रुत्या मूढश्रुतिरतस्ततः । तममोहयदेवं च पापकर्मा पुनर्जगौ ॥ ५७ ॥
गोत्रक्रमागतो राजन् धर्मोऽयं तव वैदिकः । ततो हरिपतेः पुत्रो यदि त्वं तत्समाचर ॥ ५८ ॥
नाथ वेदविधिं कृत्वा सुतं न्यस्य निजे पदे । करिष्यसि हितं पश्चात्प्रसादः क्रियतां मम ॥५९॥
एवमेतदथाभीष्टा श्रीदामेति प्रकीर्तिता । महिष्यचिंतयत्यस्य नूनं राज्ञाऽन्यसंगता ॥ ६० ॥
ज्ञातास्मि येन वैराग्यात्प्रव्रज्यां कर्तुमिच्छति । प्रव्रज्येदपि किं नो वा को जानाति मनोगतिम् ॥
तस्माद्व्यापादयाम्येनं विषेणेत्यनुचिंत्य सा । पुरोहितान्वितं पापा कुलंकरममारयत् ॥ ६२ ॥
ततोऽनुध्यानमात्रेण पशुघातेन पापतः । कालप्राप्तावभूतां तौ निकुंजे शशकौ वने ॥ ६३ ॥

भेकत्वं मूषिकत्वं च बर्हिणत्वं पृदाकुताम् । कुरुत्वं च पुनः प्राप्तौ कर्मानिलजवेरितौ ॥ ६४ ॥
पूर्वश्रुतिरतो हस्ती दर्दुरश्चेतरोऽभवत् । तस्याक्रांतः स पादेन चकारासुविमोचनम् ॥ ६५ ॥
वर्षाभूत्वं पुनः प्राप्तः शुष्के सरसि भक्षितः । काकैः कुक्कुटतां प्राप्तो मार्जारत्वं तु हस्त्यसौ ६६
कुलंकरचरो जन्मत्रितयं कुक्कुरोऽभवत् । भक्षितो द्विजपूर्वेण मार्जारेण नृजन्मना ॥ ६७ ॥
राजद्विजचरौ मत्स्यशिशुमारत्वमागतौ । बद्धौ जालेन कैवर्त्तैः कुठारेणाऽऽहतौ मृतौ ॥ ६८ ॥
शिशुमारस्तयोरुल्काबह्वाशतनयोऽभवत् । विनोदो रमणो मत्स्यो द्विजो राजगृहे तयोः ॥ ६९ ॥
निःस्वत्वेनाक्षरत्वे च सति जंतुर्द्विपात्पशुः । रमणः संप्रधार्यैवं वेदार्थी निःसृतो गृहात् ॥ ७० ॥
क्षोणीं पर्यटता तेन गुरुवेश्मसु शिक्षिताः । चत्वारः सांगका वेदाः प्रस्थितश्च पुनर्गृहम् ॥ ७१ ॥
मागधं नगरं प्राप्तो भ्रातृदर्शनलालसः । भास्करेऽस्तंगते चासौ व्योम्नि मेघांधकारिते ॥ ७२ ॥
नगरस्य बहिर्यक्षनिलये वा समाश्रितः । जीर्णोद्यानस्य मध्यस्थे तत्र चेदं प्रवर्त्तते ॥ ७३ ॥
विनोदस्यांगना तस्य समिधाख्या कुशीलकः । अशोकदत्तसंकेता तं यक्षालयमागता ॥ ७४ ॥
अशोकदत्तको मार्गे गृहीतो दंडपाशिकैः । विनोदोऽपि गृहीतासिर्भार्यानुपदमागतः ॥ ७५ ॥
सद्भावमंत्रणं श्रुत्वा समिधा क्रोधसंगिना । सायकेन विनोदेन रमणः प्रासुकीकृतः ॥ ७६ ॥

विनोदो दयितायुक्तो हृष्टः प्रच्छन्नपापकः । गृहं गतः पुनस्तौ च संसारं पुरुमाटतुः ॥ ७७ ॥
महिषत्वमितोऽरण्ये विनोदो रमणः पुनः । ऋक्षौ बभूव निश्चक्षुर्दग्धौ शालवने च तौ ॥ ७८ ॥
जातौ गिरिवने व्याधौ मृतौ च हरिणौ पुनः । तयोर्बंधुजनस्त्रासाद्दिशो यातो यथायथम् ॥ ७९ ॥
जीवंतावेव तावत्तौ विषादैः कांतलोचनौ । स्वयंभूतिरथो राजा विमलं वंदितुं गतः ॥ ८० ॥
सुरासुरैः समं नत्वा जिनेंद्रं समहर्धिकः । प्रत्यागच्छन्ददर्शैतौ स्थापितौ च जिनालये ॥ ८१ ॥
संगतौ तत्र पश्यन्तौ भक्षयंतौ यथेप्सितम् । अन्नं राजकुले प्राप्तौ हरिणौ परमां धृतिम् ॥ ८२ ॥
आयुष्येकः परिक्षीणे लब्धमृत्युः समाधिना । सुरलोकमितोऽन्योऽपि तिर्यक्षु पुनरभ्रमत् ॥८३ ॥
ततः कथमपि प्राप कर्मयोगान्मनुष्यताम् । विनोदचरसारंगः स्वप्ने राज्यमिवोदितम् ॥ ८४ ॥
जंबूद्वीपस्य भरते कांपिल्यनगरे धनी । द्वाविंशतिप्रमाणाभिर्हेमकोटिभिरूर्जितः ॥ ८५ ॥
अमुष्य धनदाह्वस्य वणिजो रमणोऽमरः । च्युतो भूषणनामाऽभूद्वारुण्यां तनयः शुभः ॥ ८६ ॥
नैमित्तेनायमादिष्टः प्रव्रजिष्यत्ययं ध्रुवम् । श्रुत्वैवं धनदो लोकादभूदुद्विग्नमानसः ॥ ८७ ॥
सत्पुत्रप्रेमसक्तेन तेन वेश्मनि धापितम् । योग्यं सर्वक्रियायोगे यत्र तिष्ठति भूषणः ॥ ८८ ॥
सेव्यमानो वरस्त्रीभिर्वस्त्राहारविलेपनैः । विविधैर्ललितं चक्रे सुंदरं तत्र भूषणः ॥ ८९ ॥

नैक्षिष्ट भानुमुद्यन्तं नास्तं यान्तं च नोडुपम् । स्वप्नेऽप्यसौ गतो भूमिं गृहशैलस्य पंचमीम् ॥९०॥
मनोरथशतैर्लब्धः पुत्रोऽसावेक एव हि । पूर्वस्नेहानुबंधेन दयितो जीवितादपि ॥ ९१ ॥
धनदः सोदरः पूर्वं भूषणस्य पिताऽभवत् । विचित्रं खलु संसारे प्राणिनां नटचेष्टितम् ॥ ९२ ॥
तावत्क्षपाक्षये श्रुत्वा देवदुंदुभिनिस्वनम् । दृष्ट्वा देवागमं श्रुत्वा शब्दं चाऽभूद्विबुद्धवान् ॥ ९३ ॥
स्वभावान्मृदुचेतस्कः सद्धर्माचारतत्परः । महाप्रमोदसंपन्नः करकुड्मलमस्तकः ॥ ९४ ॥
श्रीधरस्य मुनीन्द्रस्य वंदनार्थं त्वरान्वितः । सोपानेऽवतरन्दष्टः सोऽहिना तनुमत्यजत् ॥ ९५ ॥
माहेन्द्रस्वर्गमाऽऽढश्च्युतो द्वीपे च पुष्करे । चंद्रादित्यपुरे जातः प्रकाशयशसः सुतः ॥ ९६ ॥
माताऽस्य माधवीत्यासीत्स जगद्युतिसंज्ञितः । राजलक्ष्मीं परिप्राप्तः परमां यौवनोदये ॥ ९७ ॥
संसारात्परमं भीरुरसौ स्थविरमंत्रिभिः । उपदेशं प्रयच्छाद्भिः राज्यं कृच्छ्रेण कार्यते ॥ ९८ ॥
कुलक्रमागतं वत्स राज्यं पालय सुंदरम् । पालितेऽस्मिन्समस्तेयं सुखिनी जायते प्रजा ॥९९ ॥
तपोधनान्स राज्यस्थः साधून्संतर्प्य संततम् । गत्वा देवकुरुं काले कल्पमैशानमाश्रितः ॥१००॥
पल्योपमान्बहून्तत्र देवीजनसमावृतः । नानारूपधरो भोगान् बुभुजे परमद्युतिः ॥ १०१ ॥
च्युतो जंबूमति द्वीपे विदेहे मेरुपश्चिमे । रत्नाख्या चालहरिणी महिष्यचलचक्रिणः ॥ १०२ ॥

बभूव तनयस्तस्य सर्वलोकसमुत्सवः । अभिरामोऽगनामाभ्यां महागुणसमुच्चयः ॥ १०३ ॥
महावैराग्यसंपन्नं प्रव्रज्याभिमुखं च तम् । ऐश्वर्येऽयोजयच्चक्री कृतविवाहकं बलात् ॥ १०४ ॥
त्रीणि नारीसहस्राणि सततं गुणवर्त्तिनम् । लालयंति स्म यत्नेन वारिस्थमिव वारणम् ॥१०५॥
वृतस्ताभिरसौ मेने रतिसौख्यं विषोपमम् । श्रामण्यं केवलं कर्तुं न लेभे शान्तमानसः ॥ १०६ ॥
असिधाराव्रतं तीव्रं तासां मध्यगतो विभुः । चकार हारकेयूरमुकुटादिविभूषितः ॥ १०७ ॥
स्थितो वरासने श्रीमान्वनिताभ्यः समंततः । उपदेशं ददौ जैनधर्मशंसनकारिणम् ॥ १०८ ॥
चिरं संसारकान्तारे भ्राम्यता पुण्यकर्मतः । मानुष्यकमिदं कृच्छ्रात्प्राप्यते प्राणधारिणा ॥ १०९ ॥
जानानः को जनः कूपे क्षिपति स्वं महाशयः । विषं वा कः पिबेत्को वा भृगौ निद्रां निषेवते ॥
को वा रत्नेप्सया नाग–मस्तकं पाणिना स्पृशेत् । विनाशकेषु कामेषु धृतिर्जायेत कस्य वा १११
सुकृतासक्तिरेकैव श्लाघ्या मुक्तिसुखावहा । जनानां चंचलेऽत्यंतं जीविते निस्पृहात्मनाम् ॥११२॥
एवमाद्या गिरः श्रुत्वा परमार्थोपदेशिनीः । उपशांता स्त्रियः शक्ता नियमेषु रंरंजिरे ॥ ११३ ॥
राजपुत्रः सुदेहेऽपि स्वकीये रागवर्जितः । चतुर्थादिभिराहारैः कर्मकालुष्यमक्षिणोत् ॥ ११४ ॥
तपसा स विचित्रेण समाहितमना विभुः । शरीरं तनुतां निन्ये ग्रीष्मादित्य इवोदकम् ॥११५॥

चतुःषष्टिसहस्राणि वर्षाणां स सुदर्शनः । अकंपितमना वीरस्तपश्चक्रेऽतिदुःसहम् ॥ ११६ ॥
पंचप्रणामसंयुक्तं समाधिमरणं श्रितः । अशिश्रियत्सुदेवत्वं कल्पे ब्रह्मोत्तरश्रुतौ ॥ ११७ ॥
असौ धनदपूर्वस्तु जीवः संसृत्य योनिषु । पोदने नगरे जज्ञे जंबूभरतदक्षिणे ॥ ११८ ॥
शकुनाग्निमुख स्तस्य माहनी जन्मकारणम् । नाम्ना मृदुमतिश्चासौ व्यर्थेन परिभाषितः ॥११९॥
द्यूताविनयसक्तात्मा रथ्यारेणुसमुक्षितः । नानापराधवद्भ्योऽयः स बभूव दुरीहितः ॥ १२० ॥
लोकोपालंभखिन्नाभ्यां पितृभ्यां स निराकृतः । पर्यटय धरणीं प्राप यौवने पोदनं पुनः ॥१२१॥
प्रविष्टो भवनं किंचिज्जलं पातुमयाचत । अददान्माहनी तस्मै जलं निपतदश्रुका ॥ १२२ ॥
सुशीतलांबुतृप्तात्मा पप्रच्छासौ कुतस्त्वया । रुद्यते करुणायुक्तं इत्युक्ते माहनी जगौ ॥ १२३ ॥
भद्र त्वदाकृतिर्बालो मया पतिसमेतया । करुणोज्झितया गेहात्पुत्रको हा निराकृतः ॥ १२४ ॥
स त्वया भ्राम्यता देशे यदि स्यादीक्षितः कचित् । नीलोत्पलप्रतीकाशस्ततो वेदय तद्गतम् १२५
ततोऽसावश्रुमानूचे सवितृ रुदितं त्यज । समाश्वसिहि सोऽहं ते चिरदुर्लक्ष्यकः सुतः ॥ १२६ ॥
शकुनाग्निमुखेनामा पुत्रप्राप्तिमहोत्सवम् । परिप्राप्ता सुखं तस्थौ तत्क्षणप्रस्नुतस्तनी ॥ १२७ ॥
तेजस्वी सुंदरो धीमान्नानाशास्त्रविशारदः । सर्वस्त्रीदृङ्मनोहारी धूर्त्तानां मस्तके स्थितः ॥१२८॥

दुरोदरे सदा जेता सुविदग्धः कलालयः । कामोपभोगसक्तात्मा रेमे मृदुमतिः पुरे ॥ १२९ ॥
वसन्तसमये नाम गणिकानामनुत्तमा । द्वितीया रमणाचारे तस्याभूत्वरमेप्सिता ॥ १३० ॥
पितरौ बंधुभिः सार्द्धं दरिद्र्याचेन मोचितौ । राजलीलां परिप्राप्तौ लब्धसर्वसमीहितौ ॥ १३१ ॥
कुंडलाद्यैरलंकारैः पिताभूदतिभासुरः । नानाकार्यगणव्यग्रा माता कांच्यादिमंडिता ॥ १३२ ॥
शशांकनगरे राजगृहं चौर्यरतोऽन्यदा । विष्टो मृदुमतिः शब्दमशृणोन्नंदिवर्द्धनम् ॥ १३३ ॥
शशांकमुखसंज्ञस्य गुरोश्चरणमूलतः । मयाद्य परमो धर्मः श्रुतः शिवसुखप्रदः ॥ १३४ ॥
विषया विषवद्देवि परिणामे सुदारुणाः । तस्माद्व्रजाम्यहं दीक्षां न शोकं कर्त्तुमर्हसि ॥ १३५ ॥
शिक्षयंतं नृपं देवीमेवं श्रीनंदिवर्द्धनम् । श्रुत्वा मृदुमतिर्बोधिं निर्मलां समुपाश्रितः ॥ १३६ ॥
संसारभावसंविग्नःसाधोश्चन्द्रमुखश्रुतेः । पादमूलेऽभजद्दीक्षां सर्वग्रन्थविमोचिनीम् ॥ १३७ ॥
अतपन्स तपो घोरं विधिं शास्त्रोक्तमाचरन् । भिक्षां प्राप्नुवन्किंचित्प्रासुकां स क्षमान्वितः १३८
अथ दुर्गगिरेर्मूर्द्धि नाम्ना गुणनिधिर्मुनिः । चकार चतुरो मासान्वार्षुकानत्र भुक्तिदान् ॥ १३९॥
सुरासुरास्तुतो धीरः समाप्तनियमोऽभवत् । उत्पपात मुनिः कापि विधिना गगनायनः ॥ १४० ॥
अथो मृदुमतिर्भिक्षाकरणार्थं सुचेष्टितः । आलोकनगरं प्राप्तो युगमात्राहितेक्षणः ॥ १४१ ॥

ददर्श संभ्रमेणैतं पौरलोकः स पार्थिवः । शैलाग्रेऽवस्थितः सोऽयमिति ज्ञात्वा सुभक्तिकः १४२
भक्ष्यैर्बहुप्रकारैस्तं तर्पयंतिस्म पूजितम् । जिह्वेंद्रियरतो मायां स च भेजे कुकर्मतः ॥ १४३ ॥
स त्वं यः पर्वतस्याग्रे यतिनाथो व्यवस्थितः । वंदितस्त्रिदशैरेवमुक्तः सोऽनमयच्छिरः ॥ १४४ ॥
अज्ञानादभिमानेन दुःखबीजमुपार्जितम् । स्वादगौरवसक्तेन तेनेदं स्वस्य वंचनम् ॥ १४५ ॥
एतत्तेन गुरोरग्रे न मायाशल्यमुद्धृतम् । दुःखभाजनतां तेन संप्राप्तः परमामिमाम् ॥ १४६ ॥
ततो मृदुमतिः कालं कृत्वा तं कल्पमाश्रितः । अभिरामोऽमरो यत्र वर्त्तते महिमान्वितः ॥१४७॥
पूर्वकर्मानुभावेन तयोरतिनिरंतरा । त्रिविष्टपेऽभवत्प्रीतिः परमर्द्धिसमेतयोः ॥ १४८ ॥
देवीजनसमाकीर्णौ सुखसागरवर्त्तिनौ । बहूनब्धिसमांस्तत्र रेमाते तौ स्वपुण्यतः ॥ १४९ ॥
च्युतो मृदुमतिस्तस्मात्पुण्यराशिपरिक्षये । मायावशेषकर्माक्तो जंबूद्वीपं समागतः ॥ १५० ॥
उत्तुंगशिखरो नाम्ना निकुंज इति भूधरः । अटव्यां तस्य शल्लक्यां गहनायां विशेषतः ॥१५१॥
अयं जीमूतसंघातसंकाशो वारणोऽभवत् । क्षुब्धार्णवसमस्वानो गतिनिर्जितमारुतः ॥ १५२ ॥
अत्यंतभैरवाकारः कोपकालेऽभिमानवान् । शशांकाकृतिसद्दंष्ट्रो दंतिराजगुणान्वितः ॥ १५३ ॥
विजयादिमहानागगोत्रजः परमद्युतिः । द्विषन्नैरावतस्यैव स्वच्छन्दकृतविग्रहः ॥ १५४ ॥

सिंहव्याघ्रमहावृक्षगंडशैलविनाशकृत् । आसतां मानुषास्तावद्दुर्ग्रहः खेचरैरपि ॥ १५५ ॥
समस्तश्वापदत्रासं कुर्वन्नामोदमात्रतः । रमते गिरिकंजेषु नानापल्लवहारिषु ॥ १५६ ॥
अक्षोभ्ये विमले नानाकुसुमैरुपशोभिते । मानसे सरसि क्रीडां कुरुतेऽनुचरान्वितः ॥ १५७ ॥
विलासं सेवते सारं कैलासे सुलभेक्षिते । मंदाकिन्याः मनोज्ञेषु ह्रदेषु च परः सुखी ॥ १५८ ॥
अन्येषु च नगारण्यप्रदेशेष्वतिहारिषु । भजते क्रीडनं कांतं बांधवानां महोदयः ॥ १५९ ॥
अनुवृत्तिप्रसक्तानां करेणूनां स भूरिभिः । सहस्रैः संगतः सौख्यं भजते यूथपोचितम् ॥१६०॥
इतस्ततश्च विचरन् द्विरदौघसमावृतः । शोभते पक्षिसंघातैर्विनतानंदनो यथा ॥ १६१ ॥
घनाघनघनस्वानो दाननिर्झरपर्वतः । लंकेंद्रेणेक्षितः सोऽयमासीद्वारणसत्तमः ॥ १६२ ॥
विद्यापराक्रमोग्रेण तेनायं साधितोऽभवत् । त्रिलोककंटकाभिख्यां प्रापितश्चारुलक्षणः ॥ १६३ ॥
अप्सरोभिः समं स्वर्गे प्रक्रीड्य सुचिरं सुखम् । करिणीभिः समं क्रीडामकरोत्सुकरी पुनः ॥१६४॥
ईदृशी कर्मणां शक्तिर्यज्जीवाः सर्वयोनिषु । वस्तुतो दुःखयुक्तासु प्राप्नुवंति परां रतिम् ॥१६५॥
च्युतः सन्नभिरामोऽपि साकेतानगरे नृपः । भरतोऽयमभूद्धीमान् सद्धर्मगतमानसः ॥ १६६ ॥
विलीनमोहनिचयः सोऽयं भोगपराङ्मुखः । श्रामण्यमीहते कर्तुं पुनर्भवनिवृत्तये ॥ १६७ ॥

गोदंडमार्गसदृशे यो मरीचिः प्रवर्त्तते । समये दीक्षितावास्तां परित्यक्तमहाव्रतौ ॥ १६८ ॥
तावेतौ मानिनौ भानुशशांकोदयसंज्ञितौ । संसारदुःखितौ भ्रांतौ भ्रातरौ कर्मचेष्टितौ ॥ १६९ ॥
कृतस्य कर्मणो लोके सुखदुःखविधायिनः । जना निस्तपसोऽवश्यं प्राप्नुवंति फलोदयम् १७०
चंद्रः कुलंकरो यश्च समाधिमरणी मृगः । सोऽयं नरपतिर्जातो भरतः साधुमानसः ॥ १७१ ॥
आदित्यश्रुतिविप्रश्च कृष्टमृत्युः कुरंगकः । संप्राप्तो गजतामेष पापकर्मानुभावतः ॥ १७२ ॥
प्रमृद्य बंधनस्तंभं बलवानुद्धतः परम् । भरतालोकनात्स्मृत्वा पूर्वजन्म शमं गतः ॥ १७३ ॥

ज्ञात्वैवं गतिमागतिं च विविधां बाह्यं सुखं वा ध्रुवं ।
कर्मारण्यमिदं विहाय विषमं धर्मे रमध्वं बुधाः ॥
मानुष्यं समवाप्य यैर्जिनवरप्रोक्तो न धर्मः कृत—
स्ते संसारसुहृत्त्वमभ्युपगताः स्वार्थस्य दूरे स्थिताः ॥ १७४ ॥
जिनवरवदनविनिर्गतमुपलभ्य शिवैकदानतत्परमतुलम् ।
निर्जितरविरुचिसुकृतं कुरुत यतो यात निर्मलं परमपदम् ॥ १७५ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे भरतत्रिभुवनालंकारसमाध्यनुभवानुकीर्त्तनं नाम पञ्चाशीतितमं पर्व ।

# अथ षडशीतितमं पर्व ।

साधोस्तद्वचनं श्रुत्वा सुपवित्रं तमोऽपहम् । संसारसागरे घोरे नानादुःखनिवेदनम् ॥ १ ॥
विस्मयं परमं प्राप्ता भरतानुभवोद्भवम् । पुस्तकर्मगतेवाऽऽसीत्सा सभा चेष्टितोज्झिता ॥ २ ॥
भरतोऽथ समुत्थाय प्रचलद्धारकुंडलः । प्रतापप्रथितः श्रीमान्देवेन्द्रसमविभ्रमः ॥ ३ ॥
वहन्संवेगमुत्तुंगं प्रह्वकायो महामनाः । रभसान्वितमासाद्य बद्धः पाण्यब्जकुड्मलः ॥ ४ ॥
जानुसंपीडितक्षोणिः प्रणिपत्य मुनीश्वरम् । संसारवासखिन्नोऽसौ जगाद सुमनोहरम् ॥ ५ ॥
नाथ योनिसहस्रेषु संकटेषु चिरं भ्रमन् । महाध्वश्रमखिन्नोऽहं यच्छ मे मुक्तिकारणम् ॥ ६ ॥
उह्यमानाय संभूतिमरणोग्रतरंगया । मह्यं संसृतिनद्यास्त्वं हस्तालंबकरो भव ॥ ७ ॥
इत्युक्त्वा त्यक्तनिःशेषग्रंथपर्यङ्कबंधगः । स्वकरेणाकरोल्लुंचं महासत्त्वसमन्वितः ॥ ८ ॥
परं सम्यक्त्वमासाद्य महाव्रतपरिग्रहः । दीक्षितो भरतो जातस्तत्क्षणेन मुनिः परः ॥ ९ ॥
साधु साध्विति देवानामंतरिक्षेऽभवत्स्वनः । पेतुः पुष्पाणि दिव्यानि भरते मुनितामिते ॥ १० ॥
सहस्रमधिकं राज्ञां भरतस्यानुरागतः । क्रमागतां श्रियं त्यक्त्वा श्रामण्यं समशिश्रियत् ॥ ११ ॥

अनुग्रशक्तयः केचिन्नमस्कृत्य मुनिं जनाः । उपासांचक्रिरे धर्मं विधिनागारसंगतम् ॥ १२ ॥
संभ्रान्ता केकया बाष्पदुर्दिनाऽऽकुलचेतना । धावन्ती पतिता भूमौ व्यामोहं च समागता १३
सुतप्रीतिभराक्रान्ता ततोऽसौ निश्चलांगिका । गोशीर्षादिपयःसेकैरपि संज्ञामुपैति न ॥ १४ ॥
व्यक्तचेतनतां प्राप्य चिराय स्वयमेव सा । अरोदीत्करुणं धेनुर्वत्सेनेव वियोजिता ॥ १५ ॥
हा मे वत्स मनोह्लाद सुविनीत गुणाकर । क प्रयातोऽसि वचनं प्रयच्छांगानि धारय ॥ १६ ॥
त्वया पुत्रक संत्यक्ता दुःखसागरवर्त्तिनी । कथं स्थास्यामि शोकार्त्ता हा किमेतदनुष्ठितम् १७
कुर्वतीति समाक्रन्दं हलिना चक्रिणा च सा । आनीयत समाश्वासं वचनैरतिसुंदरैः ॥ १८ ॥
पुण्यवान् भरतो विद्वानंब शोकं परित्यज । आवां ननु न किं पुत्रौ तवाज्ञाकरणोद्यतौ ॥ १९ ॥
इति कातरतां कृच्छ्रात्त्याजिता शांतमानसा । सपत्नीवाक्यजातैश्च सा बभूव विशोकिका ॥२०॥
विबुद्धा चाकरोन्निंदामात्मनः शुद्धमानसा । धिक् स्त्रीकलेवरमिदं बहुदोषपरिप्लुतम् ॥ २१ ॥
अत्यंताशुचिवीभत्सं नगरीनिर्झरोपमम् । करोमि कर्म तद्येन विमुच्ये पापकर्मतः ॥ २२ ॥
पूर्वमेव जिनोक्तेन धर्मेणाऽसौ सुभाविता । महासंवेगसंपन्ना सितैकवसनान्विता ॥ २३ ॥
सकाशे पृथिवीमत्याः सह नारीशतैस्त्रिभिः । दीक्षां जग्राह सम्यक्त्वं धारयंती सुनिर्मलम् ॥२४॥

त्यक्त्वा समस्तं गृहिधर्मजालं प्राप्याऽऽर्यिका धर्ममनुत्तमं सा ॥
रराज मुक्ता घनसंगमेन शशांकलेखेव कलंकहीना ॥ २५ ॥
इतोऽभवद्भिक्षुगणः सुतेजास्तथाऽऽर्यिकाणां प्रचयोऽन्यतोऽभूत् ॥
तदा सदो भूरिसरोजयुक्तं सदः समं तद्भवति स्म कान्तम् ॥ २६ ॥
एवं जनस्तत्र बभूव नाना--व्रतक्रियासंगपवित्रचित्तः ॥
समुद्गते भव्यजनस्य कस्य रवौ प्रकाशेन न मुक्तिरस्ति ॥ २७ ॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे भरतकेकयानिष्क्रमणाभिधानं नाम षडशीतितमं पर्व ।

---

# अथ सप्ताशीतितमं पर्व ।

अथ साधुः प्रशांतात्मा लोकत्रयविभूषणः । अणुव्रतानि मुनिना विधिना परिलंभितः ॥ १ ॥
सम्यग्दर्शनसंयुक्तः संज्ञानः सत्क्रियोद्यतः । सागारधर्मसंपूर्णो मतंगजवरोऽभवत् ॥ २ ॥
पक्षमासादिभिर्भक्तश्च्युतः पत्रादिभिः स्वयम् । शुष्कैः स पारणं चक्रे दिनपूर्णैकवेलिकाम् ॥३॥

गजः संसारभीतोऽयं सच्चेष्टितपरायणः । अर्च्यमानो जनैः क्षोणीं विजहार विशुद्धिमान् ॥ ४ ॥
लड्डुकान्मंडकान्मृष्टान्विविधाश्चारुपूरिकाः । पारणासमये तस्मै ससत्कारं ददौ जनः ॥ ५ ॥
तनुकर्मशरीरोऽसौ संवेगाऽऽलानसंयतः । उग्रं चत्वारि वर्षाणि तपश्चक्रे यमांकुशः ॥ ६ ॥
स्वैरं स्वैरं परित्यज्य भुक्तिमुग्रतपा गजः । सल्लेखनां परिप्राप्य ब्रह्मोत्तरमशिश्रियत् ॥ ७ ॥
वरांगनासमाकीर्णो हारकुंडलमंडितः । पूर्वं सुरसुखं प्राप्तो गजः पुण्यानुभावतः ॥ ८ ॥
भरतोऽपि महातेजा महाव्रतधरो विभुः । धराधरगुरुस्त्यक्तबाह्यांतरपरिग्रहः ॥ ९ ॥
व्युत्सृष्टांगो महाधीरस्तिष्ठन्नस्तमिते रवौ । विजहार यथा न्यायं चतुराराधनोद्यतः ॥ १० ॥
अविबद्धो यथा वायुर्मृगेन्द्र इव निर्भयः । अकूपार इवाक्षोभ्यो निष्कंपो मंदरो यथा ॥ ११ ॥
जातरूपधरः सत्यकवचः क्षांतिसायकः । परीषहजयोद्युक्तस्तपः संयत्यवर्तत ॥ १२ ॥
समः शत्रौ च मित्रे च समानः सुखदुःखयोः । उत्तमः श्रमणः सोऽभूत्समधीस्तृणरत्नयोः॥१३॥
सूचीनिचितमार्गेषु भ्राम्यतः शास्त्रपूर्वकम् । शत्रुस्थानेषु तस्याभूच्चतुरंगगुलचारिता ॥ १४ ॥
अत्यंतप्रलयं कृत्वा मोहनीयस्य कर्मणः । अवाप केवलज्ञानं लोकालोकावभासनम् ॥ १५ ॥
ईदृङ्माहात्म्ययुतः काले समनुक्रमेण विगतरजस्कः ॥

यदभीप्सितं तदेष स्थानं प्राप्तो यतो न भूयः पातः ॥ १६ ॥
भरतर्षेरिदमनघं सुचरितमनुकीर्त्तयेन्नरो यो भक्त्या ॥
स्वायुरियर्त्ति स कीर्त्तिं यशो बलं धनविभूतिमारोग्यं च ॥ १७ ॥
सारं सर्वकथानां परममिदं चरितमुन्नतगुणं शुभ्रम् ॥
शृण्वंतु जना भव्या निर्जितरवितेजसो भवंति यदाशु ॥ १८ ॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे भरतनिर्वाणगमनं नाम सप्ताशीतितमं पर्व ।

---

# अथाष्टाशीतितमं पर्व ।

भरतेन समं वीरा निष्क्रांता ये महानृपाः । निःस्पृहाः स्वशरीरेऽपि प्रव्रज्यां समुपागताः ॥१॥
प्राप्तानां दुर्लभं मार्गं तेषां सुपरमात्मनाम् । कीर्त्तयिष्यामि केषांचिन्नामानि शृणु पार्थिव ॥२॥
सिद्धार्थः सिद्धसाध्यार्थो रतिदो रतिवर्द्धनः । अंबुवाहरथो जांबूनदः शल्यः शशांकपात् ॥ ३ ॥
विरसो नंदनो नन्द आनन्दः सुमतिः सुधीः । सदाश्रयो महाबुद्धिः सूर्योरो जनवल्लभः ॥ ४ ॥

इन्द्रध्वजः श्रुतधरः सुचन्द्रः पृथिवीधरः । अलकः सुमतिः क्रोधः कुंदरः सत्ववान्हरिः ॥ ५ ॥
सुमित्रो धर्ममित्रायः संपूर्णेन्दुः प्रभाकरः । नघुषः सुंदनः शांतिः प्रियधर्मादयस्तथा ॥ ६ ॥
विशुद्धकुलसंभूताः सदाचारपरायणाः । सहस्राधिकसंख्याना भुवनाख्यातचेष्टिताः ॥ ७ ॥
एते हस्त्यश्वपादातं प्रवालस्वर्णमौक्तिकम् । अंतःपुरं च राज्यं च बहुजीर्णतृणं यथा ॥ ८ ॥
महाव्रतधराः शांता नानालब्धिसमागताः । आत्मध्यानानुरूपेण यथायोग्यं पदं श्रिताः ॥ ९ ॥
निष्क्रांते भरते तस्मिन्भरतोपमचेष्टिते । मेने शून्यकमात्मानं लक्ष्मणः स्मृततद्गुणः ॥ १० ॥
शोकाकुलितचेतस्को विषादं परमं भजन् । सूत्कारमुखरः क्लान्तलोचनेंदीवरद्युतिः ॥ ११ ॥
विराधितभुजस्तंभकृतावष्टंभविग्रहः । तथापि प्रज्वलन् लक्ष्म्या मंदवर्णमवोचत ॥ १२ ॥
अधुना वर्त्तते क्वासौ भरतो गुणभूषणः । तरुणेन सता येन शरीरे प्रीतिरुज्झिता ॥ १३ ॥
इष्टं बंधुजनं त्यक्त्वा राज्यं च त्रिदशोपमम् । सिद्धार्थी स कथं भेजे जैनधर्मं सुदुर्धरम् ॥ १४ ॥
आह्लादयन् सदः सर्वं ततः पद्मो विधानवित् । जगाद परमं धन्यो भरतः सुमहानसौ ॥ १५ ॥
तस्यैकस्य मतिः शुद्धा तस्य जन्मार्थसंगतम् । विषान्नमिव यस्त्यक्त्वा राज्यं प्राव्रज्यमास्थितः॥
पूज्यता वर्ण्यतां तस्य कथं परमयोगिनः । देवेंद्रा अपि नो शक्ता यस्य वक्तुं गुणाकरम्॥१७॥

केकयीनंदनस्यैव प्रारब्धगुणकीर्त्तनाः । सुखदुःखरसोन्मिश्रा मुहूर्त्तं पार्थिवा स्थिताः ॥ १८ ॥
ततः समुत्थिते पद्मे सोद्वेगे लक्ष्मणे तथा । यथा स्वमास्पदं याता नरेन्द्रा बहुविस्मयाः ॥१९॥
संप्रधार्य पुनः प्राप्ताः कर्त्तव्या हितचेतसः । पद्मनाभं नमस्कृत्य प्रीत्या वचनमब्रुवन् ॥ २० ॥
विदुषामज्ञकानां वा प्रसादं कुरु नाथ नः । राज्याभिषेकमन्विच्छ सुरलोकसमुद्युति ॥ २१ ॥
विदधत्सफलत्वं नश्चक्षुषोर्हृदयस्य च । तवाभिषेकसौख्येन भरितस्य नरोत्तम ॥ २२ ॥
विभ्रत्सप्तगुणैश्वर्यं राजराजो दिने दिने । पादौ नमति यत्नैष तत्र राज्येन किं मम ॥ २३ ॥
प्रतिकूलमिदं वाच्यं न भवद्भिर्मयीदृशम् । स्वेच्छाविधानमात्रं हि ननु राज्यमुदाहृतम् ॥ २४ ॥
इत्युक्ते जयशब्देन पद्माभमभिनंद्य ते । गत्वा नारायणं प्रोचुः स चायातो बलांतिकम् ॥ २५॥
प्रावृडारंभसंभूतडंबरांभोदनिःस्वनाः । ततः समाहता भेर्यः शंखशब्दपुरःसराः ॥ २६ ॥
दुंदुभ्यानकझल्लर्यस्तूर्याणि प्रवराणि च । मुमुचुर्नादमुत्तुंगं वंशादिस्वनसंगतम् ॥ २७ ॥
चारुमंगलगीतानि नाट्यानि विविधानि च । प्रवृत्तानि मनोज्ञानि यच्छंति प्रमदं परम् ॥ २८ ॥
तस्मिन्महोत्सवे जाते स्नानीयासनवर्त्तिनौ । विभूत्या परया युक्तौ संगतौ रामलक्ष्मणौ ॥२९॥
रुक्मकांचननिर्माणैर्नानारत्नमयैस्तथा । कलशैर्युक्तपद्मास्यैरभिषिक्तौ यथाविधि ॥ ३० ॥

मुकुटांगदकेयूरहारकुंडलभूषितौ । दिव्यस्रग्वस्त्रसंपन्नौ वरालेपनचर्चितौ ॥ ३१ ॥
सीरपाणिर्जयत्वेषश्चक्री जयतु लक्ष्मणः । इति तौ जयशब्देन खेचरैरभिनंदितौ ॥ ३२ ॥
राजेंद्रयोस्तयोः कृत्वा खेचरेंद्रा महोत्सवम् । गत्वाऽभिषिषिचुर्देवीं स्वामिनीं नु विदेहजाम् ३३
महासौभाग्यसंपन्ना पूर्वमेव हि साऽभवत् । प्रधाना सर्वदेवीनामभिषेकाद्विशेषतः ॥ ३४ ॥
आनंद्य जयशब्देन वैदेहीमभिषेचनम् । ऋद्ध्या चक्रुर्विशल्यायाश्चक्रिपत्नीविभुत्वकृत् ॥ ३५ ॥
स्वामिनी लक्ष्मणस्यापि प्राणदानाद्बभूव या । मर्यादामात्रकं तस्यास्तज्जातमभिषेचनम् ॥३६॥
जय त्रिखंडनाथस्य लक्ष्मणस्याथ सुंदरि । इति तां जयशब्देन तेऽभिनंद्य स्थिताः सुखम्॥३७॥
त्रिकूटशिखरे राज्यं ददौ रामो विभीषणे । सुग्रीवस्य च किष्किधे वानरध्वजभूभृतः ॥ ३८ ॥
श्रीपर्वते मरुज्जस्य गिरौ श्रीनगरे पुरे । विराधितनरेन्द्रस्य गोत्रक्रमनिषेविते ॥ ३९ ॥
महार्णवोर्मिसंतानचुंबिते बहुकौतुके । कैष्किधे च पुरे स्फीतं पतित्वं नलनीलयोः ॥ ४० ॥
विजयार्द्धदक्षिणे स्थाने प्रख्याते रथनूपुरे । राज्यं जनकपुत्रस्य प्रणतोग्रनभश्चरम् ॥ ४१ ॥
देवोपगीतनगरे कृतो रत्नजटी नृपः । शेषा अपि यथायोग्यं विषयस्वामिनः कृताः ॥ ४२ ॥
एवं स्वपुण्योदययोग्यमाप्ता राज्यं नरेंद्राश्चिरमप्रकंपम् ॥

रामानुमत्या बहुलब्धहर्षा—स्तस्थुर्यथास्वं निलयेषु दीप्ताः ॥ ४३ ॥
पुण्यानुभावस्य फलं विशालं विज्ञाय सम्यग्जगति प्रसिद्धम् ॥
कुर्वन्ति ये धर्मरतिं मनुष्या रवेर्द्युतिं ते जनयंति तन्वम् ॥ ४४ ॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे राज्याभिषेकाभिधानं विभागदर्शनं नाम अष्टाशीतितमं पर्व ।

---

# अथ नवाशीतितमं पर्व ।

अथ सम्यग्वहन् प्रीतिं पद्माभो लक्ष्मणस्तथा । ऊचे शत्रुघ्नमिष्टं त्वं विषयं रुचिमानय ॥ १ ॥
गृह्णासि किमयोध्यार्द्धं साधु वा पोदनापुरम् । किं वा राजगृहं रम्यं यदि वा पौंड्रसुंदरम् ॥ २ ॥
इत्याद्याः शतशस्तस्य राजधान्यः सुतेजसः । उपदिष्टा न चास्यैता निदधुर्मानसे पदम् ॥ ३ ॥
मथुरायाचने तेन कृते पद्मः पुनर्जगौ । मधुर्नाम च तत्स्वामी त्वया ज्ञातो न किं रिपुः ॥ ४ ॥
जामाता रावणस्यासावनेकाहवशोभितः । शूलं चमरनाथेन यस्य दत्तमनिष्फलम् ॥ ५ ॥
अमरैरपि दुर्वारं तन्निदाघार्कदुःसहम् । कृत्वा प्राणान् सहस्रस्य शूलमेति पुनः करम् ॥ ६ ॥

यस्यार्थं कुर्वतां मंत्रमस्माकं वर्त्तते समा । रात्रावपि न विंदामो निद्रां चिंतासमाकुलाः ॥ ७ ॥
हरीणामन्वयो येन जायमानेन पुष्कलः । नीतः परममुद्योतं लोकस्तिग्मांशुना यथा ॥ ८ ॥
खेचरैरपि दुःसाध्यो लवणार्णवसंज्ञकः । सुतो यस्य कथं शूरं तं विजेतुं भवान् क्षमः ॥ ९ ॥
ततो जगाद शत्रुघ्नः किमत्र बहुभाषितैः । प्रयच्छ मथुरां मह्यं ग्रहीष्यामि ततः स्वयम् ॥ १० ॥
मधूकमिव कृंतामि मधुं यदि न संयुगे । ततो दशरथेनाहं पित्रा मानं वहामि नो ॥ ११ ॥
शरभः सिंहसंघातमिव तस्य बलं यदि । न चूर्णयामि न भ्राता युष्माकमहकं तदा ॥ १२ ॥
नास्मि सुप्रजसः कुक्षौ संभूतो यदि तं रिपुम् । न यामि दीर्घनिद्रां न त्वदाशीःकृतपालनः ॥१३॥
एवमास्थां समारूढे तस्मिन्नुत्तमतेजसि । विस्मयं परमं प्राप्ता विद्याधरमहेश्वराः ॥ १४ ॥
ततस्तमुद्यतं गंतुं समुत्सार्य हलायुधः । जगाद दक्षिणामेकां धीर मे यच्छ याचितः ॥ १५ ॥
तमरिघ्नोऽब्रवीद्दाता त्वमनन्यसमो विभुः । याचसे किं त्वतः श्लाघ्यं परं मेऽन्यद्भविष्यति ॥१६॥
असूनामपि नाथस्त्वं का कथाऽन्यत्र वस्तुनि । युद्धविघ्नं विमुच्यैकं ब्रूहि किं करवाणि वः ॥१७॥
ध्यात्वा जगाद पद्माभो वत्सकासौ त्वया मधुः । रहितः शूलरत्नेन क्षोभ्यः छिद्रे मदर्थनात् १८
यथाऽऽज्ञापयसीत्युक्त्वा सिद्धान्नत्वा समर्च्य च । भक्त्वा मातरमागत्य नत्वाऽपृच्छत्सुखस्थिताम्

समीक्ष्य तनयं देवी स्नेहादाघ्राय मस्तके । जगाद जय वत्स त्वं शरैः शत्रुगणं शितैः ॥ २० ॥
वत्समर्द्धासने कृत्वा वीरसूरगदत्पुनः । वीर दर्शयितव्यं ते पृष्ठं संयति न द्विषाम् ॥ २१ ॥
प्रत्यागतं कृतार्थं त्वां वीक्ष्य जातक संयुगात् । पूजां परां करिष्यामि जिनानां हेमपंकजैः ॥२२॥
त्रैलोक्यमंगलात्मानः सुरासुरनमस्कृताः । मंगलं तव यच्छन्तु जितरागादयो जिनाः ॥ २३ ॥
संसारप्रभवो मोहो यैर्जितोऽत्यंतदुर्जयः । अर्हन्तो भगवंतस्ते भवंतु तव मंगलम् ॥ २४ ॥
चतुर्गतिविधानं ये देशयंति त्रिकालगम् । ददतां ते स्वयंबुद्धास्तव बुद्धिं रिपोर्जये ॥ २५ ॥
करस्थामलकं यद्वल्लोकालोकं स्वतेजसा । पश्यंतः केवलालोका भवंतु तव मंगलम् ॥ २६ ॥
कर्मणाऽष्टप्रकारेण मुक्तास्त्रैलोक्यमूर्द्धगाः । सिद्धाः सिद्धिकरा वत्स भवंतु तव मंगलम् ॥ २७ ॥
कमलादित्यचंद्रक्ष्मामंदराब्धिवियत्समाः । आचार्याः परमाधारा भवंतु तव मंगलम् ॥ २८ ॥
परात्मशासनाभिज्ञाः कृतानुगतशासनाः । सदायुष्मानुपाध्यायाः कुर्वन्तु तव मंगलम् ॥ २९ ॥
तपसा द्वादशांगेन निर्वाणं साधयंति ये । भद्र ते साधवः शूरा भवंतु तव मंगलम् ॥ ३० ॥
इति प्रतीक्ष्य विघ्नघ्नामाशिषं दिव्यमंगलाम् । प्रणम्य मातरं यातः शत्रुघ्नः सद्मनो बहिः ॥ ३१ ॥
हेमकक्षापरीतं स समारूढो महागजम् । रराजांबुदपृष्ठस्थः संपूर्ण इव चंद्रमाः ॥ ३२ ॥

नानायानसमारूढैर्नरराजशतैर्वृतः । शुशुभे स वृतो देवैः सहस्रनयनो यथा ॥ ३३ ॥
त्रीनावासानुरुप्रीतिं भ्रातरं स समागतम् । जगौ पूज्य निवर्त्तस्व द्रागव्रजाम्यनपेक्षतः ॥ ३४ ॥
लक्ष्मणेन धनूरत्नं समुद्रावर्तमर्पितम् । तस्मै ज्वलनवक्राश्च शराः पवनरंहसः ॥ ३५ ॥
कृतांतवक्रमात्माभं नियोज्यास्मै चमूपतिम् । लक्ष्मणेन समं रामश्चितायुक्तो न्यवर्वत ॥ ३६ ॥
राजन्नरिघ्नवीरोऽपि महाबलसमन्वितः । मथुरां प्रति याति स्म मधुराजेन पालिताम् ॥ ३७ ॥
क्रमेण पुण्यभागायास्तीरं प्राप्य ससंभ्रमम् । सैन्यं न्यवेशयद्दूरमध्वानं समुपागतम् ॥ ३८ ॥
कृताशेषक्रियस्तत्र मंत्रिवर्गो गतश्रमः । चकार संशयापन्नो मंत्रमत्यंतसूक्ष्मधीः ॥ ३९ ॥
मधुभंगकृताशंसां पश्यतास्य धियं शिशोः । केवलं योऽभिमानेन प्रवृत्तो नयवर्जिताः ॥ ४० ॥
महावीर्यः पुरा येन मांधाता निर्जितो रणे । खेचरैरपि दुःसाध्यो जय्यः सोऽस्य कथं मधुः ४१
चलत्पादाततुंगोर्मिशस्त्रग्राहकुलाकुलम् । कथं वांछति बाहुभ्यां तरितुं मधुसागरम् ॥ ४२ ॥
पादातसुमहावृक्षं मत्तवारणभीषणम् । प्रविश्य मधुकांतारं को निःक्रामति जीवितः ॥ ४३ ॥
एवमुक्तं समाकर्ण्य कृतांतकुटिलोऽवदत् । यूयं भीताः किमित्येवं त्यक्त्वा मानसमुन्नतिम् ॥४४॥
अमोघेन किलाऽऽरूढो गर्वं शूलेन यद्यपि । हंतुं तथापि तं शक्तो मधुं शत्रुघ्नसुंदरः ॥ ४५ ॥

करेण बलवान्दंती पातयेद्धरणीरुहान् । प्रक्षरद्दानधारोऽपि सिंहेन तु निपात्यते ॥ ४६ ॥
लक्ष्मीप्रतापसंपन्नः सत्त्ववान्बलवान्बुधः । सुसहायश्च शत्रुघ्नः शत्रुघ्नो जायते ध्रुवम् ॥ ४७ ॥
अथ मंत्रिजनाऽऽदेशान्मथुरानगरीं गताः । प्रत्यावृत्य चरा वार्त्तां वदंति स्म यथाविधि ॥४८॥
शृणु देवाऽस्ति पूर्वस्यां मथुरा नगरी दिशि । उद्यानं रम्यमत्यंतं राजलोकसमावृतम् ॥ ४९ ॥
मध्येऽमरकुरोर्यद्वत्कुबेरच्छदसंज्ञितम् । इच्छापूरणसंपन्नं विपुलं राजतेतराम् ॥ ५० ॥
जयंत्यात्र महादेव्या सहितस्याद्य वर्त्तते । वारीगतगजस्येव स्पर्शवश्यस्य भूभृतः ॥ ५१ ॥
कामिनो दिवसः षष्ठत्यक्ताशेषान्यकर्मणः । महासुस्थाभिमानस्य प्रमादवशवर्त्तिनः ॥ ५२ ॥
प्रतिज्ञां तव नो वेद नागमं कामवश्यधीः । बुधैरुपेक्षितो मोहात्स भिषग्भिः सरोगवत् ॥ ५३ ॥
प्रस्तावे यदि नैतस्मिन्मथुराऽध्यास्यते ततः । अन्यपुंवाहिनीवाहैर्दुःसहः स्यान्मधूदधिः ॥ ५४ ॥
वचनं तत्समाकर्ण्य शत्रुघ्नः क्रमकोविदः । ययौ शतसहस्रेण ययूनां मथुरां पुरीम् ॥ ५५ ॥
अर्द्धरात्रे व्यतीतेऽसौ परलोके प्रमादिनि । निवृत्य प्राविशद्द्वारस्थानं लब्धमहोदयः ॥ ५६ ॥
आसीद्योगीव शत्रुघ्नः द्वारं कर्मेव चूर्णितम् । प्राप्ताऽत्यंतमनोज्ञा च मथुरा सिद्धिभूरिव ॥ ५७ ॥
देवो जयति शत्रुघ्नः श्रीमान्दशरथात्मजः । बंदिनामिति वक्त्रेभ्यो महानादः समुद्ययौ ॥५८॥

परेणाथ समाक्रांतां विज्ञाय नगरीं जनः । लंकायामंगदप्राप्तौ यथा क्षोभमितो भयात् ॥ ५९ ॥
त्रासात्तरलनेत्राणां स्त्रीणामाकुलतायुषाम् । सद्यः प्रचलिता गर्भा हृदयेन समं भृशम् ॥ ६० ॥
महाकलकलारावप्रेरणे प्रतिबोधिनः । उद्ययुः सहसा शूराः सिंहा इव भयोज्झिताः ॥ ६१ ॥
विध्वस्य शब्दमात्रेण शत्रुलोकं मधोर्गृहम् । सुप्रभातनयोऽविक्षदत्यंतोर्जितविक्रमः ॥ ६२ ॥
तत्र दिव्यायुधाकीर्णां सुतेजाः परिपालयन् । शालामवस्थितः प्रीतो यथार्हं समितोदयः ॥६३॥
मधुराभिर्मनोज्ञाभिर्भारतीभिरशेषतः । नीतो लोकः समाश्वासं जहौ त्राससमागमम् ॥ ६४ ॥
शत्रुघ्नं मथुरां ज्ञात्वा प्रविष्टं मधुसुंदरः । निरैद्रावणवत्कोपादुद्यानात्स महाबलः ॥ ६५ ॥
शत्रुघ्नरक्षितं स्थानं प्रवेष्टुं मधुपार्थिवः । निर्ग्रन्थरक्षितं मोहो यथा शक्नोति नो तदा ॥ ६६ ॥
प्रवेशं विविधोपायैरलब्ध्वाप्यभिमानवान् । रहितश्चापि शूलेन न संधिं वृणुते मधुः ॥ ६७ ॥
असहंतः परानीकं द्रष्टुं दर्पसमुद्धुरम् । शत्रुघ्नसैनिकाः सैन्यात्स्वस्मान्निर्ययुरश्विनः ॥ ६८ ॥
तत्राहवसमारंभे शात्रुघ्नं सकलं बलम् । प्राप्तं जातश्च संयोगस्तयोः सैन्यसमुद्रयोः ॥ ६९ ॥
रथेभसादिपादाताः समर्था विविधायुधाः । रथेभैः सादिपादातैरालग्नाः सह वेगिभिः ॥ ७० ॥
असहन्परसैन्यस्य दर्पं रौद्रमहास्वनम् । कृतांतकुटिलोऽविक्षद्वेगवानाहितं बलम् ॥ ७१ ॥

अवारितगतिस्तत्र रणे क्रीडां चकार सः । स्वयंभुरमणोद्याने त्रिविष्टपपतिर्यथा ॥ ७२ ॥
अथ तं गोचरीकृत्य कुमारो लवणार्णवः । बाणैर्घन इवांभोभिस्तिरश्चक्रे महाधरम् ॥ ७३ ॥
सोऽप्याकर्णसमाकृष्टैः शरैराशीविषप्रभैः । चिच्छेद सायकानस्य तैश्च व्याप्तं महीनभः ॥ ७४ ॥
अन्योन्यं विरथीकृत्य सिंहाविव बलोत्कटौ । करिपृष्ठसमारूढौ सरोषौ चक्रतुर्युधम् ॥ ७५ ॥
विताडितः कृतांतः सः प्रथमं वक्षसीषुणा । चकार कवचं शत्रुं शरैरस्त्रैरनंतरम् ॥ ७६ ॥
ततस्तोमरमुद्यम्य कृतांतवदनं पुनः । लवणोऽताडयत्क्रोधविस्फुरल्लोचनद्युतिः ॥ ७७ ॥
स्वशोणितनिषेकाक्तौ महासंरंभवर्तिनौ । किंशुकानोकहच्छायौ प्रवीरौ तौ विरेजतुः ॥ ७८ ॥
गदासिचक्रसंपातो बभूव तुमुलस्तयोः । परस्परबलोन्मादविषादकरणोत्कटः ॥ ७९ ॥
दत्तयुद्धश्चिरं शक्त्या ताडितो लवणार्णवः । वक्षस्यपासृतः क्षोणीं स्वर्गीव सुकृतक्षयात् ॥ ८० ॥
पतितं तनयं वीक्ष्य मधुराहवमस्तके । धावन्कृतावक्त्राय शत्रुघ्नेन विशब्दितः ॥ ८१ ॥
शत्रुघ्नगिरिणा रुद्धो मधुवाहो व्यवर्द्धत । गृहीतः शोककोपाभ्यां दुःसहाभ्यामुपक्रमन् ॥ ८२ ॥
दृष्टिमाशीविषस्यैव तस्याशक्तं निरीक्षितुम् । सैन्यं व्यद्रवदत्युग्राद्वाताद्वा न दलौघवत् ॥ ८३ ॥
तस्याभिमुखमालोक्य व्रजंतं सुप्रजःसुतम् । अभिमानसमारूढा योधाः प्रत्यागता मुहुः ॥८४॥

तावदेव प्रपद्यंते भंगं भीत्याऽनुगामिनः । यावत्स्वामिनमीक्षंते न पुरो विकचाननम् ॥ ८५ ॥
अथोत्तमरथारूढो दिव्यं कार्मुकमाश्रयन् । हारराजितवक्षस्को मुकुटी लोलकुंडलः ॥ ८६ ॥
शरदादित्यसंकाशो निःप्रत्यूहगतिः प्रभुः । व्रजन्नभिमुखः शत्रोरत्युग्रक्रोधसंगतः ॥ ८७ ॥
तदा शतानि योधानां बहूनि दहति क्षणात् । संशुष्कपत्रकूटानि यथा दावोऽरिमर्दनः ॥ ८८ ॥
न कश्चिदग्रतस्तस्य रणे वीरोऽवतिष्ठते । जिन शासनवीरस्य यथान्यमतदूषितः ॥ ८९ ॥
योऽपि तेन समं योद्धुं कश्चिद्वांछति मानवान् । सोऽपि दंतीव सिंहाग्रे विध्वंसं व्रजति क्षणात् ॥
उन्मत्तसदृशं जातं तत्सैन्यं परमाकुलम् । निपतत्क्षतभूयिष्टं मधुं शरणमाश्रितम् ॥ ९१ ॥
रंहसा गच्छतस्तस्य मधुश्चिच्छेद काननम् । रथाश्वास्तस्य तेनाऽपि विलुप्ताः क्षुरसायकैः ॥९२॥
ततः संभ्रांतचेतस्को मधुः क्षितिधरोपमम् । वारुणेंद्रं समारुह्य क्रोधज्वलितविग्रहः ॥ ९३ ॥
प्रच्छादयितुमुद्युक्तः शरैरंतरवर्जितैः । महामेघ इवादित्यबिंबं दशरथात्मजम् ॥ ९४ ॥
छिंदानेन शरान्बद्धकवचं तस्य पुष्कलः । रणप्राघूर्णकाचारः कृतः शत्रुघ्नसूरिणा ॥ ९५ ॥
अथ शूलायुधत्यक्तं ज्ञात्वाऽऽत्मानं विबोधवान् । सुतमृत्युमहाशोको वीक्ष्य शत्रुं सुदुर्जयम्॥९६॥
बुद्ध्वाऽऽत्मनोऽवसानं च कर्म च क्षीणमूर्जितम् । नैर्ग्रंथ्यं वचनं धीरः सस्मारानुशयान्वितः ९७॥

अशाश्वते समस्तेऽस्मिन्नारंभे दुःखदायिनि । कर्मैकमेव संसारे शस्यते धर्मकारणम् ॥ ९८ ॥
नृजन्म सुकृती प्राप्य धर्मे दत्ते न यो मतिम् । स मोहकर्मणा जंतुर्वंचितः परमार्थतः ॥ ९९ ॥
ध्रुवं पुनर्भवं ज्ञात्वा पापेनात्महितं मया । न कृतं स्ववशे काले धिङ्मां मूढं प्रमादिनम्॥१००॥
आत्माधीनस्य पापस्य कथं जाता न मे सुधीः । पुरस्कृतोऽरिणेदानीं किं करोमि हताशकः१०१
प्रदीप्ते भवने कीदृक्तडागखननादरः । को वा भुजंगदष्टस्य कालो मंत्रस्य साधने ॥ १०२ ॥
सर्वथा यावदेतस्मिन्समये स्वार्थकारणम् । शुभं मनःसमाधानं कुर्वे तावदनाकुलः ॥ १०३ ॥
अर्हद्भ्योऽथ विमुक्तेभ्य आचार्येभ्यस्तथा त्रिधा । उपाध्यायगुरुभ्यश्च साधुभ्यश्च नमोनमः १०४
अर्हन्तोऽथ विमुक्ताश्च साधवः केवलीरितः । धर्मश्च मंगलं शश्वदुत्तमं मे चतुष्टयम् ॥ १०५ ॥
द्वीपेस्वर्धतृतीयेषु त्रिपंचार्जनभूमिषु । अर्हतां लोकनाथानामेषोऽस्मि प्रणतीस्त्रिधा ॥ १०६ ॥
यावज्जीवं सहावद्यं योगं मुंचे न चात्मकम् । निंदामि च पुरोपात्तं प्रत्याख्यानपरायणः॥१०७॥
अनादौ भवकांतारे यन्मया समुपार्जितम् । मिथ्या दुष्कृतमेतन्मे स्थितोऽहं तत्वसंगतौ ॥१०८॥
व्युत्सृजाम्येष हातव्यमुपादेयमुपाददे । ज्ञानं दर्शनमात्मा मे शेषं संयोगलक्षणम् ॥ १०९ ॥
संस्तरः परमार्थेन न तृणं न च भूः शुभा । मत्या कलुषया मुक्तो जीव एव हि संस्तरः॥११०॥

एवं सद्ध्यानमारुह्य त्यक्त्वा ग्रंथं द्वयात्मकम् । द्रव्यतो गजपृष्ठस्थो मधुः केशानपानयत् ॥१११॥
गाढक्षतशरीरोऽसौ धृतिं परमदुर्धराम् । अध्यासीनः कृतोत्सर्गः कायादेः सुविशुद्धधीः ॥११२॥
शत्रुघ्नोऽपि तदाऽऽगत्य नमस्कारपरायणः । क्षन्तव्यं च त्वया साधो मम दुष्कृतकारिणः ११३
अमराप्सरसः सख्यं निरीक्षितुमुपागताः । पुष्पाणि मुमुचुस्तस्मै विस्मिता भावतत्पराः ॥११४॥

ततः समाधिं समुपेत्य कालं कृत्वा मधुस्तत्क्षणमात्रकेण ॥
महासुखांभोधिनिमग्नचेताः सनत्कुमारे विबुधोत्तमोऽभूत् ॥ ११५ ॥
शत्रुघ्नवीरोऽप्यभवत्कृतार्थो विवेश मोदी मथुरां सुतेजाः ॥
स्थितश्च तस्यां गजसंज्ञितायां पुरीव मेघेश्वरसुंदरोऽसौ ॥ ११६ ॥
एवं जनस्य स्वविधानभाजो भवे भवत्यात्मनि दिव्यरूपम् ॥
तस्मात्सदा कर्म शुभं कुरुध्वं रवेः परां येन रुचिं प्रयातः ॥ ११७ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे मधुसुन्दरवधाभिधानं नाम नवाशीतितमं पर्व ।

# अथ नवतितमं पर्व ।

ततोऽरिघ्नानुभावेन विफलं तेजसोज्झितम् । अमोघमपि तद्दिव्यं शूलरत्नं विधिच्युतम् ॥ १ ॥
वहन्खेदं च शोकं च त्रपां च जवमुक्तवत् । स्वामिनोऽसुरनाथस्य चमरस्यांतिकं ययौ ॥ २ ॥
मरणे कथिते तेन मधोश्चमरपुंगवः । आहतः खेदशोकाभ्यां तत्सौहार्दगतस्मृतिः ॥ ३ ॥
रसातलात्समुत्थाय त्वरावानतिभासुरः । प्रवृत्तो मथुरां गंतुमसौ संरंभसंगतः ॥ ४ ॥
भ्राम्यन्नथ सुपर्णेन्द्रो वेणुधारी तमैक्षत । अपृच्छत्क दैत्येंद्र गमनं प्रस्तुतं त्वया ॥ ५ ॥
ऊचेऽसौ परमं मित्रं येन मे निहतं मधुः । सजनस्यास्य वैषम्यं विधातुमहमुद्यतः ॥ ६ ॥
सुपर्णेशो जगौ किं न विशल्यासंभवं त्वया । माहात्म्यं निहितं कर्णे येनैवमभिलक्ष्यसि ॥ ७ ॥
जगादासावतिक्रांताः कालास्ते परमाद्भुताः । अचिंत्यं येन माहात्म्यं विशल्यायास्तथाविधम् ॥
कौमारव्रतयुक्तासावासीदद्भुतकारिणी । योगेन जनितेदानीं निर्विषेव भुजंगिका ॥ ९ ॥
नियताचारयुक्तानां प्रभवंति मनीषिणाम् । भावा निरतिचाराणां श्लाघ्याः पूर्वकपुण्यजा ॥१०॥
जितं विशल्यया तावद्व्रतमाश्रितया परम् । यावन्नारायणस्यास्यं न दृष्टं मदनावहम् ॥ ११ ॥

सुरासुरपिशाचाद्या बिभ्यति प्रतिचारिणाम् । तावद्यावन्न ते तीक्ष्णं निश्चयासिं जहंत्यहो ॥१२॥
मद्यामिषनिवृत्तस्य तावद्वस्तशतांतरम् । लंघयंति न दुःसत्त्वा यावत्सालोऽस्य नैयमः ॥ १३ ॥
कालाग्निर्नाम रुद्राणां दारुणो न श्रुतस्त्वया । शक्तो दयितया साकं निर्विघ्नो निधने गतः १४
व्रज वा किं तवैतेन कुरु कृत्यं मनीषितम् । ज्ञास्यामि स्वयमेवाहं कर्त्तव्यं मित्रविद्विषः ॥ १५ ॥
इत्युक्त्वा खं व्यतिक्रम्य मथुरायां सुदुर्मनाः । ऐक्षतोत्सवमत्यंतं महान्तं सर्वलोकगम् ॥ १६ ॥
अचिंतयच्च लोकोऽयमकृतज्ञो महाखलः । स्थाने राष्ट्रे च यद्दैन्यस्थाने तोषमितः परम् ॥ १७ ॥
बाहुच्छायां समाश्रित्य सुचिरं सुरसौख्यवान् । स्थितो यः स कथं लोको मधोर्मृत्योर्न दुःखितः ॥
प्रवीरः कातरैः शूरसहस्रेण च पण्डितः । सेव्यः किंचिद्व्रजेन्मूर्खमकृतज्ञं परित्यजेत् ॥ १९ ॥
आस्तां तावदसौ राजा स्निग्धो मे येन सूदितः । संस्थानं राष्ट्रमेवैतत्क्षयं तावन्नयाम्यहम् २०
इति ध्यात्वा महारौद्रः क्रोधसंभारचोदितः । उपसर्गं समारेभे कर्तुं लोकस्य दुःसहम् ॥ २१ ॥
विकृत्य सुमहारोगांल्लोकं दग्धुं समुद्यतः । क्षयदाव इवोदारं कक्ष्यं कारुण्यवर्जितः ॥ २२ ॥
यत्रैव यः स्थितः स्थाने निविष्टः शयितोऽपि वा । अचलस्तत्र तत्रैव दीर्घनिद्रामसावितः २३
उपसर्गं समालोक्य कुलदैवतचोदितः । अयोध्यानगरीं यातः शत्रुघ्नः साधनान्वितः ॥ २४ ॥

तमुपात्तजयं शूरं प्रत्यायातं महाहवात् । समभ्यनंदन् हृष्टा बलचक्रधरादयः ॥ २५ ॥
पूर्णाशा सुप्रजाश्चासौ विधाय जिनपूजनम् । धार्मिकेभ्यो महादानं दुःखितेभ्यस्तथाऽददात् २६

यद्यपि महाभिरामा साकेता कांचनोज्ज्वलैः प्रासादैः ।
धेनुरिव सर्वकामप्रदानचतुरा त्रिविष्टपोपभोगा ॥ २७ ॥
शत्रुघ्नकुमारोऽसौ मथुरापुर्यां सुरक्तहृदयोऽत्यन्तम् ।
न तथापि धृतिं भेजे वैदेह्या विरहितो तथासीद्रामः ॥ २८ ॥
स्वप्न इव भवति चारुसंयोगः प्राणिनां यदा तनुकालः ।
जनयति परमं तापं निदाघरविरश्मिजनितादधिकम् ॥ २९ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते श्रीपद्मपुराणे मथुरोपसर्गाभिधानं नाम नवतितमं पर्व ॥ ९० ॥

---

# अथैकनवतितमं पर्व ।

अथ राजगृहस्वामी जगादाद्भुतकौतुकः । भगवन्केन कार्येण तामेवासावयाचत ॥ १ ॥
बहवो राजधान्योऽन्याः सन्ति स्वर्लोकसंनिभाः । तत्र शत्रुघ्नवीरस्य का प्रीतिर्मथुरां प्रति ॥२॥

दिव्यज्ञानसमुद्रेण गणोडुशशिना ततः । गौतमेनोच्यत प्रीतिं यथा तत्कुरु चेतसि ॥ ३ ॥
बहवो हि भवास्तस्य तस्यामेवाभवन्ततः । तामेव प्रति सोद्रेकं स्नेहमेष न्यषेवत ॥ ४ ॥
संसारार्णवसंसेवी जीवः कर्मस्वभावतः । जंबूमद्द्वीपभरते मथुरां समुपागतः ॥ ५ ॥
क्रूरो यमुनदेवाख्यो धर्मैकान्तपराङ्मुखः । स प्रेत्य क्रोडवालेयवायसत्वान्यसेवत ॥ ६ ॥
अजत्वं च परिप्राप्तो मृतो भवनदाहतः । महिषो जलवाहोऽभूदायते गबले वहन् ॥ ७ ॥
षड्वारान्महिषो भूत्वा दुःखप्रापणसंगतः । पंचकृत्वो मनुष्यत्वं दुःकुलेष्वधनोऽभजत् ॥ ८ ॥
मध्यकर्मसमाचाराः प्राप्यार्यत्वं मनुष्यताम् । प्राणिनः प्रतिपद्यंते किंचित्कर्मपरिक्षयम् ॥ ९ ॥
ततः कुलंधराभिख्यः साधुसेवापरायणः । विप्रोऽसावभवद्रूपी शीलसेवाविवर्जितः ॥ १० ॥
अशंकित इव स्वामी पुरस्तस्या जयाशया । यातो देशांतरं तस्य महिषी ललिताभिधा ॥११॥
प्रासादस्था कदाचित्सा वातायनगतेक्षणा । निरैक्षत तकं विप्रं दुचेष्टं कृतकारणम् ॥ १२ ॥
सा तं क्रीडंतमालोक्य मनोभवशराहता । आनाययद्रहोत्यंतमाप्तया चित्तहारिणम् ॥ १३ ॥
तस्या एकासने चासावुपविष्टो नृपश्च सः । अज्ञातागमनोऽपश्यत्सहसा तद्विचेष्टितम् ॥ १४ ॥
मायाप्रवीणया तावद्देव्या क्रंदितमुन्नतम् । वन्दिकोऽयमिति त्रस्तो गृहीतश्च भटैरसौ ॥ १५ ॥

अष्टांगनिग्रहं कर्तुं नगरीतो बहिः कृतः । सेवितेनासकृद्दृष्टः कल्याणाख्येन साधुना ॥ १६ ॥
यदि प्रव्रजसीत्युक्त्वा तेनासौ प्रतिपन्नवान् । राज्ञः क्रूरमनुष्येभ्यो मोचितः श्रमणोऽभवत् ॥१७॥
सोऽतिकष्टं तपः कृत्वा महाभावनयान्वितः । अभूदृतुविमानेशः किन्तु धर्मस्य दुष्करम् ॥ १८ ॥
मथुरायां महाचित्तश्चन्द्रभद्र इति प्रभुः । तस्य भार्या धरा नाम त्रयस्तस्याश्च सोदराः ॥ १९ ॥
सूर्याब्धियमुनाशब्दैर्देवान्तैर्नामभिः स्मृता । श्रीसात्त्विन्द्रप्रभोग्राख्या मुखान्ताश्चापराः सुताः॥२०॥
द्वितीया चंद्रभद्रस्याद्वितीया कनकप्रभा । आगत्यर्तुविमानात्स तस्यां जातोऽचलाभिधः ॥२१॥
कलागुणसमृद्धोऽसौ सर्वलोकमनोहरः । बभौ देवकुमारामः सत्क्रीडाकरणोद्यतः ॥ २२ ॥
अथान्यः कश्चिदंकाख्यः कृत्वा धर्मानुमोदनम् । श्रावस्त्यामंगिकागर्भे कंपेनापाभिधोऽभवत् ॥२३॥
कवाटजीविना तेन कंपेनाविनयान्वितः । अपो निर्घाटितो गेहाद्दुद्राव भयदुःखितः ॥ २४ ॥
अथाचलकुमारोऽसौ नितांतं दयितः पितुः । धराया भ्रातृभिस्तैश्च मुखांतैरष्टभिः सुतैः ॥ २५ ॥
दृष्यमाणो रहो हंतुं मात्रा ज्ञात्वा पलायितः । महता कंटकेनांघ्रौ ताडितस्तिलके वने ॥ २६ ॥
गृहीतदारुभारेण तेनापेनाथ वीक्षितम् । अतिकष्टं क्वणत्खेदादचलो निश्चलः स्थितः ॥ २७ ॥
दारुभारं परित्यज्य तेन तस्यासिकन्यया । आकृष्टः कंटको दत्त्वा कंटकं चेति भाषितः ॥ २८ ॥

यदि नामाचलं किंचिच्छृणुयाल्लोकविश्रुतम् । त्वया तस्य ततोऽभ्यासं गंतव्यं संशयोज्झितम् २९
अपो यथोचितं यातो राजपुत्रोऽपि दुःखवान् । कौशांबीबाह्यमुद्देशं प्राप्तः सत्त्वसमुन्नतः ॥ ३० ॥
तत्रेंद्रदत्तनामानं कोशांबात्स समुद्भवम् । ययौ कलकलाशब्दात्सेवमानं खरुलिकाम् ॥ ३१ ॥
विजित्य विशिखाचार्यं लब्धपूजोऽथ भूभृता । प्रवेश्य नगरीमिन्द्रदत्ताख्यां लंभितः सुताम् ॥३२॥
क्रमेण चानुभावेन चारुणा पूर्वकर्मणा । उपाध्याय इति ख्यातो वीरोऽसौ पार्थिवोऽभवत् ॥ ३३ ॥
अंगाद्यान् विषयाञ्जित्वा प्रतापी मथुरां श्रितः । बाह्योद्देशे कृतावासः स्थितः कटकसंगतः ॥३४॥
चंद्रभद्रनृपः पुत्रमारोऽयमिति भाषितैः । सामंताः सकलास्तस्य भिन्नास्तेनार्थसंगतैः ॥ ३५ ॥
एकाकी चंद्रभद्रश्च विषादं परमं भजन् । श्यालान्संप्रेषयद्देवशब्दांतान्संधिवांछया ॥ ३६ ॥
दृष्ट्वा ते तं परिज्ञाय विलक्षास्त्रासमागताः । अदृष्टसेवकाः साकं धरायास्तनयैः कृताः ॥ ३७ ॥
अचलस्य समं मात्रा संजातः परमोत्सवः । राज्यं च प्रणताशेषराजकं गुणपूजितम् ॥ ३८ ॥
अन्यदा नटरंगस्य मध्ये तमपमागतम् । हन्यमानं प्रतीहारैर्दृष्ट्वाऽभिज्ञातवान्नृपः ॥ ३९ ॥
तस्मै संयुक्तमापाद्य स्रावस्तीं जन्मभूमिकाम् । कृतापरंगसंज्ञाय ददावचलभूपतिः ॥ ४० ॥
तावुद्यानं गतौ क्रीडां विधातुं पुरुसंपदौ । यशः समुद्रमाचार्यं दृष्ट्वा नैर्ग्रंथ्यमाश्रितौ ॥ ४१ ॥

संयमं परमं कृत्वा सम्यग्दर्शनभावितौ । मृतौ समाधिना जातौ देवेशौ कमलोत्तरे ॥ ४२ ॥
ततश्च्युतः समानोऽसावचलः पुण्यशेषतः । सुप्रजालोचनानंदः शत्रुघ्नोऽयमभून्नृपः ॥ ४३ ॥
तेनानेकभवप्राप्तिसंबंधेनास्य भूपतेः । बभूव परमप्रीतिर्मथुरां प्रति पार्थिव ॥ ४४ ॥
गृहस्य शाखिनो वाऽपि यस्य छायां समाश्रयेत् । स्थीयते दिनमप्येकं प्रीतिस्तत्रापि जायते ४५
किं पुनर्यत्र भूयोऽपि जन्मभिः संगतिः कृता । संसारभावयुक्तानां जीवानामीदृशी गतिः ॥४६॥
परिच्युत्यापरंगोऽपि पुण्यशेषादभूदसौ । कृतांतवक्कविख्यातः सेनायाः पतिरूर्जितः ॥ ४७ ॥
इति धर्माज्ञनादेतौ प्राप्तौ परमसंपदः । धर्मेण रहितैर्लभ्यं न हि किंचित्सुखावहम् ॥ ४८ ॥
अनेकमपि संचिंत्य जंतुर्दुःखमलक्षये । धर्मतीर्थे श्रुते शुद्धिं जलतीर्थमनर्थकम् ॥ ४९ ॥
एवं पारंपर्यादागतामिदमद्भुतं नितान्तमुदारम् । कथितं शत्रुघ्नायनमवबुध्य बुधा भवंतु धर्मसुरक्ताः॥
श्रुत्वा परमं धर्मं न भवति येषां सदीहिते प्रीतिः । शुभनेत्राणां तेषां रविरुदितोऽनर्थकी भवति ५१

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे शत्रुघ्नभवानुकीर्तनं नामैकनवतितमं पर्व ॥ ९१ ॥

# अथ द्विनवतितमं पर्व ।

विहरन्तोऽन्यदा प्राप्ता निर्ग्रन्था मथुरां पुरीम् । गगनायनिनः सप्त सप्तसप्तिसमत्विषः ॥ १ ॥
सुरमन्युर्द्वितीयश्च श्रीमन्युरिति कीर्तितः । अन्यः श्रीनिचयो नाम तुरीयः सर्वसुंदरः ॥ २ ॥
पंचमो जयवान् ज्ञेयः षष्ठो विनयलालसः । चरमो जयमित्राख्यः सर्वे चारित्रसुंदराः ॥ ३ ॥
राज्ञः श्रीनंदनस्यैते धरणीसुंदरीभवाः । तनया जगति ख्याता गुणैः शुद्धैः प्रभापुरे ॥ ४ ॥
प्रीतिंकरमुनीन्द्रस्य देवागममुदीक्ष्यते । प्रतिबुद्धाः समं पित्रा धर्मं कर्तुं समुद्यताः ॥ ५ ॥
मासजातं नृपोऽन्यस्य राज्ये डमरमंगलम् । प्रवव्राज समं पुत्रैर्वीरः प्रीतिंकरांतिके ॥ ६ ॥
केवलज्ञानमुत्पाद्य काले श्रीनंदनोऽविशत् । सप्तर्षयस्त्वमी तस्य तनया मुनिसत्तमाः ॥ ७ ॥
काले विकालवत्काले कंदवृंदावृतान्तरे । न्यग्रोधतरुमूले ते योगं सन्मुनयः श्रिताः ॥ ८ ॥
तेषां तपःप्रभावेन चमरासुरनिर्मिता । मारी श्वशुरदृष्टेव नारी विटगताऽनशत् ॥ ९ ॥
घनजीमूतसंसक्ता मथुरा विषयोर्वरा । अकृष्टपच्यसस्यौघैः संछन्नाः सुमहाशयैः ॥ १० ॥
रोगेति परिनिर्मुक्ता मथुरानगरी शुभा । पितृदर्शनतुष्टेव रराज नविका वधूः ॥ ११ ॥

युक्तं बहुप्रकारेण रसत्यागादिकेन ते । पृष्ठादिनोपवासेन चक्रुरत्युत्कटं तपः ॥ १२ ॥
नभो निमेषमात्रेण विप्रकृष्टं विलंघ्य ते । चक्रुः पुरेषु विजय-पोदनादिषु पारणाम् ॥ १३ ॥
लब्धां परगृहे भिक्षां पाणिपात्रतलस्थिताम् । शरीरधृतिमात्राय जक्षुस्ते क्षपणोत्तमाः ॥ १४ ॥
नभोमध्यगते भानावन्यदा ते महाश्रमाः । साकेतामविशन् वीरा युगमात्रावलोकिनः ॥ १५ ॥
शुद्धभिक्षैषणाकृताः प्रलंबितमहाभुजाः । अर्हद्दत्तगृहं प्राप्ता भ्राम्यंतस्ते यथाविधि ॥ १६ ॥
अर्हद्दत्तश्च संप्राप्तश्चिंतामेतामसंभ्रमः । वर्षाकालः क चेदृक्षः क चेदं मुनिचेष्टितम् ॥ १७ ॥
प्राग्भारकंदरासिंधुतटे मूले च शालिनः । शून्यालये जिनागारे ये चान्यत्र कचित्स्थिताः ॥१८॥
नगर्यां श्रमणा अस्यां नेमे समथखंडनम् । कृत्वा हिंडनशीलत्वं प्रपद्यंते सुचेष्टिताः ॥ १९ ॥
प्रतिकूलितसूत्रार्था एते तु ज्ञानवर्जिताः । निराचार्या निराचाराः कथं कालेऽत्र हिंडकाः ॥२०॥
अकालेऽपि किल प्राप्ताः स्नुषयाऽस्य सुभक्तया । तर्पिताः प्राप्तकालेन ते गृहीतार्थया तया ॥२१॥
आर्हतं भवनं जग्मुः शुद्धसंयतसंकुलम् । यत्र त्रिभुवनानंदः स्थापितो मुनिसुव्रतः ॥ २२ ॥
चतुरंगुलमानेन ते त्यक्तधरणीतलाः । आयांतो द्युतिना दृष्टा लब्धिप्राप्ताः प्रसाधवः ॥ २३ ॥
पद्भ्यामेव जिनागारं प्रविष्टाः श्रद्धयोद्यया । अभ्युत्थाननमस्यादिविधिना द्युतिनार्चिताः २४

अस्मदीयोऽयमाचार्यो यत्किंचिद्वंदनोद्यतः । इति ज्ञात्वा द्युतेः शिष्या दध्युः सप्तर्षिनंदनम् ॥२५॥
जिनेंद्रवंदनां कृत्वा सम्यक् स्तुतिपरायणाः । यातास्ते वियदुत्पत्य स्वमाश्रमपदं पुनः ॥ २६ ॥
चारणश्रमणान् ज्ञात्वा मुनींस्ते मुनयः पुनः । स्वनिंदनादिना मुक्ताः साधुचित्तमुपागताः ॥२७॥
अर्हद्दत्ताय याताय जिनालयमिहांतरे । द्युतिना गदितं दृष्टाः साधवः स्युस्त्वयोत्तमाः ॥ २८ ॥
वंदिताः पूजिताः वा स्युर्महासत्त्वा महौजसः । मथुराकृतसंवासा मयाऽमा कृतसंकथाः ॥ २९ ॥
महातपोधना दृष्टास्तेऽस्माभिः शुभचेष्टिताः । मुनयः परमोदारा वंद्या गगनगामिनः ॥ ३० ॥
ततः प्रभावमाकर्ण्य साधूनां श्रावकाधिपः । तदा विषण्णहृदयः पश्चात्तापेन तप्यते ॥ ३१ ॥
धिक् सोऽहमगृहीतार्थः सम्यग्दर्शनवर्जितः । अयुक्तोऽपसदाचारः न तुल्यो मेस्त्यधार्मिकः ॥३२॥
मिथ्यादृष्टिः कुतोस्त्यन्यो मत्तः प्रत्यपरोऽधुना । अभ्युत्थायार्चित्वा नुत्वा साधवो यन्न तर्पिताः ॥
साधुरूपं समालोक्य न मुंचत्यासनं तु यः । दृष्ट्वापमन्यते यश्च स मिथ्यादृष्टिरुच्यते ॥ ३४ ॥
पापोऽहं पापकर्मा च पापात्मा पापभाजनम् । यो वा निंद्यतमः कश्चिज्जिनवाक्यबहिःकृतः ३५
शरीरे मर्मसंघाते तावन्मे दह्यते मनः । यावदंजलिमुद्धृत्य साधवस्ते न वंदिताः ॥ ३६ ॥
अहंकारसमुत्थस्य पापस्यास्य न विद्यते । प्रायश्चित्तं परं तेषां मुनीनां वंदनादृते ॥ ३७ ॥

अथ ज्ञात्वा समासन्नां कार्तिकीं परमोत्सुकः । अर्हच्छ्रेष्ठी महादृष्टिर्नृपतुल्यपरिच्छदः ॥ ३८ ॥
निर्ज्ञातमुनिमाहात्म्यः स्वनिंदाकरणोद्यतः । सप्तर्षिपूजनं कर्तुं प्रस्थितो बंधुभिः समम् ॥ ३९ ॥
रथकुंजरपादाततुरंगौघसमन्वितः । पूजां योगेश्वरीं कर्तुमसौ याति स्म सत्वरम् ॥ ४० ॥
समृद्ध्या परया युक्तः शुभध्यानपरायणः । कार्त्तिकामलसप्तम्यां प्राप्तः सप्तमुनिं पदम् ॥ ४१ ॥
तत्राप्युत्तमसम्यक्त्वो विधाय मुनिवंदनाम् । पूजोपकरणं कर्तुमुद्यतः सर्वयत्नतः ॥ ४२ ॥
प्रपानाटकसंगीतशालादिपरिराजितम् । जातं तदाश्रमस्थानं स्वर्गदेशमनोहरम् ॥ ४३ ॥
तं वृत्तांतं समाकर्ण्य शत्रुघ्नः स्वतुरीयकः । महातुरंगमारूढः सप्तमुन्यंतिकं ययौ ॥ ४४ ॥
मुनीनां परया भक्त्या पुत्रस्नेहाच्च पुष्कलात् । माताऽप्यस्य गता पश्चात्समुद्ग्राहितकोष्ठिका ॥४५॥
ततः प्रणम्य भक्तात्मा सम्मदी रिपुमर्दनः । मुनीन्समाप्तनियमान्पारणार्थमयाचत ॥ ४६ ॥
तत्रोक्तं मुनिमुख्येन नरपुंगवकल्पितम् । उपेत्य भोक्तुमाहारं संयतानां न वर्त्तते ॥ ४७ ॥
अकृताकारितां भिक्षां मनसा नानुमोदिताम् । गृह्णतां विधिना युक्तां तपः पुष्यति योगिनाम् ॥
ततो जगाद शत्रुघ्नः प्रसादं मुनिपुंगवाः । ममेदं कर्तुमर्हन्ति विज्ञापकसुवत्सलाः ॥ ४९ ॥
कियंतमपि कालं मे नगर्यामिह तिष्ठत । शिवं सुभिक्षमेतस्यां प्रजानां येन जायते ॥ ५० ॥

आगतेषु भवत्स्वेषा समृद्धा सर्वतोऽभवत् । नष्टा प्रातेषु नलिनी यथा विशरदुत्सवाः ॥ ५१ ॥
इत्युक्त्वाऽचिंतयच्छ्राद्धः कदा नु खलु वांछितम् । अन्यं दास्यामि साधुभ्यः विधिना सुसमाहितः ॥
अथ श्रेणिक शत्रुघ्नं निरीक्ष्याऽऽनतमस्तकम् । कालानुभावमाचख्यौ यथावन्मुनिसत्तमः ॥५३॥
धर्मनंदनकालेषु व्ययं यातेष्वनुक्रमात् । भविष्यति प्रचंडोऽत्र निर्धर्मसमयो महान् ॥ ५४ ॥
दुःपाषंडैरिदं जैनं शासनं परमोन्नतम् । तिरोधयिष्यते क्षुद्रैरजोभिर्भानुबिंबवत् ॥ ५५ ॥
श्मशानसदृशा ग्रामाः प्रेतलोकोपमाः पुरः । क्लिष्टा जनपदाः कुत्स्या भविष्यन्ति दुरीहिताः ५६
कुकर्मनिरतैः क्रूरैश्चोरैरिव निरन्तरम् । दुःपाषंडैरयं लोको भविष्यति समाकुलः ॥ ५७ ॥
महीतलं खलं द्रव्यपरिमुक्ताः कुटुंबिनः । हिंसाक्लेशसहस्राणि भविष्यंतीह संततम् ॥ ५८ ॥
पितरौ प्रति निःस्नेहाः पुत्रास्तौ च सुतान्प्रति । चौरा इव च राजानो भविष्यंति कलौ सति ५९
सुखिनोऽपि नराः केचिन्मोहयंतः परस्परम् । कथाभिर्दुर्गतीशामी रम्यन्ते पापमानसाः ॥६०॥
नक्ष्यंत्यतिशयाः सर्वे त्रिदशागमनादयः । कषायबहुले काले शत्रुघ्न ! समुपागते ॥ ६१ ॥
जातरूपरान् दृष्ट्वा साधून्व्रतगुणान्वितान् । संजुगुप्सां करिष्यंति महामोहान्विता जनाः ॥६२॥
अप्रशस्ते प्रशस्तत्वं मन्यमानाः कुचेतसाः । भयपक्षे पतिष्यंति पतंगा इव मानवाः ॥ ६३ ॥

प्रशांतहृदयान् साधून् निर्भर्त्स्य विहस्योद्यताः । मूढा मूढेषु दास्यंति केचिदन्नं प्रयत्नतः ॥६४॥
इत्थमेतं निराकृत्य प्राहूयान्यसमागतम् । यतिनो मोहिनो देयं दास्यंत्यहितभावनाः ॥ ६५ ॥
बीजं शिलातले न्यस्तं सिच्यमानं सदापि हि । अनर्थकं यथा दानं तथा शीलेषु गेहिनाम् ॥६६॥
अवज्ञाय मुनीन्गेही गेहिने यः प्रयच्छति । त्यक्त्वा स चंदनं मूढो गृह्णात्येव विभीतकम् ॥६७॥
इति ज्ञात्वा समायातं कालं दुःखमताधमम् । विधत्स्वात्महितं किंचित्स्थिरं कार्यं शुभोदयम् ॥६८॥
नामग्रहणकोऽस्माकं भिक्षावृत्तिमत्रासताम् । परिकल्पय तत्सारं तव द्रविणसंपदः ॥ ६९ ॥
आगमिष्यति काले सा श्रांतानां त्यक्तवेश्मनाम् । भविष्यत्याश्रयो राजन् स्वगृहाशयसम्मिता ७०
तस्माद्दानमिदं दत्त्वा वत्स स्वमधुना भज । सागरशीलनियमं कुरुजन्मार्थसंगतम् ॥ ७१ ॥
जायतां मथुरालोकः सम्यग्धर्मपरायणः । दयावात्सल्यसंपन्नो जिनशासनभावितः ॥ ७२ ॥
स्थाप्यंतां जिनबिंबानि पूजितानि गृहे गृहे । अभिषेकाः प्रवर्त्यंतां विधिना पाल्यतां प्रजा ॥७३॥
सप्तर्षिप्रतिमा दिक्षु चतसृष्वपि यत्नतः । नगर्यां कुरु शत्रुघ्न तेन शांतिर्भविष्यति ॥ ७४ ॥
अद्यप्रभृति यद्गेहे बिंबं जैनं न विद्यते । मारी भक्षति तद्व्याघ्री यथाऽनाथं कुरंगकम् ॥ ७५ ॥
यस्यांगुष्ठप्रमाणापि जैनेंद्री प्रतियातना । गृहे तस्य न मारी स्यात्तार्क्ष्यभीता यथोरगी ॥ ७६ ॥

यथाऽऽज्ञापयसीत्युक्त्वा शत्रुघ्नेन प्रमोदिना । समुत्पत्य नभो याताः साधवः साधुवांछिताः ७७
अथ निर्वाणधामानि परिसृत्य प्रदाक्षिणाम् । मुनयो जानकीगेहमवतेरुः शुभायनाः ॥ ७८ ॥
वहंती सम्मदं तुंगं श्रद्धादिगुणशालिनी । परमान्नेन तान् सीता विधियुक्तमपारयत् ॥ ७९ ॥
जानक्या भक्तितो दत्तमन्नं सर्वगुणान्वितम् । भुक्त्वा पाणितले दत्त्वाऽऽशीर्वादं मुनयो ययुः ८०
नगर्या बहिरन्तश्च शत्रुघ्नः प्रतिमास्ततः । अतिष्ठिपज्जिनेंद्राणां प्रतिमारहितात्मनाम् ॥ ८१ ॥
सप्तर्षिप्रतिमाश्चापि काष्ठासु चतसृस्वपि । अस्थापयन्मनोज्ञांगा सर्वेतिकृतवारणाः ॥ ८२ ॥
पृष्ठे त्रिविष्टपस्यैव पुरमन्यां न्यवेशयत् । मनोज्ञां सर्वतः स्फीतां सर्वोपद्रववर्जिताम् ॥ ८३ ॥
योजनत्रयविस्तारां सर्वतस्त्रिगुणां च यत् । अधिकं मंडलत्वेन स्थितामुत्तमतेजसम् ॥ ८४ ॥
आपातालतलाद्भिन्नमूलाः पृथ्व्यो मनोहराः । परितो भांति सुमहाशालवासगृहोपमाः ॥ ८५ ॥
उद्यानान्यधिकां शोभां दधुः पुष्पफलाकुलाम् । वाप्यः पद्मोत्पलच्छन्ना जाताः शकुनिनादिता ॥
कैलाससानुसंकाशाः प्रासादाश्चारुलक्षणाः । विमानप्रतिमा रेजुः विलोचनमलिम्लुचाः ॥ ८७ ॥
सुवर्णधान्यरत्नाद्याः सम्मेदशिखरोपमाः । नरेन्द्रख्यातयः श्लाघ्या जाताः सर्वकुटुंबिनः ॥८८॥
राजानस्त्रिदशैस्तुल्या असमानविभूतयः । धर्मार्थकामसंशक्ताः साधुचेष्टापरायणाः ॥ ८९ ॥

प्रयच्छन्निच्छया तेषामाज्ञां विज्ञानसंगतः । रराज पुरि शत्रुघ्नः सुराणां वरुणो यथा ॥ ९० ॥
एवं मथुरापुर्यां निवेशमत्यद्भुतं च सप्तर्षीणाम् । शृण्वन् कथयन्वापि प्राप्नोति जनश्चतुष्टयं भद्रमरम् ॥
साधुसमागमसक्ताः पुरुषाः सर्वमनीषितं सेवन्ते।तस्मात्साधुसमागममाश्रित्य सदा रवेः समाप्तसुदीप्ता

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे मथुरापुरीनिवेशकृषिदानगुणो-
पसर्गहननाभिधानं नाम द्विनवतितमं पर्व ॥ ९२ ॥

---

# अथ त्रिनवतितमं पर्व ।

अथ रत्नपुरं नाम विजयार्द्धेऽस्ति दक्षिणम् । पुरं रत्नरथस्तत्र राजा विद्याधराधिपः ॥ १ ॥
मनोरमेति तस्यास्ति दुहिता रूपशालिनी । पूर्णचंद्राननाऽभिख्यमहिषीकुक्षिसंभवा ॥ २ ॥
समीक्ष्य यौवनं तस्या नवं राजा सुचेतनः । वरान्वेषणशेमुष्या बभूव परमाकुलः ॥ ३ ॥
मंत्रिभिः सह संगत्य स चक्रे संप्रधारणाम् । कस्मै योग्याय यच्छामः कुमारीमेतकामिति ॥४॥
एवं दिनेषु गच्छत्सु राज्ञि चिंतावशीकृते । कदाचिन्नारदः प्राप्तस्ततः स मानमाप च ॥ ५ ॥

तस्मै विदितनिःशेषलोकचेष्टितबुद्धये । राजा प्रस्तुतमाचख्यौ सुखासीनाय सादरः ॥ ६ ॥
अवद्धारो जगौ राजन् विज्ञातो भवता न किम् । भ्राता युगप्रधानस्य पुंसो लांगललक्ष्मणः ॥७॥
बिभ्राणः परमां लक्ष्मीं लक्ष्मणश्चारुलक्षणः । चक्रानुभावविनतसमस्तप्रतिमानवः ॥ ८ ॥
तस्येयं सदृशी कन्या हृदयानंददायिनी । ज्योत्स्ना कुमदखंडस्य यथा परमसुंदरी ॥ ९ ॥
एवं प्रभाषमाणेऽस्मिन्रत्नस्यंदनसूनवः । क्रुद्धा हरिमनोवातवेगाद्या मानशालिनः ॥ १० ॥
स्मृत्वा स्वजनघातोत्थं वैरं प्रत्यग्रमुन्नतम् । जगुः कालाग्निवद्दीप्ताः परिस्फुरितविग्रहाः ॥ ११ ॥
अद्यैव व्यतिपत्याऽऽशु समाहूय दुरीहितः । अस्माभिर्यो विहंतव्यस्तस्मै कन्या न दीयते ॥१२॥
इत्युक्ते राजपुत्रभ्रूविकारपरिचोदितैः । किंकरौघैरवद्धारः पादाकर्षणमापितः ॥ १३ ॥
नभस्तलं समुत्पत्य ततः सुरमुनिर्द्रुतम् । साकेतायां सुमित्राजमुपस्रप्तो महादरः ॥ १४ ॥
अस्य विस्तरतो वार्तां निवेद्य भुवनस्थिताम् । कन्यायाश्च विशेषेण व्यक्तकौतुकलक्षणः ॥ १५ ॥
कन्यामदर्शयंश्चित्रे चित्रां दृक्चित्तहारिणीम् । त्रैलोक्यसुंदरीशोभामेकीकृत्येव निर्मिताम् ॥१६॥
तां समालोक्य सौमित्रिः पुस्तनिष्कंपलोचनः । अनन्यजस्य वीरोऽपि परिप्राप्तोऽतिवश्यताम् १७
अचिंतयच्च यद्येतत्स्त्रीरत्नं न लभे ततः । इदं मे निष्फलं राज्यं शून्यं जीवितमेव वा ॥ १८ ॥

उवाच चादरं विभ्रन् भगवन् गुणकीर्त्तनम् । कुर्वन्मम कुमारैस्तैः कथं वा त्वं खलीकृतः ॥१९॥
प्रचंडत्वमिदं तेषां पापानां विक्षिपाम्यहम् । असमीक्षितकार्याणां क्षुद्राणां निहतात्मनाम् ॥२०॥
व्रज स्वास्थ्यं रजः शुद्धं तव मूर्द्धानमाश्रितम् । पादस्तु शिरसि न्यस्तो मदीयेऽसौ महामुने॥२१॥
इत्युक्त्वाऽऽह्वाय संरब्धो विराधितखगेश्वरम् । जगाद लक्ष्मणो रत्नपुरं गम्यं त्वरान्वितम् ॥२२॥
तस्मादेशय पंथानमित्युक्तः शरणोत्कटः । लेखैराह्वाय तत्सर्वान्तीत्राज्ञः खेचराधिपान् ॥ २३ ॥
महेन्द्रविंध्यकिष्किंधमलयादिपुराधिपाः । विमानाच्छादिताऽऽकाशाः साकेतामागतास्ततः ॥२४॥
वृतस्तैः सुमहासैन्यैर्लक्ष्मणो विजयोन्मुखः । लोकपालैर्यथा लेखो ययौ पद्मपुरःसरः ॥ २५ ॥
नानाशस्त्रदलग्रस्तदिवाकरमरीचयः । प्राप्ता रत्नपुरं भूपाः सितच्छत्रोपशोभिताः ॥ २६ ॥
ततः परवलं प्राप्तं ज्ञात्वा रत्नपुरो नृपः । साकं समस्तसामंतैः संख्यचंचुर्विनिर्ययौ ॥ २७ ॥
तेन निष्क्रांतमात्रेण महारभसधारिणां । विस्तीर्णं दक्षिणं सैन्यं क्षणं ग्रस्तमिवाभवत् ॥ २८ ॥
चक्रक्रकचवाणासिकुंतपाशगदादिभिः । बभूव गहनं तेषां युद्धमुद्धतयोद्भवम् ॥ २९ ॥
अप्सरःसंहतिर्योग्यनभोदेशव्यवस्थिता । मुमोचाद्भुतयुक्तेषु स्थानेषु कुसुमांजलीः ॥ ३० ॥
ततः परबलांभोधौ सौमित्रिर्वडवानलः । विजृंभितुं समायुक्तो योधयादःपरिक्षयः ॥ ३१ ॥

रथा वरं तुरंगाश्च नागाश्च मदतोयदाः । तृणवत्तस्य वेगेन दिशो दश समाश्रिताः ॥ ३२ ॥
युद्धक्रीडां कचिच्चक्रे शक्रशक्तिर्हलायुधः । किष्किन्धपार्थिवोऽन्यत्र परमः कपिलक्ष्मणः ॥ ३३ ॥
अपरत्र प्रभाजालपरवीरो महाजवः । लांगूलपाणिरुग्रात्मा विविधाद्भुतचेष्टितः ॥ ३४ ॥
एवमेतैर्महायोधैर्विजयार्द्धबलं महत् । शरत्प्रभातमेघाभं भंक्त्वा नीतं मरुत्समैः ॥ ३५ ॥
ततोऽधिपतिना साकं विजयाद्रिभुवो नृपाः । स्वस्थानाभिमुखा नेशुः प्रक्षीणप्रधनेप्सिताः ॥ ३६ ॥
दृष्ट्वा पलायमानांस्तान्वीरान् रत्नरथात्मजान् । परमामर्षसंपूर्णो नारदः कलहप्रियः ॥ ३७ ॥
कृत्वा कलकलं व्योम्नि कृततालमहास्वनः । जगाद विस्फुरद्गात्रस्मितास्यो विकचेक्षणः ॥ ३८ ॥
एते ते चपलाः क्रुद्धा दुश्चेष्टा मंदबुद्धयः । पलायंते न संसोढा यैर्लक्ष्मणगुणोन्नतिः ॥ ३९ ॥
दुर्विनीतान्प्रसह्यैतानरं गृह्णीतमानवाः । पराभवं तदा कृत्वा क्वाधुना मे पलाय्यते ॥ ४० ॥
इत्युक्ते पृष्ठतस्तेषामुपात्तजयकीर्तयः । प्रतापपरमाधीराः प्रस्थिता ग्रहणोद्यताः ॥ ४१ ॥
प्रत्यासन्नेषु तेष्वासीत्तदा रत्नपुरं पुरम् । आसन्नपार्श्वसंसक्तमहादावनोपमम् ॥ ४२ ॥
तावत्सुकन्यका रत्नभूता तत्र मनोरमा । सखीभिरावृता दृष्टमात्रलोकमनोरमा ॥ ४३ ॥
संभ्रान्ताश्वरथारूढा महाप्रेमवशीकृता । सौमित्रिमुपसंपन्ना पौलोमीव विडौजसम् ॥ ४४ ॥

तां प्रसादनसंयुक्तां प्रसाद्यां प्राप्य लक्ष्मणः । प्रशान्तकलुषो जातो भ्रकुटीरहिताननः ॥ ४५ ॥
ततो रत्नरथः सारं सुतैर्मानविवर्जितः । प्रीत्या निर्गत्य नगरादुपायनसमन्वितः ॥ ४६ ॥
देशकालविधानज्ञो दृष्टात्मपरपौरुषः । संगत्य सुष्ठु तुष्टाव मृगनागारिकेतनौ ॥ ४७ ॥
अन्तरेऽत्र समागत्य सुमहाजनमध्यगम् । नारदो ह्रेपयद्रत्नरथं सस्मितभाषितैः ॥ ४८ ॥
का वार्त्ता तेऽधुना रत्नरथ पांशुरथोऽथ वा । केचित्कुशलमुत्तुंगभटगर्जितकारिणः ॥ ४९ ॥
नूनं रत्नरथो न त्वं सहि गर्वमहाचलः । नारायणांघ्रिसेवास्थो भवन् कोऽप्यपरो नृपः ॥ ५० ॥
कृत्वा कहकहाशब्दं कराहतकरः पुनः । जगौ भो स्थीयते कच्चित्सुखं रत्नरथांगजाः ॥ ५१ ॥
सोऽयं नारायणो यस्य भवद्भिस्तादृशं तदा । गदितं हृदयाग्राहि स्वगृहोद्धतचेष्टितैः ॥ ५२ ॥
एवं सत्यपि तैरुक्तं त्वयि नारद कोपिते । महापुरुषसंपर्कः प्राप्तोऽस्माभिः सुदुर्लभः ॥ ५३ ॥
इति नर्मसमेताभिः कथाभिः क्षणमात्रकम् । अवस्थाय पुरं सर्वे विविशुः परमर्द्धयः ॥ ५४ ॥

श्रीदामनामा रतितुल्यरूपा रामाय दत्ता सुमनोऽभिरामा ।
रामामिमां प्राप्य परं स रेमे मेरुप्रभावः कृतपाणियोगः ॥ ५५ ॥
दत्ता तथा रत्नरथेन जाता स्वयं दशास्यक्षणकरणाय ।

मनोरमार्थप्रतिपन्ननामा तयोश्च वृत्ता परिणीतिरुद्या ॥ ५६ ॥
एवं प्रचंडा अपि यान्ति नाम रत्नान्यनर्घाणि च संश्रयन्ते ।
पुण्यानुभावेन यतो जनानां ततः कुरुध्वं रविनिर्मलं तत् ॥ ५७ ॥
इति श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे मनोरमालंभाभिधानं नाम त्रिनवतितमं पर्व ॥ ९३ ॥

# अथ चतुर्णवतितमं पर्व ।

अन्योऽपि दक्षिणश्रेण्यां विजयार्धस्य खेचराः । शस्त्रांधकारिते संख्ये लक्ष्मणेन वशीकृताः ॥१॥
अत्यन्तदुःसहाः संतो महापन्नगसंनिभाः । शौर्यक्ष्वेडविनिर्मुक्ता जाता रामानुसेविनः ॥ २ ॥
नामानि राजधानीनां तासां ख्यातानि कानिचित् । कीर्त्तयिष्यामि ते राजन् स्वःपुरीसमतेजसाम् ३
पुरं रविनिभं नाम तथा वन्हिप्रभं शुभम् । कांचनं मेघसंज्ञं च तथा च शिवमंदिरम् ॥ ४ ॥
गांधर्वगीतममृतं पुरं लक्ष्मीधरं तथा । किन्नरोद्गीतसंज्ञं च जीमूतशिखरं परम् ॥ ५ ॥
मर्त्यानुगीतं चक्राह्वं विश्रुतं रथनूपुरम् । श्रीमद्बहुरवाभिख्यं चारुश्रीमलयश्रुतिम् ॥ ६ ॥

श्रीगुहं भास्कराभं च तथारिंजयसंज्ञकम् । ज्योतिःपुरं शशिच्छायं गांधारमलयं घनम् ॥ ७ ॥
सिंहस्थानं मनोज्ञं च भद्रं श्रीविजयस्वनम् । कांतं यक्षपुरं रम्यं तिलकस्थानमेव च ॥ ८ ॥
परमाण्येवमादीनि पुराणि पुरुषोत्तम । परिक्रांतानि भूरीणि लक्ष्मणेन महात्मना ॥ ९ ॥
प्रसाद्य धरणीं सर्वां रत्नैः सप्तभिरन्वितः । नारायणपदं कृत्स्नं प्राप लक्ष्मणसुंदरः ॥ १० ॥
चक्रं छत्रं धनुः शक्तिर्गदा मणिरसिस्तथा । एतानि सप्त रत्नानि परिप्राप्तानि लक्ष्मणम् ॥११॥
उवाच श्रेणिको भूपो भगवंस्त्वत्प्रसादतः । रामलक्ष्मणयोर्ज्ञातं माहात्म्यं विधिना मया ॥ १२ ॥
अधुना ज्ञातुमिच्छामि लवणांकुशसंभवम् । सौमित्रिपुत्रसंभूतिं तथा तद्वक्तुमर्हसि ॥ १३ ॥
ततो मुनिगणस्वामी जगाद परमस्वनम् । शृणु वक्ष्यामि ते राजन् कथावस्तु मनीषितम् ॥१४॥
युगप्रधाननरयोः पद्मलक्ष्मणयोस्तयोः । निष्कंटकमहाराज्यजातभोगोपयुक्तयोः ॥ १५ ॥
व्रजंत्यहानि पक्षाश्च मासा वर्षयुगानि च । दोदुंदकामराज्ञातसुमहासुखसक्तयोः ॥ १६ ॥
सुरस्त्रीभिः समानानां स्त्रीणां सत्कुलजन्मनाम् । सहस्राण्यवबोध्यानि दश सप्त च लक्ष्मणे ॥१७॥
तासामष्टौ महादेव्यः कीर्तिश्रीरतिसन्निभाः । गुणशीलकलावत्यः सौम्याः सुंदरविभ्रमाः ॥१८॥
तासां जगत्प्रसिद्धानि कीर्त्यमानानि भूपते । शृणु नामानि चारूणि यथावदनुपूर्वशः ॥ १९ ॥

राज्ञः श्रीद्रोणमेघस्य विशल्याख्या सुतादिताः । ततो रूपवतीख्याता प्रतिरूपविवर्जिता ॥२०॥
तृतीया वनमालेति वसंतश्रीयुतेव सा । अन्या कल्याणमालाख्या नामाख्यातमहागुणा ॥ २१ ॥
पंचमी रतिमालेति रतिमालेव रूपिणी । षष्ठी च जितपद्मेति जितपद्मा सुखश्रिया ॥ २२ ॥
अन्या भगवती नाम चरमा च मनोरमा । अग्रपत्न्य इमा अष्टावुक्ता गरुडलक्ष्मणः ॥ २३ ॥
दयिताष्टसहस्री तु पद्माभस्यामरीसमा । चतस्रश्च महादेव्यो जगत्प्रख्यातकीर्त्तयः ॥ २४ ॥
प्रथमा जानकी ख्याता द्वितीया च प्रभावती । ततो रतिनिभाऽभिख्या श्रीदामा च रमा स्मृता ॥
एतासां च समस्तानां मध्यस्था चारुलक्ष्मणा । जानकी शोभतेऽत्यर्थं सतारेंदुकला यथा ॥२६॥
द्वे शते शतमर्द्धं च पुत्राणां तार्क्ष्यलक्ष्मणः । तेषां च कीर्तयिष्यामि शृणु नामानि कानिचित् २७
वृषभो धरणश्चंद्रः शरभो मकरध्वजः । धारणो हरिनागश्च श्रीधरो मदनोऽच्युतः ॥ २८ ॥
तेषामष्टौ प्रधानाश्च कुमाराश्चारुचेष्टिताः । अनुरक्ता गुणैर्येषामनन्यमनसो जनाः ॥ २९ ॥
विशल्यासुंदरीसूनुः प्रथमं श्रीधरः स्मृतः । असौ पुरिविनीतायां राजते दिवि चंद्रवत् ॥ ३० ॥
ज्ञेयो रूपवतीपुत्रः पृथिवीतिलकाभिधः । पृथिवीतलविख्यातः पृथ्वीं कान्तिं समुद्वहन् ॥ ३१ ॥
पुत्रः कल्याणमालाया बहुकल्याणभाजनम् । बभूव मंगलाभिख्यो मंगलैकक्रियोदितः ॥ ३२ ॥

विमलप्रभनामाऽभूत्पद्मावत्यां शरीरजः । तनयोऽर्जुनवृक्षाख्यो वनमालासमुद्भवः ॥ ३३ ॥
अतिवीर्यस्य तनया श्रीकेशिनमसूत च । आत्मजो भगवत्याश्च सत्यकीर्त्तिः प्रकीर्त्तितः ॥३४॥
सुपार्श्वकीर्त्तिनामानं सुतं प्राप मनोरमा । सर्वे चैते महासत्त्वाः शस्त्रशास्त्रविशारदाः ॥ ३५ ॥
नखमांसवदेतेषां भ्रातृणां संगतिर्दृढा । सर्वत्र शस्यते लोके समानोचितचेष्टिता ॥ ३६ ॥
अन्योन्यहृदयासीनाः प्रेमनिर्भरचेतसः । अष्टौ दिवीव वसवो रेमिरे स्वेप्सितं पुरि ॥ ३७ ॥
पूर्वं जनितपुण्यानां प्राणिनां शुभचेतसाम् । आरभ्य जन्मतः सर्वं जायते सुमनोहरम् ॥ ३८ ॥

एवं च कार्त्स्न्येन कुमारकोटयः स्मृता नरेंद्रप्रभवाश्चतस्रः ।
कोटयर्द्धयुक्ताः पुरि तत्र शक्त्या ख्याता नितांतं परया मनोज्ञाः ॥ ३९ ॥
नानाजनपदनिरतं परिगतमुकुटोत्तमांगकं नृपचक्रम् ।
षोडशसहस्रसंख्यं बलहरिचरणानुगं स्मृतं रवितेजः ॥ ४० ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे रामलक्ष्मणविभूतिदर्शनीयाभिधानं नाम चतुर्णवतितमं पर्व ॥ ९४ ॥

---

# अथ पञ्चनवतितमं पर्व ।

एवं दिनेषु गच्छत्सु भोगसंभारयोगिषु । धर्मार्थकामसंबन्धनितान्तरतिकारिषु ॥ १ ॥
विमानाभेऽन्यदा सुप्ता भवने जानकी सुखम् । शयनीये शरन्मेघमालासंमितमार्दवे ॥ २ ॥
अपश्यत्पश्चिमे यामे स्वप्नमंभोजलोचना । दिव्यतूर्यनिनादैश्च मंगलैर्बोधमागता ॥ ३ ॥
ततोऽतिविमले जाते प्रभाते संशयान्विता । कृतदेहस्थितिः कान्तमियाय सुसखीवृता ॥ ४ ॥
अपृच्छच्च मया नाथ स्वप्नो योऽद्य निरीक्षितः । अर्थं कथयितुं तस्य लब्धवर्णत्वमर्हसि ॥ ५ ॥
शरदिन्दुसमच्छायौ क्षुब्धसागरनिःस्वनौ । कैलासशिखराकारौ सर्वालंकारभूषितौ ॥ ६ ॥
कांतिमत्सितसद्दंष्ट्रौ प्रवरौ शरभोत्तमौ । प्रविष्टौ मे मुखं मन्ये विलसत्सितकेसरौ ॥ ७ ॥
शिखरात्पुष्पकस्याथ संभ्रमेणोरुणान्विता । वातनुन्ना पताकेवापतितास्मि किल क्षितौ ॥ ८ ॥
पद्मनाभस्ततोऽवोचच्छरभद्वयदर्शनात् । प्रवरोर्वचिरेणैव पुत्रयुग्ममवाप्स्यति ॥ ९ ॥
पतनं पुष्पकस्याग्राद्दयिते न प्रशस्यते । अथवा समदानस्थाः प्रयांतु प्रशमं ग्रहाः ॥ १० ॥
वसंतोऽथ परिप्राप्तस्तिलकामुक्तकंकटः । नीपनागेश्वरारूढः सहकारशरासनः ॥ ११ ॥

पञ्चनाराचसंयुक्तः केसरापूरितेषुधिः । गीयमानोऽमलश्लोकैर्मधुव्रतकदंबकैः ॥ १२ ॥
कदंबघनवातेन हारिणा निःश्वसन्निव । मल्लिकाकुसुमोद्योतैः शत्रूनन्यान्हसन्निव ॥ १३ ॥
कलपुंस्कोकिलापैर्जल्पन्निव निजोचितम् । विभ्रन्नरपते लीलां लोकाकुलत्वकारिणीम् ॥ १४ ॥
अकोठनखरो विभ्रद्दंष्ट्राकुरबकात्मिकाम् । लोहिताशोकनयनश्चलपल्लवजिह्वकः ॥ १५ ॥
वसंतकेसरी प्राप्तो विवेश जनमानसम् । नीयमानः परं त्रासं सिंहकेसरकेसरः ॥ १६ ॥
रमणीयं स्वभावेन वसंतेन विशेषतः । महेंद्रोदयमुद्यानं जातं नंदनसुंदरम् ॥ १७ ॥
विचित्रकुसुमा वृक्षा विचित्रचलपल्लवाः । मत्ता इव विघूर्णन्ते दक्षिणानिलसंगताः ॥ १८ ॥
सद्मोत्पलादिसंछन्नाः शकुंतगणनादिताः । वाप्यो वरं विराजंते जनसेवितरोधसः ॥ १९ ॥
हंससारसचक्राह्वकुरराणां मनोहराः । स्वनाः कारंडवानां च प्रवृत्ता रागिदुःसहाः ॥ २० ॥
निपातोत्पतनैस्तेषां विमलं लुलितं जलम् । प्रमोदादिव संवृत्तं तरंगाढ्यं समाकुलम् ॥ २१ ॥
पद्मादिभिर्जलं व्याप्तं स्थलं कुरबकादिभिः । गगनं रजसा तेषां वसंते जृंभिते सति ॥ २२ ॥
गुच्छगुल्मलतावृक्षप्रकारा बहुधा स्थिताः । वनस्पतेः परां शोभामुपग्मुः समंततः ॥ २३ ॥
काले तस्मिन्नरेंद्रस्य जनकस्य शरीरजाम् । किंचिद्गर्भकृतश्रांतिकृशीभूतशरीरिकाम् ॥ २४ ॥

वीक्ष्य पृच्छसि पद्माभः किं ते कान्ते मनोहरम् । संपादयाम्यहं ब्रूहि दोहकं किमसीदृशी ॥२५॥
ततःसंस्मित्य वैदेही जगाद कमलानना । नाथ चैत्यालयान्द्रष्टुं भूरीन् वांछामि भूतले ॥ २६ ॥
त्रैलोक्यमंगलात्मभ्यः पंचवर्णेभ्य आदरात् । जिनेंद्रप्रतिबिंबेभ्यो नमस्कर्तुं ममाशयः ॥ २७ ॥
हेमरत्नमयैः पुष्पैः पूजयामि जिनानिति । इयं मे महती श्रद्धा किमन्यदभिवांछयते ॥ २८ ॥
एवमाकर्ण्य पद्माभः स्मेरवक्त्रः प्रमोदवान् । समादिशत्प्रतीहारीं तत्क्षणप्रणतांगिकाम् ॥ २९ ॥
अयि कल्याणि ! निक्षेपममात्यो गद्यतामिति । जिनालयेषु क्रियतामर्चना महतीत्यलम् ॥३०॥
महेंद्रोदयमुद्यानं समेत्य सुमहादरम् । क्रियतां सर्वलोकेन सुशोभा जिनवेश्मनाम् ॥ ३१ ॥
तोरणैर्वैजयंतीभिर्घंटालंबूषबुद्बुदैः । अर्धचन्द्रैर्वितानैश्च वस्त्रैश्च सुमनोहरैः ॥ ३२ ॥
तथोपकरणैरन्यैः समस्तैरतिसुन्दरैः । लोको मह्यां समस्तायां करोतु जिनपूजनम् ॥ ३३ ॥
निर्वाणधामचैत्यानि विभूष्यन्तां विशेषतः । महानंदाः प्रवर्त्यन्तां सर्वसंपत्तिसंगताः ॥ ३४ ॥
कल्याणं दोहदं तेषु वैदेह्याः प्रतिपूजयन् । विहराम्यनया साकं महिमानं समेधयन् ॥ ३५ ॥
आदिष्टया तयेत्यात्मपदे कृत्वाऽऽत्मसम्मिताम् । यथोक्तं गदितोऽमात्यस्तेनादिष्टाः स्वकिंकराः ॥
व्यतिपत्य महोद्योगैस्ततस्तैः सम्मदान्वितैः । उपशोभी जिनेंद्राणामालयेषु प्रवर्त्तिता ॥ ३७ ॥

महागिरिगुहाद्वारगंभीरेषु मनोहराः । स्थापिताः पूर्णकलशाः सुहारादिविभूषिताः ॥ ३८ ॥
मणिचित्रसमाकृष्टचित्राः परमपट्टकाः । प्रसारिता विशालासु हेममंडलभित्तिषु ॥ ३९ ॥
अत्यन्तविमलाः शुद्धाः स्तंभेषु मणिदर्पणाः । हारा गवाक्षवक्रेषु स्वच्छनिर्झरहारिणः ॥ ४० ॥
विचित्रा भक्तयो न्यस्ता रत्नचूर्णेन चारुणा । विभक्ताः पंचवर्णेन पादगोचरभूमिषु ॥ ४१ ॥
न्यस्तानि शतपत्राणि सहस्रच्छदनानि च । देहलीकांडयुक्तानि कमलान्यपरत्र च ॥ ४२ ॥
हस्तसंपर्कयोग्येषु स्थानेषु कृतमुज्ज्वलम् । किंकिणी जालकं मत्तकामिनीसमनिःस्वनम् ॥ ४३ ॥
पंचवर्णैर्विकाराढ्यैचामरैर्मण्डिदंडकैः । संयुक्ताः पद्लंबूषाः स्वायतांगाः प्रलंबिताः ॥ ४४ ॥
माल्यान्यत्यन्तचित्राणि प्रापितानि प्रसारणम् । सौरभाकृष्टभृंगाणि कृतान्युत्तमाशिल्पिभिः॥४५॥
विशालातोद्यशालाभिः कल्पिताभिश्च नैकशः । तथा प्रेक्षकशालाभिः तदुद्यानमलंकृतं ॥ ४६ ॥
एवमत्यंतचार्वीभिरत्युर्वीभिर्विभूतिभिः । महेन्द्रोदयमुद्यानं जातं नंदनसुंदरम् ॥ ४७ ॥

अथभूत्यासुरपतिवत्सपुरजनपदसमन्वितो देवीभिः ।
सर्वामात्यसमेतःपद्मःसीतान्वितो ययावुद्यानम् ॥ ४८ ॥

परमं गजमारूढः सीतायुक्तो रराज बाढं पद्मः ।

ऐरावतपृष्टगतः शच्या यथा दिवौकसां नाथः ॥ ४९ ॥
नारायणोऽपि च यथा परमामृद्धिं समुद्वहन् याति स्म ।
शेषजनश्च सदार्हं हृष्टःस्फीतो मदान्नपानसमृद्धः ॥ ५० ॥
कदलीगृहमनोहरगृहेष्वतिमुक्तकमंडपेषु च मनोज्ञेषु ।
देव्यःस्थिता महद्धर्या यथार्हमन्यो जनश्चसुखमासीनः ॥ ५१ ॥
अवतीर्य गजाद्रामः कामःकमलोत्पलसंकुले समुदारे ।
सरसि सुखं विमलजले रेमे क्षीरोदसागरे शक्र इव ॥ ५२ ॥
तस्मिन् संक्रीड्य चिरं कृत्वा पुष्पोच्चयं जलादुत्तीर्य ।
दिव्येनार्चनविधिना वैदेह्या संगतो जिनानानर्च ॥ ५३ ॥
रामो मनोभिरामः काननलक्ष्मीसमाभिरुद्यस्त्रीभिः ।
क्षतपरिचरणो रेजे वसंत इव मूर्त्तिमानुपेतः श्रीमान् ॥ ५४ ॥
देवीभिरनुपमाभिःसोऽष्टसहस्रप्रमाणसंसक्ताभिः ।
रेजे निर्मलदेहस्ताराभिरिवावृतो ग्रहाणामाधिपः ॥ ५५ ॥

अमृताहारविलेपनशयनासनवासगंधमाल्यादिभवम् ।
शब्दरसरूपगंधस्पर्शसुखं तत्र राम आपोदारम् ॥ ५६ ॥
एवं जिनेंद्रभवने प्रतिदिनपूजाविधानयोगरतस्य ।
रामस्य रतिः परमा जाता रवितेजसः मुदारयुतस्य ॥ ५७ ॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे जिनेन्द्रपूजादोहदाभिधानं नाम पंचनवतितमं पर्व ॥ ९५ ॥

# अथ षण्णवतितमं पर्व ।

उद्यानेऽवस्थितस्यैवं राघवस्य सुचेतसः । तृषिता इव संप्रापुः प्रजा दर्शनकांक्षया ॥ १ ॥
श्रावितं प्रतिहारीभिः पारंपर्यात्प्रजागमम् । विज्ञाय दक्षिणस्याक्ष्णः स्पंदं प्राप विदेहजा ॥ २ ॥
अचिंतयश्च किं त्वेतन्निवेदयति मे परम् । दुःखस्याऽऽगमनं नेत्रमधस्तात्स्पंदनं भजत् ॥ ३ ॥
पापेन विधिना दुःखं प्रापिता सागरांतरे । दृष्टस्तेन न संतुष्टः किमन्यत्प्रापयिष्यति ॥ ४ ॥
निर्मितानां स्वयं शश्वत्कर्मणामुचितं फलम् । ध्रुवं प्राणिभिराप्तव्यं न तच्छक्यं निवारणम् ॥५॥

उपगुण्य प्रयत्नेन सितांशुकमिवांशुमान् । पालयन्नपि नित्यं स्वं कर्मणां फलमश्नुते ॥ ६ ॥
अगदच्च विचेतस्का देव्यो ब्रूत श्रुतागमाः । सम्यग्विचार्य मेऽधरतान्नेत्रस्पंदनजं फलम् ॥ ७ ॥
तासामनुमती नाम देवी निश्चयकोविदा । जगाद देवी को नाम विधिरन्योऽत्र दृश्यते ॥ ८ ॥
यत्कर्म निर्मितं पूर्वं सितं मलिनमेव वा । स कृतांतो विधिश्चासौ दैवं तच्च तदीश्वरः ॥ ९ ॥
कृतांतेनाहमानीता व्यवस्थामेतिकामिति । पृथङ्निरूपणं तत्र जनस्याज्ञानसंभवम् ॥ १० ॥
अथातो गुणदोषज्ञा गुणमालेति कीर्त्तिता । जगाद सांत्वनोद्युक्ता देवीं देवनयाऽन्विताम् ॥११॥
देवि त्वमेव च देवस्य सर्वतोऽपि गरीयसी । तवैव च प्रसादेन जनस्यान्यस्य संयुता ॥ १२ ॥
ततोहं न प्रपश्यामि सुयुक्तेनापि चेतसा । यत्ते यास्यति दुःखस्य कारणत्वं सुचेष्टिते ॥ १३ ॥
अन्यास्तत्र जगुर्देव्यो देव्यत्र जनितेन किम् । वितर्कणविशालेन शान्तिकर्म विधीयताम् ॥१४॥
अभिषेकैर्जिनेन्द्राणामत्युदारैश्च पूजनैः । दानैरिच्छाभिपूरैश्च क्रियतामशुभेरणम् ॥ १५ ॥
एवमुक्ता जगौ सीता देव्यः साधु समीरितम् । दानं पूजाऽभिषेकश्च तपश्चाशुभसूदनम् ॥ १६ ॥
विघ्नानां नाशनं दानं रिपूणां वैरनाशनम् । पुण्यस्य समुपादानं महतो यशसस्तथा ॥ १७ ॥
इत्युक्त्वा भद्रकलशं समाहूय जगाविति । किमिच्छदानमासूतेर्दीयतां प्रतिवासरम् ॥ १८ ॥

यथाज्ञापयसीत्युक्त्वा द्रविणाधिकृतो ययौ । इयमप्यादरे तस्थौ जिनपूजादिगोचरे ॥ १९ ॥
ततो जिनेंद्रगेहेषु तूर्यशब्दाः समुद्ययुः । शंखकोटिरवोन्मिश्राः प्रावृड्घनरवोपमाः ॥ २० ॥
जिनेंद्रचरितन्यस्तचित्रपट्टाः प्रसारिताः । पयोघृतादिसंपूर्णाः कलशाः समुपाहृताः ॥ २१ ॥
ऋषितांगो द्विपारूढः कंचुकी सितवस्त्रभृत् । कः केनार्थीत्ययोध्यायां घोषणामददात्स्वयम् ॥२२॥
एवं सुविधिना दानं महोत्साहमदीयत । विविधं नियमं देवी निजशक्त्या चकार च ॥ २३ ॥
प्रावर्त्यन्त महापूजा अभिषेकाः सुसंपदः । पापवस्तुनिवृत्तात्मा बभूव समधीर्जनः ॥ २४ ॥
इतिक्रियाप्रसक्तायां सीतायां शांतचेतसि । आस्थानमंडपे तस्थौ दर्शने शक्रवद्बलः ॥ २५ ॥
प्रतीहारविनिर्मुक्तद्वाराः संभ्रांतचेतसः । ततो जनपदाः सैंहं धामेवास्थानमाश्रिताः ॥ २६ ॥
रत्नकांचननिर्माणामदृष्टां जातुचित्पुनः । सभामालोक्य गंभीरां प्रजानां चलितं मनः ॥ २७ ॥
हृदयानंदनं राममालोक्य नयनोत्सवम् । उल्लसन्मनसो नेमुः प्रबद्धांजलयः प्रजाः ॥ २८ ॥
वीक्ष्य कंपितदेहास्ता मुहुः कंपितमानसाः । पद्मो जगाद भो भद्रा ब्रूतागमनकारणम् ॥ २९ ॥
विजयोऽथ सुराजिश्च मधुमान् वसुलो धरः । काश्यपः पिंगलः कालः क्षेमाद्याश्च महत्तराः ॥ ३० ॥
निश्चलाश्चरणन्यस्तलोचना गलितौजसः । न किंचिदूचुराक्रान्ताः प्रभावेण महीपतेः ॥ ३१ ॥

चिरादुत्सहते वक्तुं मतिर्यद्यपि कृच्छ्रतः । निःक्रामति तथाप्येषा वक्त्रागारान्न वाग्वधूः ॥ ३२ ॥
गिरा सांत्वनकारिण्या पद्मः पुनरभाषत । ब्रूत स्वागतिनो ब्रूत कैमर्थ्येन समागताः ॥ ३३ ॥
इत्युक्ता अपि ते भूयः समस्तकरणोज्झिताः । तस्थुः पुस्त इव न्यस्ताः सुनिष्णातेन शिल्पिना ॥
ह्रीपाशकण्ठबद्धास्ते किंचिच्चंचललोचनाः । अर्भका इव सारंगा जगुराकुलचेतसः ॥ ३५ ॥
ततः प्राग्रहरस्तेषामुवाच चलिताक्षरम् । देवाभयप्रसादेन प्रसादः क्रियतामिति ॥ ३६ ॥
ऊचे नरपतिर्भद्रा न किंचिद्भवतां भयम् । प्रकाशयत चित्तस्थं स्वस्थतामुपगच्छत ॥ ३७ ॥
अवद्यं सकलं त्यक्त्वा साध्विदानीं भजाम्यहम् । मिश्रीभूतं जलं त्यक्त्वा यथा हंसः स्तनोद्भवम् ॥
अभयेऽपि ततो लब्धे कृच्छ्रप्रस्थापिताक्षरः । जगाद मंदनिःस्वानो विजयोऽजलिमस्तकः॥३९॥
विज्ञाप्यं श्रूयतां नाथ पद्मनाभ नरोत्तम । प्रजाधुनाऽखिला जाता मर्यादारहितात्मिका ॥ ४० ॥
स्वभावादेव लोकोऽयं महाकुटिलमानसः । प्रकटं प्राप्य दृष्टान्तं न किंचित्तस्य दुष्करम् ॥४१॥
परमं चापलं धत्ते निसर्गेण प्लवंगमः । किमंग पुनरारुह्य चपलं यंत्रपंजरम् ॥ ४२ ॥
तरुण्यो रूपसंपन्नाः पुंसामल्पबलात्मनाम् । ह्रियन्ते बलिभिः छिद्रे पापचित्तैः प्रसह्य च ॥४३॥
प्राप्तदुःखां प्रियां साध्वीं विरहात्यंतदुःखितः । कश्चित्सहायमासाद्य पुनरानयते गृहम् ॥ ४४ ॥

मलीनधर्ममर्यादा यावन्नश्यति नावनिः । उपायश्चिंत्यतां तावत्प्रजानां हितकाम्यया ॥ ४५ ॥
राजा मनुष्यलोकेऽस्मिन्नधुना त्वं यदा प्रजाः । न पासि विधिना नाशमिमा यांति तदा ध्रुवम् ॥
नद्युद्यानसभाग्रामप्रपाध्वपुरवेश्मसु । अवर्णवादमेकं ते मुक्त्वा नान्यास्ति संकथा ॥ ४७ ॥
स तु दाशरथी रामः सर्वशास्त्रविशारदः । हृतां विद्याधरेशेन जानकीं पुनरानयत् ॥ ४८ ॥
तत्र नूनं न दोषोऽस्ति कश्चिदप्येवमाश्रिते । व्यवहारेऽपि विद्वांसः प्रमाणं जगतः परम् ॥४९॥
किं च यादृशमुर्वीशः कर्मयोगं निषेवते । स एव सहतेऽस्माकमपि नाथानुवर्तिनाम् ॥ ५० ॥
एवं प्रदुष्टचित्तस्य वदमानस्य भूतले । निरंकुशस्य लोकस्य काकुत्स्थ कुरु निग्रहम् ॥ ५१ ॥
एक एव हि दोषोऽयमभविष्यन्न चेत्ततः । व्यलंबयिष्यदेतत्ते राज्यमाखंडलेशताम् ॥ ५२ ॥
एवमुक्तं समाकर्ण्य क्षणमेकमभून्नृपः । विषादमुद्गराघातविचलद्धृदयो भृशम् ॥ ५३ ॥
अचिंतयच्च हा कष्टमिदमन्यत्समागतम् । यद्यशोंबुजखंडं मे दग्धुं लग्नोऽयशोऽनलः ॥ ५४ ॥
यत्कृतं दुःसहं सोढं विरहव्यसनं मया । सा क्रिया कुलचंद्रं मे प्रकरोति मलीमसम् ॥ ५५ ॥
विनीता यां समुद्दिश्य प्रवीराः कपिकेतवः । करोति मलिनां सीता सा मे गोत्रकुमुद्वतीम् ॥५६॥
यदर्थमब्धिमुत्तीर्य रिपुध्वंसि रणं कृतम् । करोति कलुषं सा मे जानकी कुलदर्पणम् ॥ ५७ ॥

युक्तं जनपदो वक्ति दुष्टपुंसि परालये । अवस्थिता कथं सीता लोकनिंद्या मया हृता ॥ ५८ ॥
अपश्यन् क्षणमात्रं यां भवामि विरहाकुलः । अनुरक्तां त्यजाम्येतां दयितामधुना कथम् ॥५९॥
चक्षुर्मानसयोर्वासं कृत्वाऽवस्थिता मम । गुणधानीमदोषां तां कथं मुंचामि जानकीम् ॥ ६० ॥
अथवा वेत्ति नारीणां चेतसः को विचेष्टितम् । दोषाणां प्रभवो यासु साक्षाद्वसति मन्मथः ॥६१॥
धिक्स्त्रियं सर्वदोषाणामाकरं तापकारणम् । विशुद्धकुलजातानां पुंसां पंकं सुदुस्त्यजम् ॥ ६२ ॥
अभिहंत्रीं समस्तानां बलानां रागसंश्रयाम् । स्मृतीनां परमं भ्रंशं सत्यस्खलनखातिकाम् ॥६३॥
विघ्नं निर्वाणसौख्यस्य ज्ञानप्रभवसूदनीम् । भस्मच्छन्नाग्निसंकाशां दर्भसूचीसमानिकाम् ॥६४॥
दृङ्मात्ररमणीयां तां निर्मुक्तमिव पन्नगः । तस्मात्त्यजामि वैदेहीं महादुःखजिहासया ॥ ६५ ॥
अशून्यं सर्वदा तीव्रस्नेहबंधवशीकृतम् । यया मे हृदयं मुग्धं विरहामि कथं तकाम् ॥ ६६ ॥
यद्यप्यहं स्थिरस्वान्तस्तथाप्यासन्नवर्त्तिनी । अर्चिर्वन्मम वैदेही मनोविलयनक्षमा ॥ ६७ ॥
मन्ये दूरस्थिताऽप्येषा चंद्ररेखा कुमुद्वतीम् । यथा चालयितुं शक्ता धृतिं मम मनोहरा ॥ ६८ ॥
इतो जनपरीवादश्चेतःस्नेहः सुदुस्त्यजः । आहोऽस्मि भयरागाभ्यां प्रक्षिप्तो गहनांतरे ॥ ६९ ॥
श्रेष्ठा सर्वप्रकारेण दिवौकोयोषितामपि । कथं त्यजामि तां साध्वीं प्रीत्या यातामिवैकताम् ॥७०॥

एतां यदि न मुंचामि साक्षाद्दुःकीर्त्तिमुद्गताम् । कृपणो मत्समो मह्यां तदैतस्यां न विद्यते ॥७१॥
स्नेहापवादभयसंगतमानसस्य व्यामिश्रतीव्ररसवेगवशीकृतस्य ।
रामस्य गाढपरितापसमाकुलस्य कालस्तदा निरुपमः स बभूव कृच्छ्रः ॥ ७२ ॥
विरुद्धपूर्वोत्तरमाकुलं परं विसंधिसातेतरवेदनान्वितम् ।
अभूदिदं केसरिकेतुचिंतनं । निदाघमध्याह्नरवेः सुदुःसहम् ॥ ७३ ॥
इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते श्रीपद्मपुराणे जनपरीवादचिंताभिधानं नाम षण्णवतिमं पर्व ॥ ९१ ॥

---

# अथ सप्तनवतितमं पर्व ।

ततः कथमपि न्यस्य चिंतामेकत्र वस्तुनि । आज्ञापयत्प्रतीहारं लक्ष्मणाकारणं प्रति ॥ १ ॥
प्रतीहारवचः श्रुत्वा लक्ष्मणः संभ्रमान्वितः । तुरंगं चलमारुह्य कृत्येक्षागतमानसः ॥ २ ॥
रामस्यासन्नतां प्राप्य प्रणिपत्य कृतांजलिः । आसीनो भूतले रम्ये तत्पादनिहितेक्षणः ॥ ३ ॥
स्वयमुत्थाप्य तं पद्मो विनयानतविग्रहम् । परमाश्रयताभाजं चक्रेऽर्धासनसंगतम् ॥ ४ ॥

शत्रुघ्नाग्रेसराः भूपाश्चंद्रोदयसुतादयः । तथाऽविशन् कृतानुज्ञा आसीनाश्च यथोचितम् ॥ ५ ॥
पुरोहितः पुरः श्रेष्ठी मंत्रिणोऽन्ये च सज्जनाः । यथायोग्यं समासीनाः कुतूहलसमन्विताः ॥ ६ ॥
ततः क्षणमिव स्थित्वा बलदेवो यथाक्रमम् । लक्ष्मणाय परीवादसमुत्पत्तिं न्यवेदयत् ॥ ७ ॥
तदाकर्ण्य सुमित्राजो रोषलोहितलोचनः । सन्नद्धुमादिशन् योधानिदं च पुनरभ्यधात् ॥ ८ ॥
अद्य गच्छाम्यहं शीघ्रमन्तर्दुर्जनवारिधेः । करोमि धरणीं मिथ्यावाक्यजिह्वातिरोहिताम् ॥ ९ ॥
उपमानविनिर्मुक्तशीलसंभारधारिणीम् । द्विषंति गुणगंभीरां सीतां ये तान्नये क्षयम् ॥ १० ॥
ततो दुरीक्षितां प्राप्तं हरिं क्रोधवशीकृतम् । संक्षुब्धसंसदं वाक्यैरिमैरसमयन्नृपः ॥ ११ ॥
सौम्यर्षभकृतौपम्यैः सद्दक्षैर्भरतस्य च । महीसागरपर्यन्ता पालितेयं नरोत्तमैः ॥ १२ ॥
इक्ष्वाकुवंशतिलका आदित्ययशसादयः । आसन्नेषां रणे पृष्ठं दृष्टं नेंदोरिवारिभिः ॥ १३ ॥
तेषां यशःप्रतानेन कौमुदीपटशोभिना । अलंकृतमिदं लोकत्रितयं रहितांतरम् ॥ १४ ॥
कथं तद्रागमात्रस्य कृते पापस्य भंगिनः । वहन्निरर्थकं प्राणान् विदधामि मलीमसम् ॥ १५ ॥
अकीर्तिः परमल्पापि याति वृद्धिमुपेक्षिता । कीर्तिरल्पापि देवानामपि नाथैः प्रयुज्यते ॥ १६ ॥
भोगैः किं परमोदारैरपि प्रक्षयवत्सलैः । कीर्त्युद्यानं प्ररूढं यद्दह्यतेऽकीर्तिवह्निना ॥ १७ ॥

तच्चैतच्छस्त्रशास्त्राणां वध्यं नावर्णभाषितम् । देव्यामस्मद्गृहस्थायां सत्यामपि सुचेतसि ॥ १८ ॥
पद्मांभोजवनानन्दकारिणस्तिग्मतेजसः । अस्तं यानस्य को रात्रौ सत्यामस्ति निवर्त्तकः ॥१९॥
अपवादरजोभिर्मे महाविस्तारगामिभिः । छायायाः क्रियते हानं मा भूदातपवारणम् ॥ २० ॥
शशांकविमलं गोत्रमकीर्त्तिघनलेखया । मारुधत्प्राप्य मां भ्रातरित्यहं यत्नतत्परः ॥ २१ ॥
शुष्कैंधनमहाकूटे सलिलाप्लाववर्जितः । मावर्द्धिष्ट यथावह्निरयशो भुवने कृतम् ॥ २२ ॥
कुलं महार्हमेतन्मे प्रकाशममलोज्ज्वलम् । यावत्कलंक्यते नाऽरं तावदौपायिकं कुरु ॥ २३ ॥
अपि त्यजामि वैदेहीं निर्दोषां शीलशालिनीम् । प्रमादयामि नो कीर्त्तिं लोकसौख्यहृतात्मकः ॥२४॥
ततो जगाद सौमित्रिर्भ्रातृस्नेहपरायणः । राजन्न खलु वैदेह्यां विधातुं शोकमर्हसि ॥ २५ ॥
लोकापवादमात्रेण कथं त्यजसि जानकीम् । स्थितां सर्वसतीमूर्ध्नि सर्वाकारमनिंदिताम् ॥२६॥
असत्त्वं वक्ति दुर्लोकः प्राणिनां शीलधारिणाम् । न हि तद्वचनात्तेषां परमार्थत्वमश्नुते ॥ २७ ॥
गृह्यमाणोपिऽतिकृष्णोऽपि विषदूषितलोचनैः । सितत्वं परमार्थेन न विमुंचति चंद्रमाः ॥ २८ ॥
आत्मा शीलसमृद्धस्य जंतोर्व्रजति साक्षिताम् । परमार्थाय पर्याप्तं वस्तुत्वं न बाह्यतः ॥ २९ ॥
नो पृथग्जनवादेन संक्षोभं यांति कोविदाः । न शुनो भाषणाद्दंती वैलक्ष्यं प्रतिपद्यते ॥ ३० ॥

विचित्रस्यास्य लोकस्य तरंगसमचेष्टिनः । परदोषकथासक्तेर्निग्रहं श्वो विधास्यति ॥ ३१ ॥
शिलामुत्पाट्य शीतांशुं जिघांसुर्मोहवत्सलः । स्वयमेव नरो नाशमसंदिग्धं प्रपद्यते ॥ ३२ ॥
अभ्याख्यानपरो दुष्टस्तथा परगुणासहः । नियतिं दुर्गतिं जंतुर्दुःकर्मा प्रतिपद्यते ॥ ३३ ॥
बलदेवस्ततोऽवोचद्यथा वदसि लक्ष्मण । सत्यमेवमिदं बुद्धिर्मध्यस्था तव शोभना ॥ ३४ ॥
किन्तु लोकविरुद्धानि त्यजतः शुद्धिशालिनः । न दोषो दृश्यते कश्चिद्गुणश्चैकान्तसंभवः ॥३५॥
सौख्यं जगति किं तस्य का वाऽऽशा जीवितं प्रति । दिशो यस्यायशोदावज्वालालीढाः समंततः ॥
किमनर्थकृतार्थेन सविषेणौषधेन किम् । किं वीर्येण न रक्ष्यन्ते प्राणिनो येन भीगताः ॥ ३७ ॥
चारित्रेण न तेनार्थो येन नात्मा हितोद्भवः । ज्ञानेन तेन किं येन ज्ञातो नाध्यात्मगोचरः ॥३८॥
प्रशस्तं जन्म नो तस्य यस्य कीर्त्तिवधूं वराम् । बली हरति दुर्वादस्ततस्तु मरणं वरम् ॥ ३९ ॥
आस्तां जनपरीवादो दोषोऽप्यतिमहान्मम । परपुंसा हृता सीता यत्पुनर्गृहमाहृता ॥ ४० ॥
रक्षसो भवनोद्याने चकार वसतिं चिरम् । अभ्यर्थिता च दूतीभिर्विदमानाभिरिक्षितम् ॥ ४१ ॥
दृष्टा च दुष्टया दृष्ट्या समीपावनिवर्त्तिना । असकृद्राक्षसेन्द्रेण भविता च यथेप्सितम् ॥ ४२ ॥
एवंविधां तकां सीतां गृहमानयता मया । कथं न लज्जितं किंवा दुष्करं मूढचेतसाम् ॥ ४३ ॥

कृतांतवक्रसेनानीः शब्द्यतामविलंबितम् । सीता गर्भद्वितीया मे गृहादद्यैव नीयताम् ॥ ४४ ॥
एवमुक्तोंजलिं बद्धा सौमित्रिः प्रणतात्मकः । जगाद देव नो युक्तं त्यक्तुं जनकसंभवाम्॥४५॥
सुमार्दवांघ्रिकमला तन्वी मुग्धा सुखेधिता । एकाकिनी यथा जातु क वैदेही खिलेन वा ॥४६॥
गर्भभारसमाक्रांता परमं खेदमाश्रिता । राजपुत्री त्वया त्यक्ता संश्रयं कं प्रपद्यते ॥ ४७ ॥
वलिपुष्पादिकं दृष्टं लोकेन तु जिनाय किम् । कल्प्यते भक्तियुक्तेन को दोषः परदर्शने ॥४८॥
प्रसीद नाथ निर्दोषामसूर्यपश्यकोमलाम् । माऽत्याक्षीर्मैथिलीं वीर भवदर्पितमानसाम् ॥ ४९ ॥
ततोऽत्यंतदृढीभूतविरागः क्रोधभारभाक् । काकुत्स्थः प्रवरोऽवोचदप्रसन्नमुखोऽनुजम् ॥ ५० ॥
लक्ष्मीधर न वक्तव्यं त्वया किंचिदतः परम् । मयैतन्निश्चितं कृत्यमवश्यं साध्वसाधु वा ॥५१॥
निर्मानुष्ये वने त्यक्ता सहायपरिवर्जिता । जीवतु म्रियतां वाऽपि सीताऽऽत्मीयेन कर्मणा॥५२॥
क्षणमप्यत्र मे देशे मा शिष्टनगरेऽपि वा । कुत एव गृहे सीता मलवर्द्धनकारिणी ॥ ५३ ॥
चतुरश्वमथाऽऽरुह्य रथं सैन्यसमावृतः । जय नंदेति शब्देन बंदिभिः परिपूजितः ॥ ५४ ॥
समुच्छ्रितासितच्छत्रश्चापी कवचकुंडली । कृतांतवक्रसेनानीरीशितुः प्रस्थितोऽतिकम् ॥ ५५ ॥
तं तथाविधमायांतं दृष्ट्वा नगरयोषिताम् । कथा बहुविकल्पाऽऽसीद्वितर्कागतचेतसाम् ॥ ५६ ॥

किमिदं हेतुना केन त्वरावानेष लक्ष्यते । कं प्रत्येष सुसंरंभाः किन्तु कस्य भविष्यति ॥ ५७ ॥
शस्त्रांधकारमध्यस्थो निदाघार्कसमद्युतिः । मातः कृतांतवक्रोऽयं कृतांत इव भीषणः ॥ ५८ ॥
एवमादिकथासक्तनगरीयोषिदीक्षितः । अंतिकं रामदेवस्य सेनानीः समुपागमत् ॥ ५९ ॥
प्रणिपत्य ततो नाथं शिरसा धरणीस्पृशा । जगाद देव देह्याज्ञामिति संगतपाणिकः ॥ ६० ॥
पद्मनाभो जगौ गच्छ सीतामपनय द्रुतम् । मार्गे जिनेंद्रसद्मानि दर्शयन् कृतदोहदाम् ॥ ६१ ॥
सम्मेदगिरिजैनेंद्रनिर्वाणावनिकल्पितान् । प्रदर्श्य चैत्यसंघातानाशापूरणपंडितान् ॥ ६२ ॥
अटवीं सिंहनादाऽऽस्यां नीत्वा जनविवर्जिताम् । अवस्थाप्यैतिकां सौम्य त्वरितं पुनराव्रज ६३
यथाऽऽज्ञापयसीत्युक्त्वा वितर्कपरिवर्जितः । जानकीं समुपागम्य सेनानीरिन्यभाषत ॥ ६४ ॥
उत्तिष्ठ रथमारोह देवि कुर्वभिवांछितम् । प्रपश्य चैत्यगेहानि भजाशंसाफलोदयम् ॥ ६५ ॥
इति प्रसाद्यमाना सा सेनान्या मधुरस्वनम् । प्रमोदमानहृदया रथमूलमुपागता ॥ ६६ ॥
जगाद च चतुर्भेदः संघो जयतु संततम् । जैनो जयतु पद्माभः साधुवृत्तैकतत्परः ॥ ६७ ॥
प्रमादात्पतितं किंचिदसुंदरविचेष्टितम् । मृष्यंतु सकलं देवा जिनालयनिवासिनः ॥ ६८ ॥
मनसा कान्तसक्तेन सकलं च सखीजनम् । न्यवर्तयन्निगद्यैवमत्यंतोत्सुकमानसा ॥ ६९ ॥

सुखं तिष्ठत सत्सख्यो नमस्कृत्य जिनालयान् । एषाऽऽहमात्रजाम्येव कृत्या नोत्सुकता परा ॥७०॥
एवं तदुक्तितः पत्युरनादेशाच्च योषितः । शेषा विहरणे बुद्धिं न चक्रुश्चारुभाषिताः ॥ ७१ ॥
ततः सिद्धान्नमस्कृत्य प्रमोदं परमं श्रिता । प्रसन्नवदना सीता रथमारोहदुज्ज्वलम् ॥ ७२ ॥
सा तं रथं समारूढा रत्नकांचनकल्पितम् । रेजे सुरवधूर्यद्वद्विमानं रत्नमालिनी ॥ ७३ ॥
रथः कृतांतवक्त्रेण चोदितो वरवाजियुक् । ययौ भरतनिर्मुक्तो नाराच इव वेगवान् ॥ ७४ ॥
शुष्कद्रुमसमारूढो वायसोऽत्यंतमाकुलः । रराट विरसं धुन्वन्नसकृत्पक्षमस्तकम् ॥ ७५ ॥
सुमहाशोकसंतप्ता धूतमुक्ता शिरोरुहा । रुरोदाभिमुखं नारी कुर्वती परिदेवनम् ॥ ७६ ॥
पश्यंत्यप्येवमादीनि दुर्निमित्तानि जानकी । व्रजत्येव जिनासक्तमानसा स्थिरनिश्चया ॥७७॥
महीभृच्छिखरश्वभ्रकंदरावनगह्वरम् । निमेषेण समुल्लंघ्य योजनं यात्यसौ रथः ॥ ७८ ॥
तार्क्ष्यवेगाश्वसंयुक्तः सितकेतुविराजितः । आदित्यरथसंकाशो रथो यात्यनिवारितः ॥ ७९ ॥
रामशक्रप्रियारूढो मनोरथजवो रथः । कृतांतमातलिक्षिप्तप्रनुन्नाश्वः शोभतेतराम् ॥ ८० ॥
तत्रापाश्रयसंयुक्ततनुः सुपरमासना । याति सीता सुखं क्षोणीं पश्यंती विविधामिति ॥ ८१ ॥
क्वचिद्ग्रामे पुरेऽरण्ये सरांसि कमलादिभिः । कुसुमैरतिरम्याणि तयाऽदृश्यंत सोत्सुकम् ॥८२॥

क्वचिद्घनपटच्छन्नभोरात्रितमः समम् । दुरालक्ष्यपृथग्भावं विशालं वृक्षगह्वरम् ॥ ८३ ॥
च्युतपुष्पफला तन्वी विपत्रा विरला ह्रिया । अटवी क्वचिदच्छाया विधवा कुलजा यथा ॥८४॥
सहकारसमासक्ता क्वचित्सुंदरमाधवी । वेश्येव चपलासक्तमशोकमभिलष्यति ॥ ८५ ॥
महापादपसंघातः क्वचिद्दावविनाशितः । न भाति हृदयं साधोः खलवाक्याहतं यथा ॥ ८६ ॥
सुपल्लवलताजालैः क्वचिन्मंदानिलेरितैः । नृत्यं वसंतपत्नीव वनराजी निषेवते ॥ ८७ ॥
क्वचित्पुलिन्दसंघातमहाकलकलारवैः । उद्भ्रांतविहगा दूरं गता सारंगसंहतिः ॥ ८८ ॥
क्वचिदुन्नतशैलाग्रं पश्यंती चोर्द्धमस्तका । विचित्रधातुनिर्माणैर्नयनैः कौतुकान्वितैः ॥ ८९ ॥
क्वचिदच्छाल्पनीराभिः सरिद्भिः प्रोषितप्रिया । नारीवाश्रुप्रपूर्णाक्षा भाति संतापशोभिता ॥९०॥
नानाशकुंतनादेन जल्पतीव मनोहरम् । करोतीव क्वचिद्धीध्रनिर्झराट्टहसं मुदा ॥ ९१ ॥
मकरंदातिलुब्धाभिर्भृंगीभिर्मंदमंथरम् । क्वचित्संस्तूयमानेव शोभते नमिता फलैः ॥ ९२ ॥
सत्पल्लवमहाशाखैर्वृक्षैर्वायुविघूर्णितैः । उपचारप्रसक्तेव पुष्पवृष्टिं विमुंचते ॥ ९३ ॥
एवमादिक्रियासक्तामटवीं श्वापदाकुलाम् । पश्यंती याति वैदेही पद्माभापेक्षिमानसा ॥९४॥
तावच्च मधुरं श्रुत्वा स्वनमत्यंतमांसलम् । दध्यौ किंत्वेष रामस्य दुंदुभिध्वनिरायतः ॥ ९५ ॥

इति प्रतर्कमापन्ना दृष्ट्वा भागीरथीमसौ । एतद्घोषप्रतिस्वानं जानात्यन्यदिशि श्रुतम् ॥ ९६ ॥
अंतर्नक्रझषग्राहमकरादिविघट्टिताम् । उद्वृत्तोर्मिसमासंगात् क्वचित्कंपितपंकजाम् ॥ ९७ ॥
समूलोन्मूलितोत्तुंगरोधोगतमहीरुहाम् । विदारितमहाशैलग्रावसंघातरंहसम् ॥ ९८ ॥
समुद्रक्रोडपर्यस्तां सगरात्मजनिर्मिताम् । आरसातलगंभीरां पुलिनैः शोभितां सितैः ॥ ९९ ॥
फेनमालासमासक्तविशालावर्त्तभैरवाम् । प्रांतावस्थितसस्वानशकुन्तगणराजिताम् ॥ १०० ॥
अश्वास्ते तां समुत्तीर्णाः पवनोपमरंहसः । सम्यक् संसारयोगेन संसृतिं साधवो यथा ॥ १०१ ॥
ततो मेरुवदक्षोभ्यचित्तोऽपि सततं भवन् । सेनानीः परमं प्राप विषादं सदयस्तदा ॥ १०२ ॥
किंचिद्वक्तुमशक्तात्मा महादुःखसमाहतः । नियन्तुमक्षमः स्थातुं प्रबलायातवाष्पकः ॥ १०३ ॥
विधृत्य स्यन्दनं लग्नः कर्त्तुं क्रन्दनमुत्कटम् । निधाय मस्तके हस्तौ स्रस्तांगो विगतद्युतिः ॥१०४॥
ततो जगाद वैदेही प्रभ्रष्टहृदया सती । कृतांतवक्र कस्मात्त्वं विरौषीदं सुदुःखिवत् ॥ १०५ ॥
प्रस्तावेऽत्यंतहर्षस्य विषादयसि मामपि । विजनेऽस्मिन्महारण्ये कस्मादाश्रितरोदनः ॥ १०६ ॥
स्वाम्यादेशस्य कृत्यत्वाद्व्यक्तव्यत्वान्नियोगतः । कथंचिद्रोदनं कृत्वा यथावत्स न्यवेदयत् ॥१०७॥
विषाग्निशस्त्रसदृशं शुभे दुर्जनभाषितम् । श्रुत्वा देवेन दुःकीर्त्तिः परमं भयमीयुषा ॥ १०८ ॥

संत्यज्य दुस्त्यजं स्नेहं दोहदानां नियोगतः । त्यक्तासि देव रामेण श्रमणेन रतिर्यया ॥१०९॥
स्वामिन्यस्ति प्रकारोऽसौ नैव येन सविष्णुना । अनुनीतस्तवार्थेन न तथाप्यत्यजद्गृहम् ॥११०॥
तस्मिन् स्वामिनि नीरागे शरणं तेऽस्ति न कचित्। धर्मसंबंधमुक्ताया जीवे सौख्यस्थितेरिव १११
न मवित्री न च भ्राता नैव बांधवसंहतिः । आश्रयस्तेऽधुना देवि मृगाकुलमिदं वनम् ॥ ११२ ॥
ततस्तद्वचनं श्रुत्वा वज्रेणेवाभिताडिता । हृदये दुःखसंभारव्याप्ता मोहमुपागता ॥ ११३ ॥
संज्ञां प्राप्य च कृच्छ्रेण स्खलितोद्गतवर्णगीः । जगादापृच्छनं कर्तुं सकृन्मे नाथमीक्षय ॥ ११४ ॥
सोऽवोचद्देवि दूरं सा नगरी रहिताऽधुना । कुतः पश्यसि पद्माभं परमं चंडशासनम् ॥ ११५ ॥
ततोऽश्रुजलधाराभिः क्षालयंत्यास्यपंकजम् । तथापि निर्भरस्नेहरसाक्रांता जगाविदम् ॥ ११६ ॥
सेनापते त्वया वाच्यो रामो मद्वचनादिदम् । यथा मत्यागजः कार्यो न विषादस्त्वया प्रभो ११७
अवलंब्य परं धैर्यं महापुरुष सर्वथा । सदा रक्ष प्रजां सम्यक्पितेव न्यायवत्सलः ॥ ११८ ॥
परिप्राप्तकलापारं नृपमाह्लादकारणम् । शरचंद्रमसं यद्वदिच्छन्ति सततं प्रजाः ॥ ११९ ॥
संसाराद्दुःखनिर्घोरान्मुच्यन्ते येन देहिनः । भव्यास्तद्दर्शनं सम्यगाराधयितुमर्हसि ॥ १२० ॥
साम्राज्यादपि पद्माभ तदेव बहु मन्यते । नश्यत्येव पुना राज्यं दर्शनं स्थिरसौख्यदम् ॥१२१॥

तदभव्यजुगुप्सातो भीतेन पुरुषोत्तम । न कथंचित्त्वया त्याज्यं नितान्तं तद्धि दुर्लभम् ॥ १२२ ॥
रत्नं पाणितलं प्राप्तं परिभ्रष्टं महोदधौ । उपायेन पुनः केन संगतिं प्रतिपद्यते ॥ १२३ ॥
क्षिप्त्वामृतफलं कूपे महाऽऽपत्तिभयंकरे । परं प्रपद्यते दुःखं पश्चात्तापहतः शिशुः ॥ १२४ ॥
यस्य तत्सदृशं तत्स प्रवदत्त्वनिवारितः । कोह्यस्य जगतः कर्तुं शक्नोति मुखबंधनम् ॥ १२५ ॥
शृण्वताऽपि त्वया तत्तत्स्वार्थनाशनकारणम् । एडेनेव न कर्त्तव्यं हृदये गुणभूषणः ॥ १२६ ॥
तीव्राज्ञोऽपि यथाभूतो जगदर्थावभासनात् । विकारमतनु प्राप्तो भवादित्य इव प्रियः ॥ १२७ ॥
भजस्व प्रस्खलं दानैः प्रीतियोगैर्निजं जनम् । परं च शीलयोगेन मित्रं सद्भावसेवनैः ॥ १२८ ॥
यथोपपन्नमन्नेन समेतमतिथिं गृहम् । साधून् समस्तभावेन प्रणामाभ्यर्चनादिभिः ॥ १२९ ॥
क्षांत्या क्रोधं मृदुत्वेन मानं निर्विषया स्थितम् । माया मार्जवयोगेन धृत्या लोभं तनूकुरु ॥ १३० ॥
सर्वशास्त्रप्रवीणस्य नोपदेशस्तव क्षमः । चापलं हृदयस्येदं त्वत्प्रेमग्रहयोगिनः ॥ १३१ ॥
कृतं वश्यतया किंचित्परिहासेन वा पुनः । मयाऽविनयमीश त्वं समस्तं क्षन्तुमर्हसि ॥ १३२ ॥
एतावद्दर्शनं नूनं भवता सह मे प्रभो । पुनः पुनरतो वच्मि क्षंतव्यं साध्वसाधु वा ॥ १३३ ॥
इत्युक्त्वा पूर्वमेवासाववतीर्णा रथोदरात् । पपात धरणीपृष्ठे तृणोपलसमाकुले ॥ १३४ ॥

धरण्यां पतिता तस्यां मूर्च्छानिश्चेतनीकृता । रराज जानकी यद्वत्पर्यस्ता रत्नसंहतिः ॥१३५॥
नष्टचेष्टां तकां दृष्ट्वा सेनानीरतिदुःखितः । अचिंतयदियं प्राणान् दुष्करं धारयिष्यति ॥ १३६ ॥
अरण्येऽत्र महाभीष्मे व्यालसंघातसंकुले । विदधाति न धीरोऽपि प्रत्याशां जीवितं प्रति ॥१३७॥
मृगाक्षीमेतिकां त्यक्त्वा विपिनेऽस्मिन्ननुत्तमे । स्थानं न तत्प्रपश्यामि यत्र मां शांतिरेष्यति ॥
इतो निर्दयताऽत्युग्रा स्वाम्याज्ञा निश्चिताऽन्यतः । अहो दुःखमहावर्त्तमध्यं प्राप्तोऽस्मि पापकः १३९
धिग्भृत्यतां जगन्निंद्यां यत्किंचन विधायिनीम् । परायत्तीकृतात्मानं क्षुद्रमानवसेविताम् ॥१४०॥
यंत्रचेष्टिततुल्यस्य दुःखैकनिहितात्मनः । भृत्यस्य जीविताद्दूरं वरं कुक्कुरजीवितम् ॥ १४१ ॥
नरेन्द्रशक्तिवश्यः स निंद्यनामा पिशाचवत् । विदधाति न किं भृत्यः किं वा न परिभाषते ॥१४२॥
चित्रचापसमानस्य निःकृत्यगुणधारिणः । नित्यनम्रशरीरस्य निंद्यं भृत्यस्य जीवितम् ॥१४३॥
सत्कारकूटकस्येव पश्चान्निर्वृत्तचेतसः । निर्माल्यवाहिनो धिग्धिग्भृत्यनाम्नोऽसुधारणम् ॥१४४॥
पश्चात्कृतगुरुत्वस्य तोयार्थमपि नामिनः । तुलायंत्रसमानस्य धिग्भृत्यस्याऽसुधारणम् ॥ १४५ ॥
उन्नत्या त्रपया दीप्तया वर्जितस्य निजेच्छया । मा स्म भूज्जन्म भृत्यस्य पुस्तकर्मसमात्मनः१४६
विमानस्यापि मुक्तस्य गत्या गुरुतया समम् । अधस्ताद्गच्छतो नित्यं धिग्भृत्यस्यासुधारणम्१४७

निःसत्त्वस्य महामांसविक्रयं कुर्वतः सदा । निर्मदस्यास्वतंत्रस्य धिग्भृत्यस्यासुधारणम् ॥१४८॥
भृत्यताकरणीयेन कर्मणाऽस्मि वशीकृतः । एतां येन विमुंचामि प्रस्तावेऽप्यत्र दारुणे ॥१४९॥
इति विमृश्य संत्यज्य सीतां धर्मधियं यथा । अयोध्याऽभिमुखोऽयासीत्सेनानीः सत्रपात्मकः ॥
इतराऽपि परिप्राप्तसंज्ञा परमदुःखिता । यूथभ्रष्टेव सारंगी बालाऽऽक्रन्दं समाश्रिता ॥ १५१ ॥
रुदत्याः करुणं तस्याः पुष्पमोक्षापदेशतः । वनस्पतिसमूहेन नूनं रुदितमेव तत् ॥ १५२ ॥
निसर्गरमणीयेन स्वरेण परिदेवनम् । ततोऽसौ कर्तुमारब्धा महाशोकवशीकृता ॥ १५३ ॥
हा पद्मेक्षण हा पद्म हा नरोत्तम हा प्रभो । यच्छ प्रतिवचो देव कुरु साधारणं मम ॥ १५४ ॥
सततं साधुचेष्टस्य सद्गुणस्य सचेतसः । न तेऽस्ति दोषगंधोऽपि महापुरुषतायुजः ॥ १५५ ॥
पुरा स्वयं कृतस्येदं प्राप्तं मे कर्मणः फलम् । अवश्यं परिभोक्तव्यं व्यसनं परमोत्कटम् ॥१५६॥
किं करोतु प्रियोऽपत्यो जनकः पुरुषोत्तमः । किं वा बांधवलोको मे स्वकर्मण्युदयस्थिते॥१५७॥
नूनं जन्मनि पूर्वस्मिन्नसत्पुण्यमुपार्जितम् । मंदभाग्याजनेऽरण्ये दुःखं प्राप्ताऽस्मि यत्परम् १५८
अवर्णवचनं नूनं मया गोष्ठीष्वनुष्ठितम् । यस्योदयेन संप्राप्तमिदं व्यसनमीदृशम् ॥ १५९ ॥
गुरोः समक्षमादाय नूनमन्यत्र जन्मनि । व्रतं मया पुनर्भग्नं यस्येदं फलमीदृशम् ॥ १६० ॥

अथवा परुषैर्वाक्यैः कश्चित्फलवियोपमैः । निर्भर्त्सितो भवेऽन्यस्मिन् जातं यद्दुःखमीदृशम् १६१
अन्यत्र जनने मन्ये पद्मखंडस्थितं मया । चक्राह्वयुगलं भिन्नं स्वामिना रहिताऽस्मि यत् १६२
किं वा सरसि पद्मादिभूषिते रचितालयम् । पुरुषाणामुदाराणां गतिलीलाविलंबकम् ॥ १६३ ॥
जल्पितेन वरस्त्रीणां सौंदर्येण कृतोपमम् । सौमित्रिसौधसच्छायं पद्मारुणमुखक्रमम् ॥ १६४ ॥
वियोजितं भवेऽन्यस्मिन्हंसयुग्मं कुचेष्टया । प्राप्ताऽस्मि वासनं घोरं येनेदक्षं हताशिका ॥१६५॥
गुंजाफलार्द्धवर्णाक्षमन्योन्यार्पितमानसम् । कृष्णागुरुभवात्यन्तघनोद्यद्धूमधूसरम् ॥ १६६ ॥
समारब्धसुखक्रीडं कंटस्थकलनिःस्वनम् । पारापतयुगं पापचेतसा स्यात्पृथक्कृतम् ॥ १६७ ॥
अस्थाने स्थापितं किं वा बद्धं मारितमेव वा । संभावनादिनिर्मुक्तं दुःखमीदृग्गताऽस्मि यत् १६८
वसंतसमये रम्ये किं वा कुसुमितांघ्रिपे । परपुष्टयुगं भिन्नं यस्येदं फलमीदृशम् ॥ १६९ ॥
अथवा श्रमणाः क्षान्ता सद्वृत्ता निर्जितेन्द्रियाः । निंदिता विदुषां वंद्या दुःखं प्राप्ताऽस्मि यन्महत् ॥
सद्भृत्यपरिवारेण शासनानंदकारिणा । कृतसेवा सदा याहं स्थिता स्वर्गसमे गृहे ॥ १७१ ॥
साऽधुना क्षीणपुण्यौघा निर्बंधुग्रहणे वने । दुःखसागरनिर्मग्ना कथं तिष्ठामि पापिका ॥ १७२ ॥
नानारत्नकरोद्योते सत्प्रच्छदपटावृते । शयनीये महारम्ये सर्वोपकरणान्विते ॥ १७३ ॥

वंशात्रिसरिकावीणासंगीतमधुरस्वनैः । असेविषि सुखं निद्रां प्रत्यभूतिस तथा च या ॥ १७४ ॥
अयशोदावनिर्दग्धा साऽहं संप्रति दुःखिनी । प्रधाना रामदेवस्य महिषी परिकीर्त्तिता ॥१७५॥
तिष्ठाम्येकाकिनी कष्टे कान्तारे दुःकृतात्मिका । कीटकर्कशदर्भोग्रग्रावौघाढ्ये महीतले ॥ १७६ ॥
ध्रियन्ते यद्यवाप्येमामवस्थामीदृशीं मयि । ततो वज्रविनिर्माणाः प्राणा नूनमिमे मके ॥ १७७ ॥
अवस्थां च परां प्राप्य शतधा यन्न दीर्यसे । अहो हृदय नास्त्यन्यः सदृशस्तव साहसी ॥१७८॥
किं करोमि क्व गच्छामि कं ब्रवीमि कमाश्रये । कथं तिष्ठामि किं जातमिदं हा मातरीदृशम् १७९
हा पद्म सद्गुणांभोधे हा नारायण भक्तक । हा तात किं न मां वेत्सि मातः किं न रक्षसि॥१८०॥
अहो विद्याधराधीश भ्रातः कुंडलमंडित । दुःखावर्तकृतभ्रान्तिरियं तिष्ठाम्यलक्षणा ॥ १८१ ॥
अपुण्यया मया सार्द्धं पत्या परमसंपदा । कष्टं मह्यं जिनेंद्राणां कृता सद्मसु नार्चना ॥ १८२ ॥
एवं तस्यां समाक्रंदं कुर्वन्त्यां विह्वलात्मनि । राजा कुलिशजंघाख्यस्तं वनान्तरमागतः ॥१८३॥
पौंडरीकपुरः स्वामी गजबंधार्थमागतः । प्रत्यागच्छन्महाभूतिर्गृहीतवरवारणः ॥ १८४ ॥
तस्य शैन्यशिरोजाताः प्लवमानाः पदातयः । नानाशस्त्रकराः कांताः शूरा बद्धासिधेनवः १८५
श्रुत्वा तद्रुदितस्वानं तथाप्यतिमनोहरम् । संशयानाः परित्रस्ताः पदं न परतो ददुः ॥ १८६ ॥

अश्वीयमपि संरुद्धं पुरोभागमवस्थितम् । सार्शङ्करक्तशरं सादिभिः श्रुतनिःस्वनैः ॥ १८७ ॥
कुतोऽत्र भीमेऽतितरामरण्ये । परासुताकारणभूरिसत्त्वे ॥
अयं निनादो रुदितस्य रम्यः । स्त्रैणो नु चित्रं परमं किमेतत् ॥ १८८ ॥
मृगमहिषतरक्षद्वीपिशार्दूललोले । सृमरशरभसिंहे कोलदष्ट्रान्तराले ॥
सुविमलशशिरेखाहारिणी केयमस्मिन् । हृदयहरणदक्षं कक्षमध्ये विरौति ॥१८९॥
सुरवरवनितेयं किन्तु सौधर्मकल्पादवनितलमुपेता पातिता वासवेन ॥
उत जनसुखगीता साऽनुदेवी विधात्री । भुवननिधनहेतोरागता स्यात्कुतोऽपि ॥
इति जनितवितर्कं वर्जिताऽऽत्मीयदेशं । प्रजवसरणयुक्तैर्मूलगैः पूर्यमाणम् ॥
प्रहतबहलतूलं तन्महावर्त्तकल्पं । स्थितमचलमुदारं सैनिकं विस्मयाढ्यम् ॥१९१॥
तुरगमकरवृंदं प्रौढपादातमीनं । विधृतवरकरेणुग्राहजालं सशब्दम् ॥
रविकिरणविषक्तप्रस्फुरत्खड्गवीचिप्रतिभयमभवत्तत्सैन्यमंभोधिकल्पम् ॥ १९२ ॥
इत्यार्षे रविषेणाचार्यप्रोक्ते श्रीपद्मपुराणे सीतानिर्वासनविप्रलापवज्रजंघाभिधानं
नाम सप्तनवतितमं पर्व ॥ ९७ ॥

# अथाष्टनवतितमं पर्व ।

ततः पुरो महाविद्यानिरुद्धामिव जाह्नवीम् । चक्रीभूतां चमूं दृष्ट्वा वज्रजंघः करेणुगः ॥ १ ॥
पप्रच्छासन्नपुरुषान् यूयमेवं कुतः स्थिताः । कुतः केन प्रतीघातो गमनस्य किमाकुलाः ॥ २ ॥
पारंपर्येण ते यावत्पृच्छंति स्म स्थितिकारणम् । तावत्किंचित्समासीदं राजा शुश्राव रोदनम् ॥३॥
जगाद च समस्तेषु लक्षणेषु कृतश्रमः । यस्या रुदितशब्दोऽयं श्रूयते सुमनोहरः ॥ ४ ॥
विशुद्धगर्भरुचा सत्या गर्भिण्या प्रतिरूपया । ध्रुवं पुरुषपद्मस्य भवितव्यं स्त्रियाऽनया ॥ ५ ॥
एवमेतत्कुतो देव संदेहोऽत्र त्वयोदिते । अनेकमद्भुतं कर्म भवता हि पुरेक्षितम् ॥ ६ ॥
एवं तस्य सभृत्यस्य कथा यावत्प्रवर्त्तते । तावदग्रेसरा सीता समीपं सत्त्विनो गताः ॥ ७ ॥
पप्रच्छुः पुरुषा देवि का त्वं निर्मानुषे वने । विरौषि करुणं शोकमसंभाव्यमिदं श्रिता ॥ ८ ॥
न दृश्यंते भवादृश्यो लोकेऽत्राकृतयः शुभाः । दिव्या किमसि किं वाऽन्या काचित्सृष्टिरनुत्तमा ॥
यदीदमीदृशं धत्से वपुराक्लिष्टमुत्तमम् । ततोऽत्यंतं न चालक्ष्यः कोऽयं शोकस्तवापरः ॥ १० ॥
वद कल्याणि कथ्यं चेदिदं नः कौतुकं परम् । दुःखान्तोऽपि च सत्येवं कदाचिदुपजायते ॥११॥

ततस्तान् सुमहाशोकध्वांतीकृतसमस्तदिक् । पुरुषान् सहसा दृष्ट्वा नानाशस्त्रकरोज्ज्वलान् ॥१२॥
सीता त्राससमुत्पन्नपृथुवेपथुसंकुला । दातुमाभरणान्येषां लोलनेत्रा समुद्यता ॥ १३ ॥
तत्वमूढास्ततो भीता जगदुः पुरुषाः पुनः । संत्रासं देवि शोकं च त्यज संश्रय धीरताम् ॥१४॥
किं वा विभूषणैरेभिस्तिष्ठन्तु त्वयि दक्षिणे । भावं योगं प्रपद्यस्व किमर्थमसि विह्वला ॥ १५ ॥
श्रीमानयं परिप्राप्तो वज्रजंघ इति क्षितौ । प्रसिद्धः सकलैर्युक्तो राजधर्मैर्नरोत्तमः ॥ १६ ॥
सम्यग्दर्शनरत्नं यः सादृश्यपरिवर्जितम् । अविनाशमनाधेयमहार्यं सारसौख्यदम् ॥ १७ ॥
शंकादिमलनिर्मुक्तं हेमपर्वतनिश्चलम् । हृदयेन समाधत्ते सचेता भूषणं परम् ॥ १८ ॥
सम्यग्दर्शनमीदृक्षं यस्य साध्वि विराजते । गुणास्तस्य कथं श्लाघ्ये वर्ण्यन्तामस्मदादिभिः १९
जिनशासनतत्त्वज्ञः शरणागतवत्सलः । परोपकारसंसक्तः करुणार्द्रितमानसः ॥ २० ॥
लब्धवर्णो विशुद्धात्मा निंद्यकृत्यनिवृत्तधीः । पितेव रक्षिता लोके दाता भूतहिते रतः ॥ २१ ॥
दीनादीनां विशेषेण मातुष्या अनुपालकः । शुद्धकर्मकरः शत्रुमहीधरमहाशनिः ॥ २२ ॥
शस्त्रशास्त्रकृतश्रांतिरश्रांतिः शांतिकर्मणि । जानात्यन्यकलत्रं च कूपं साजगरं यथा ॥ २३ ॥
धर्मे परममासक्तो भवपातभयात्सदा । सत्यस्थापितसद्वाक्यो बाढं नियमितेंद्रियः ॥ २४ ॥

अस्य देवि गुणान् वक्तुं योऽखिलानभिवांछति । तरितुं स ध्रुवं वष्टि गात्रमात्रेण सागरम् ॥२५॥
यावदेषा कथा तेषां वर्तते चित्तबंधिनी । तावन्नृपः परिप्राप्तः किंचिदद्भुतसंगतः ॥ २६ ॥
अवतीर्य करेणोश्च योग्यं विनयमुद्वहन् । निसर्गशुद्धया दृष्टया पश्यन्नेवमभाषत ॥ २७ ॥
अहो वज्रमयो नूनं पुरुषः सुविचेतनः । यतस्त्यजन्निहारण्ये त्वां न दीर्णः सहस्रधा ॥ २८ ॥
ब्रूहि कारणमेतस्या अवस्थायाः शुभाशये । विश्वस्ता भव मा भैषीर्गर्भायासं हि मा कृथा॥२९॥
ततः कथयितुं कृच्छ्राद्विरताऽपि सती क्षणम् । पुना रुरोद शोकोरुचक्रपीडितमानसा ॥ ३० ॥
मुहुस्ततोऽनुयुक्ता सा राज्ञा मधुरभाषिणा । धृत्वा मन्युं जगौ क्लिष्टहंसगद्गदनिःस्वना ॥३१॥
विज्ञातुं यदि ते वांछा राजन् यच्छ ततो मनः । कथा मे मंदभाग्याया इयमत्यंतदीर्घिका॥३२॥
सुता जनकराजस्य प्रभामंडलसोदरा । स्नुषा दशरथस्याहं सीता पद्माभपत्निका ॥ ३३ ॥
केकय्या वरदानेन भरताय निजं पदम् । दत्त्वाऽनरण्यपुत्रोऽसौ तपस्विपदमाश्रयत् ॥ ३४ ॥
रामलक्ष्मणयोः सार्कं मया प्रस्थितमायतम् । जातं श्रुतं त्वया नूनं पुण्यचेष्टितसंगतम् ॥ ३५ ॥
हृताऽस्मि राक्षसेन्द्रेण पत्युः सुग्रीवसंगमे । जाते भुक्तवती वार्तां संप्राप्यैकादशेऽहनि ॥ ३६ ॥
आकाशगामिभिर्यानैरुत्तीर्य मकरालयम् । जित्वा दशमुखं युद्धे पत्याऽस्मि पुनराहृता ॥ ३७ ॥

राज्यपंकं परित्यज्य भरतो भरतोपमः । श्रामण्यं परमाश्रित्य सिद्धिं धूतरजा ययौ ।। ३८ ।।
अपत्यशोकानिर्दग्धा प्रव्रज्यासौ च केकया । देवी कृत्वा तपः सम्यग्देवलोकमुपागता ।। ३९ ।।
महीतले विमर्यादो जनोऽयं दुष्टमानसः । ब्रवीति परिवादं मे शंकया परिवर्जितः ।। ४० ।।
रावणः परमः प्राज्ञो भूत्वाऽन्यस्त्रियमग्रहीत् । तामानीय पुना रामः सेवते धर्मशास्त्रवित् ।।४१।।
यया ह्यवस्थया राजा वर्त्तते दृढनिश्चयः । सैवाऽस्माकमपि क्षेमी नूनं दोषो न विद्यते ।। ४२ ।।
साऽहं गर्भान्विता जाता कृशांगा वसुधातले । चिंतयंती जिनेंद्राणां करोम्यभ्यर्चनामिति ।।४३।।
ततो भर्त्ता मया सार्द्धमुद्युक्तश्चैत्यवंदने । जिनेंद्रातिशयस्थानेष्वत्यंतविभवान्वितः ।। ४४ ।।
अगदीत् प्रथमं सीते गत्वाऽष्टापदपर्वतम् । ऋषभं भुवनानन्दं प्रणंस्यावः कृतार्चनौ ।। ४५ ।।
अस्यां ततो विनीतायां जन्मभूमिप्रतिष्ठिता । प्रतिमा ऋषभादीनां नमस्यावः सुसंपदा ।। ४६ ।।
कांपिल्ये विमलं नंतुं यास्यावो भावतस्ततः । धर्मं रत्नपुरे चैव धर्मसद्भावदेशिनम् ।। ४७ ।।
श्रावस्त्यां शंभवं शुभ्रं चंपायां वासुपूज्यकम् । पुष्पदंतं च काकंद्यां कौशांब्यां पद्मतेजसम् ।।४८।।
चंद्राभं चंद्रपुर्यां च शीतलं भद्रिकावनौ । मिथिलायां ततो मल्लिं नमस्कृत्य जिनेश्वरम् ।।४९।।
वाराणस्यां सुपार्श्वं च श्रेयांसं सिंहनिःस्वने । शांतिं कुंथुमरं चैव पुरे हास्तिनि नामनि ।।५०।।

कुशाग्रनगरे देवि सर्वज्ञं मुनिसुव्रतम् । धर्मचक्रमिदं यस्य ज्वलत्यद्यापि सूज्ज्वलम् ॥ ५१ ॥
ततोऽन्यानपि वैदेहि जिनातिशययोगतः । स्थानान्यतिपवित्राणि प्रथितान्यखिलेनसः ॥ ५२ ॥
त्रिदशासुरगंधर्वैः स्तुतानि प्रणतानि च । वंदावहे समस्तानि तत्परायणमानसौ ॥ ५३ ॥
पुष्पकाग्रं समारुह्य विलंघ्य गगनं द्रुतम् । मया सह जिनानर्चे सुमेरुशिखरेष्वपि ॥ ५४ ॥
भद्रशालवनोद्भूतैस्तथा नंदनसंभवैः । पुष्पैः सौमनसीयैश्च जिनेंद्रानर्चय प्रिये ॥ ५५ ॥
कृत्रिमाकृत्रिमान्यस्मिंश्चैत्यानभ्यर्च्य विष्टपे । प्रवंद्य चागमिष्यावः साकेतां दयिते पुनः ॥ ५६ ॥
एकोऽपि हि नमस्कारो भावेन विहितोऽर्हतः । मोचयत्येनसो जंतुर्जन्मान्तरकृतादपि ॥ ५७ ॥
ममापि परमा कांते तुष्टिर्मनसि वर्त्तते । चैत्यालयान्महापुण्यान्पश्यामीति त्वदाशया ॥ ५८ ॥
काले पूर्वं तमच्छन्ने भूते निःकिंचने जने । जगत्ताराधिपेनेव येनेशेन विराजितम् ॥ ५९ ॥
प्रजानां पतिरेको यो ज्येष्ठस्त्रैलोक्यवंदितः । भव्यानां भवभीरूणां मोक्षमार्गोपदेशकः ॥ ६० ॥
यस्याष्टगुणमैश्वर्यं नानातिशयशोभितम् । अजस्रपरमाश्चर्यं सुरासुरमनोहरम् ॥ ६१ ॥
जीवप्रभृतितत्वानि विशुद्धानि प्रदर्श्य यः । भव्यानां कृतकर्त्तव्यो निर्वाणं परमं गतः ॥ ६२ ॥
सर्वरत्नमयं दिव्यमालयं चक्रवर्त्तिना । निर्माप्य यस्य कैलासे प्रतिमा स्थापिता प्रभोः ॥ ६३ ॥

सा भास्करप्रतीकाशा पंचचापशतोच्छ्रिता । प्रतिमा प्रतिरूपस्य दिव्या यस्य विराजते ॥ ६४ ॥
यस्याद्यापि महापूजा गंधर्वामरकिंनरैः । अप्सरोनागदैत्याद्यैः क्रियते यत्नतः सदा ॥ ६५ ॥
अनंतः परमः सिद्धः शिवः सर्वगतोऽमलः । अर्हंस्त्रैलोक्यपूजार्हः यः स्वयंभूः स्वयंप्रभुः ॥ ६६ ॥
तं कदा नु प्रभुं गत्वा कैलासे परमाचले । ऋषभं देवमभ्यर्च्य स्तोष्यामि सहितस्त्वया ॥ ६७ ॥
प्रस्थितस्य मया साकमेवं धृत्याऽतितुंगया । प्राप्ता जनपरीवादवार्त्ता दावाग्निदुःसहा ॥ ६८ ॥
चिंतितं मे ततो भर्त्रा प्रेक्षापूर्वविधायिना । लोकः स्वभाववक्रोऽयं नान्यथा याति वश्यताम् ॥६९॥
वरं प्रियजने त्यक्ते मृत्युरप्यनुसेवितः । यशसो नोपघातोऽयं कल्पान्तमवस्थितः ॥ ७० ॥
साहं जनपरीवादाद्विदुषा तेन बिभ्यता । संत्यक्ता परमेऽरण्ये दोषेण परिवर्जिता ॥ ७१ ॥
विशुद्धकुलजातस्य क्षत्रियस्य सुचेतसः । विज्ञातसर्वशास्त्रस्य भवत्येवेदमीहितम् ॥ ७२ ॥
एवं निर्वाससंबंधं वृत्तान्तं स्वं निवेद्य सा । दीना रोदितुमारब्धा शोकज्वलनतापिता ॥ ७३ ॥
तामश्रुजलपूर्णास्यां क्षितिरेणुसमुत्क्षिताम् । दृष्ट्वा कुलिशजंघोऽपि चुक्षोभोत्तमसत्त्वभृत् ॥ ७४ ॥
ततो जनकराजस्य तनयामधिगम्य ताम् । समीपीभूय राजाऽसौ समाश्वासयदादृतः ॥ ७५ ॥
शोकं विरह मा रोदीर्जिनशासनभाविता । किमार्त्तं कुरुषे ध्यानं देवि दुःखस्य वर्द्धनम् ॥ ७६ ॥

किं न वैदेहि ते ज्ञाता लोकेऽत्र स्थितिरीदृशी । अनित्याशरणैकत्वान्यत्वादिपरिभाविनी ॥७७॥
मिथ्यादृष्टिर्वधूर्यद्वद्यच्छोचसि मुहुर्मुहुः । श्रुतार्थैवासि साधुभ्यः सततं चारुभावने ॥ ७८ ॥
ननु जीवेन किं दुःखं न प्राप्तं मूढचेतसा । भवभ्रमणसक्तेन मोक्षमार्गमजानता ॥ ७९ ॥
संयोगा विप्रयोगाश्च भवसागरवर्त्तिना । क्लेशावर्त्तनिमग्नेव प्राप्ता जीवेन भूरिशः ॥ ८० ॥
खजलस्थलचारेण तिर्यग्योनिषु दुःसहम् । दुःखं जीवेन संप्राप्तं वर्षाशीतातपादिजम् ॥ ८१ ॥
अपमानपरीवादविरहाक्रोशनादिजम् । मनुष्यत्वेऽपि किं नाम दुःखं जीवेन नार्जितम् ॥ ८२ ॥
कुत्सिताचारसंभूतं ततोत्कृष्टर्द्धिदृष्टिजम् । च्युतिजं च महादुःखं संप्राप्तं त्रिदशेष्वपि ॥ ८३ ॥
नरकेषु तु यद्दुःखं तत्कथं कथ्यतां शुभे । शीतोष्णक्षारशस्त्रौघव्यालान्योन्यसमुद्भवम् ॥ ८४ ॥
विप्रयोगाः समुत्कण्ठा व्याधयो दुःखमृत्यवः । शोकाश्चानंतशः प्राप्ता भवे जीवेन मैथिलि ॥८५॥
तिर्यगूर्द्ध्वमधस्ताद्वा स्थानं तन्नास्ति विष्टपे । जीवेन यत्र न प्राप्ता जन्ममृत्युजरादयः ॥ ८६ ॥
स्वकर्मवायुना शश्वद्भ्राम्यता भवसागरे । मनुष्यत्वेऽपि जीवेन प्राप्ता स्त्रीतनुरीदृशी ॥ ८७ ॥
कर्मभिस्तव युक्तायाः परिशेषैः शुभाशुभैः । अभिरामो गुणैः रामः पतिर्जातः शुभोदयः ॥८८॥
पुण्योदयं समं तेन परिप्राप्य सुखोदयम् । अपुण्योदयतो दुःखं पुनः प्राप्तासि दुःसहम् ॥८९॥

लंकाद्वीपेऽसि यत्प्राप्ता पत्या विद्याभृतां हृता । एकादशे दिवे भुक्तिं मुक्तिमाल्यानुलेपना ॥९०॥
प्रतिपक्षे हते तस्मिन् प्रत्यानीता ततः सती । संप्राप्ताऽसि पुनः सौख्यं बलदेवप्रसादतः ॥ ९१ ॥
अशुभोदयतो भूयो गर्भाधानसमन्विता । विना दोषेण मुक्तासि परिवादोरगक्षता ॥ ९२ ॥
यः साधुकुसुमागारं प्रदीपयति दुर्गिरा । अत्यन्तदारुणः पापो वह्निना दह्यातामसौ ॥ ९३ ॥
परमा देवि धन्या त्वमहो सुश्लाघ्यचेष्टिता । चैत्यालयनमस्कारदोहदं यदसि श्रिता ॥ ९४ ॥
अद्यापि पुण्यमस्त्येव तव सच्छीलशालिनि । दृष्टासि यन्मयाऽरण्ये प्राप्तेन द्विपकारणम् ॥ ९५ ॥
इंद्रवंशप्रसूतस्य शुभैकचरितात्मनः । राज्ञो द्विरदवाहस्य सुबंधुमहिषीभवः ॥ ९६ ॥
सुतोऽहं वज्रजंघाख्यः पुंडरीकपुराधिपः । त्वं मे धर्मविधानेन ज्यायसी गुणिनि स्वसा ॥९७॥
एह्युत्तिष्ठोत्तमे यावः पुरं तामसमुत्सृज । राजपुत्रि कृतेऽप्यस्मिन् कार्ये किंचिन्न सिद्ध्यति ॥९८॥
स्थितायास्तत्र ते पद्मः पश्चात्तापसमाकुलः । पुनरन्वेषणं साध्वि करिष्यति न संशयः ॥ ९९ ॥
परिभ्रष्टं प्रमादेन महार्घगुणमुज्ज्वलम् । रत्नं को न पुनर्विद्वानन्विष्यति महादरः ॥ १०० ॥
सांत्व्यमाना ततस्तेन धर्मसारकृतात्मना । धृतिं जगाम वैदेही परं प्राप्येव बांधवम् ॥ १०१ ॥
प्रशशंस च तं स त्वं भ्राता मे परमः शुभः । यशस्वी सुमतिः सत्त्वी शूरः सज्जनवत्सलः॥१०२॥

अधिगतसम्यग्दृष्टिर्गृहीतपरमार्थबोधिपूतात्मा। साधुरिव भावितात्मा व्रतगुणशीलार्थमुद्युक्तः १०३

चरितं सत्पुरुषस्य व्यपगतदोषं परोपकारनियुक्तम् ।
क्षपयति कस्य न शोकं जिनमतनिरतप्रगाढचेतस्कस्य ॥ १०४ ॥
नूनं पूर्वत्र भवे सहोदरस्त्वं च बभूवावितथप्रीतः ।
हरसि तमो मे येन स्फीतं रविवद्विशुद्धात्मा ॥ १०५ ॥

इत्यार्षे रविषेणाचार्यप्रोक्ते पद्मपुराणे सीतासमाश्वासनं नामाष्टनवतिमं पर्व ॥ ९८ ॥

---

# अथ नवनवतितमं पर्व ।

अथ क्षणादुपानीतां सुस्तंभां भक्तिभासुराम् । विमानसदृशीं रम्यां सत्प्रमाणप्रतिष्ठिताम् ॥ १ ॥
वरदर्पणलंबूषचंद्रचामरधारिणीम् । हारबुद्बुदसंयुक्तां विचित्रांशुकशालिनीम् ॥ २ ॥
प्रसारितमहामाल्यां चित्रकर्मविराजिताम् । सुगवाक्षां समारूढा शिबिकां जनकात्मजा ॥ ३ ॥
ऋद्ध्या परमया युक्ता महासैनिकमध्यगा । प्रतस्थे कर्मवैचित्र्यं चिन्तयन्ती सविस्मया ॥ ४ ॥

दिनैस्त्रिभिरतिक्रम्य तदरण्यं सुभीषणम् । पुंडरीकसुराष्ट्रं सा प्रविष्टा साधुचेष्टिता ॥ ५ ॥
समस्तसस्यसंपत्तिस्तिरोहितमहीतलम् । ग्रामैः कुक्कुटसंपात्यैः पुराकारैर्विराजितम् ॥ ६ ॥
पुरैर्नाकपुरच्छायैरासेचनकदर्शनम् । पश्यंती विषयं श्रीमदुद्यानादिविभूषितम् ॥ ७ ॥
मान्ये भगवतिश्लाघ्ये दर्शनेन वयं तव । विधूतकिल्बिषा जाता कृतार्था भवसंगिनः ॥ ८ ॥
एवं महत्तरप्रष्ठैः स्तूयमाना कुटुंबिभिः । सोपायनैर्नृपच्छायैर्वंद्यमाना च भूरिशः ॥ ९ ॥
रचितार्घादिसन्मानैः पार्थिवैश्च सुरोत्तमैः । कृतप्रणाममत्युग्रं शस्यमाना पदे पदे ॥ १० ॥
अनुक्रमेण संप्राप पौंडरीकपुरांतिकम् । मनोभिराममत्यंतं पौरलोकानिषेवितम् ॥ ११ ॥
वैदेह्यागमनं श्रुत्वा स्वाम्यादेशेन सत्वरम् । उपशोभा पुरे चक्रे परमाधिकृतैर्जनैः ॥ १२ ॥
परितः कृतसत्काराः रथ्याः सत्रिकचत्वराः । सुगंधिभिर्जलैः सिक्ताः कृताः पुष्पतिरोहिताः ॥ १३ ॥
इन्द्रचापसमानानि तोरणान्युच्छ्रितानि च । कलशाः स्थापिता द्वारे संपूर्णाः पल्लवानने ॥ १४ ॥
विलसद्ध्वजमालाढ्यं समुद्गतशुभस्वरम् । कर्त्तुं नृत्तमिवाऽऽसक्तं नगरं तत्प्रमोदवत् ॥ १५ ॥
गोपुरेण समं शालः समारूढमहाजनः । हर्षादिव परां वृद्धिं प्राप कोलाहलान्विताः ॥ १६ ॥
अन्तर्बहिश्च तत्स्थानं सीतादर्शनकांक्षिभिः । जंगमत्वमिति प्राप्तं जनौघैः प्रचलात्मकैः ॥ १७ ॥

ततो विविधवादित्रनादेनाऽऽशाभिपूरिणा । शंखस्वनविमिश्रेण बंदिनिःस्वानयोगिना ॥ १८ ॥
विस्मयव्याप्तचित्तेन पौरेण कृतवीक्षणा । विवेश नगरं सीता लक्ष्मीरिव सुरालयम् ॥ १९ ॥
उद्यानेन परिक्षिप्तं दीर्घिकाकृतमंडनम् । मेरुकूटसमाकारं बलदेवसमच्छविम् ॥ २० ॥
वज्रजंघगृहान्तस्थं प्रासादमतिसुन्दरम् । पूज्यमाना नृपस्त्रीभिः प्रविष्टा जनकात्मजा ॥ २१ ॥
बिभ्रता परमं तोषं वज्रजंघेन शूरिणा । भ्रात्रा भामंडलेनेव पूज्यमाना सुचेतसा ॥ २२ ॥
जय जीवाभिनंदेति बर्द्धस्वाऽऽज्ञापयेति च । ईशाने दैवते पूज्ये स्वामिनीति च शब्दिता ॥२३॥
आज्ञां प्रतीक्षता मूर्ध्ना संभ्रमं दधता परम् । प्रबद्धांजलिना सार्धं परिवर्गेण चारुणा ॥ २४ ॥
अवसत्तत्र वैदेही समुद्भूतमनीषिता । कथाभिर्धर्मसक्ताभिः पद्मभूभिश्च संततम् ॥ २५ ॥
प्राभृतं यावदायाति सामंतेभ्यो महीपतेः । दत्तेन तेन वैदेही धर्मकार्यमसेवत ॥ २६ ॥
असावपि कृतांतास्यस्तप्यमानमना भृशम् । स्थूरीपृष्ठान् परिश्रान्तान् खेदवाननुपालयन् ॥२७॥
समंतान्नृपलोकेन पूर्यमाणस्त्वरावता । जगाम रामदेवस्य समीपं विनताननः ॥ २८ ॥
अब्रवीच्च प्रभो ! सीता गर्भमात्रसहायिका । मया त्वद्वचनाद्भीमे कान्तारे स्थापिता नृप ॥२९॥
नानातिघोरनिःस्वानश्वापदौघनिषेविते । वेतालाकारदुःप्रेक्षद्रुमजालांधकारिते ॥ ३० ॥

निसर्गद्वेषसंसक्तयुद्धव्याघ्रमहिषाधिके । निबद्धदुंदुभिध्वाने मरुता कोटरश्रिता ॥ ३१ ॥
कंदरोदरसंमूर्च्छासिंहनादप्रतिध्वनौ । दारुक्रकचजस्वानभीमसुप्तशयुस्वने ॥ ३२ ॥
नृत्यच्चरिक्षविध्वस्तसारंगास्त्रस्तपुत्रके । धातकीस्तवकाले हि शोणिताशंकिसिंहके ॥ ३३ ॥
कृतांतस्यापि भीभारसमुद्भवनपंडिते । अरण्ये देव त्वद्वाक्याद्वैदेही रहिता मया ॥ ३४ ॥
अश्रुदुर्दिनवक्राया दीपिताया महाशुचा । संदेशं देव सीताया निबोध कथयाम्यहम् ॥ ३५ ॥
त्वामाह मैथिली देवी यदीच्छस्यात्मने हितम् । जिनेंद्रे मा मुचो भक्तिं यथा त्यक्ताऽहमीदृशी ३६
स्नेहानुरागसंसक्तो मानी यो मां विमुंचति । नूनं जिनेऽप्यसौ भक्तिं परित्यजति पार्थिवः ॥३७॥
वाग्बली यस्य यत्किंचित्परिवादं जनः खलः । अविचार्य वदत्येव तद्विचार्य मनीषिणा ॥ ३८॥
निर्दोषाया जनो दोषं न तथा मम भाषते । तथा सद्धर्मरत्नस्य सम्यग्बोधबहिः कृतः ॥ ३९ ॥
को दोषो यदहं त्यक्ता भीषणे विजने वने । सम्यग्दर्शनसंशुद्धिं राम न त्यक्तुमर्हसि ॥ ४० ॥
एतदेकभवे दुःखं वियुक्तस्य मया सह । सम्यग्दर्शनहानौ तु दुःखं जन्मनि जन्मनि ॥ ४१ ॥
नरस्य सुलभं लोके निधिस्त्रीवाहनादिकम् । सम्यग्दर्शनरत्नं तु साम्राज्यादपि दुर्लभम् ॥४२॥
राज्ये विधाय पापानि पतनं नरके ध्रुवम् । उर्द्धं गमनमेकेन सम्यग्दर्शनतेजसा ॥ ४३ ॥

सम्यग्दर्शनरत्नेन यस्यात्मा कृतभूषणः । लोकद्वितयमप्यस्य कृतार्थत्वमुपाश्नुते ॥ ४४ ॥
संदिष्टमिति जानक्या स्नेहनिर्भरचित्तया । श्रुत्वा कस्य न वीरस्य जायते मतिरुत्तमा ॥ ४५ ॥
स्वभावाद्भीरुका भीरुर्वीक्षमाणा सुभीरुभिः । विभीषिकाभिरुग्राभिर्भीमाभिः पौंस्निनोऽप्यलम् ४६
भासुरोग्रमहाव्यालजालकालभयंकरे । सामिशुष्कसरोमज्जच्छूत्कुर्वन्मत्तवारणे ॥ ४७ ॥
कर्कन्धुकंटकाश्लिष्टपुच्छार्त्तचमरावले । अलीकसलिलश्रद्धाढौकमानाकुलैणके ॥ ४८ ॥
कपिकच्छरजःसंगनितांतचलमर्कटे । प्रलंबकेसरच्छन्नवक्त्रविक्रंदवृक्षके ॥ ४९ ॥
तृष्णातुरवृकग्रामलसद्रसनपल्लवे । गुंजाकोशीस्फुटाच्छोटताड़नक्रुद्धभोगिनि ॥ ५० ॥
परुषानिलसंचारक्रूरक्रंदश्रितांघ्रिपे । क्षण संभूतवातूलसमुद्धतरजोदले ॥ ५१ ॥
महाजगरसंचारचूर्णितानेकपादपे । उद्वृत्तमत्तनागेन्द्रध्वनिभीमासुधारिणि ॥ ५२ ॥
वराहवाहिनीखातसरःक्रोडसुकर्कशे । कंटकावटवल्मीककूटसंकटभूतले ॥ ५३ ॥
शुष्कपुष्पद्रवोत्ताम्यद्भ्राम्यद्भर्मार्त्तगर्मुति । कुप्यासंलिलनिर्मुक्तसूचीशतकरालिते ॥ ५४ ॥
एवंविध महारण्ये रहिता देव जानकी । मन्ये न क्षणमप्येकं प्राणान् धारयितुं क्षमा ॥ ५५ ॥
ततः सेनापतेर्वाक्यं श्रुत्वा रौद्रमरेरपि । विषादमगमद्रामस्तेनैव विदितात्मकम् ॥ ५६ ॥

अचिंतयच्च किं त्वेतत्खलवाक्यवशात्मना । मयका मूढचित्तेन कृतमत्यन्तनिंदितम् ।। ५७ ।।
तादृशी राजपुत्री क्व क्वचेदं दुःखमीदृशम् । इति संचिंत्य यातोऽसौ मूर्छां मुकुलितेक्षणः ।।५८।।
चिराच्च प्रतिकारेण प्राप्य संज्ञां सुदुःखितः । विप्रलापं परं चक्रे दयितागतमानसः ।। ५९ ।।
हा त्रिवर्णसरोजाक्षि हा विशुद्धगुणेधुधे । हा वक्त्रजिततारेशे हा पद्मांतरकोमले ।। ६० ।।
अयि वैदेहि वैदेहि देहि देहि वचो द्रुतम् । जानास्येव हि मे चित्तं त्वदृतेऽत्यन्तकातरम् ।।६१।।
उपमानविनिर्मुक्तशीलधारिणि हारिणि । हितप्रियसमालापे पापवर्जितमानसे ।। ६२ ।।
अपराधविनिर्मुक्ता निर्घृणेन मयोज्झिता । प्रतिपन्नाऽसि कामाशां मम मानसवासिनि ।। ६३ ।।
महाप्रतिभयेऽरण्ये क्रूरश्वापदसंकटे । कथं तिष्ठसि संत्यक्ता देवि भोगविवर्जिता ।। ६४ ।।
मदासक्तचकोराक्षि लावण्यजलदीर्घिके । त्रपाविनयसंपन्ने हा देवि क्व गतासि मे ।। ६५ ।।
निःश्वासाऽऽमोदजालेन बद्धान् झंकारसंगतान् । वादयंती कराब्जेन भ्रमरान् खेदमाप्स्यति ।।६६।।
क्व यास्यसि विचेतस्का यूथभ्रष्टा मृगी यथा । एकाकिनी वने भीमे चिंतितेऽपि सुदुःसहे ।। ६७ ।।
अब्जगर्भमृदू कांतौ पादुकौ चारुलक्ष्मणौ । कथं तव सहिष्येते संगं कर्कशया भुवा ।। ६८ ।।
कृत्याकृत्यविवेकेन सुदूरं मुक्तमानसैः । गृहीता किमसि म्लेच्छैः पल्लीं नीता सुभीषणाम् ।।६९।।

पूर्वादपि प्रिये दुःखादिदं दुःखमनुत्तमम् । प्राप्तासि साध्वि कांतारे दारुणेन मयोज्झिता ॥७०॥
रात्रौ तमसि निर्भेद्ये सुप्ता खिन्नशरीरिका । वनरेणुपरीतांगा किमाक्रान्ताऽसि हस्तिना ॥७१॥
गृध्रर्क्षभल्लगोमायुशशोलूकसमाकुले । निर्मार्गे परमारण्ये श्रियसे दुःखिता कथम् ॥ ७२ ॥
दंष्ट्राकरालवक्त्रेण धूतांगेन महाक्षुधा । किं व्याघ्रेणोपनीताऽसि प्रियेऽवस्थामशब्दिताम् ॥७३॥
किं वा विलोलजिह्वेन विलसत्केसरालिना । सिंहेनास्यथ वा सत्त्वशाली किं योषितीदृशः ॥७४॥
ज्वालाकलापिनोत्तुंगपादपाभावकारिणा । दावेन किन्तु नीताऽसि देव्यवस्थामशोभनाम् ॥७५॥
अथवा ज्योतिरीशस्य करैरत्यन्तदुःसहैः । जंतुधर्मं किमाप्ताऽसि छायासर्पणविह्वला ॥ ७६ ॥
नृशंसेऽपि मयि स्वांतं कृत्वा शोभनशीलिका । विदीर्णहृदया किन्तु मर्त्यधर्मसमाश्रिता ॥ ७७ ॥
वातिरत्नजटिभ्यां मे सदृशः को नु सांप्रतम् । प्रापयिष्यति सीताया वार्तां कुशलशंसिनीम् ॥७८॥
हा प्रिये हा महाशीले हा मनस्विनि हा शुभे । क्व तिष्ठसि क्व याताऽसि किं करोषि न वेत्सि किम् ॥
अहो कृतांतवक्त्रासौ सत्यमेव त्वया प्रिया । त्यक्तातिदारुणेऽरण्ये कथमेवं करिष्यसि ॥ ८० ॥
ब्रूहि ब्रूहि न सा कांता त्यक्ता तव मयेतरम् । वक्त्रेणानेन चंद्रेण क्षरतेवामृतोत्करम् ॥ ८१ ॥
इत्युक्तोऽपत्रपाभारनतवक्त्रो गतप्रभः । प्रतिपत्तिविनिर्मुक्तः सेनानीराकुलोऽभवत् ॥ ८२ ॥

स्थिते निर्वचने तस्मिन् ध्यात्वा सीतां सुदुःखिताम् । पुनर्मूर्च्छां गतो रामः कृच्छ्रात्संज्ञां च लंभितः ॥
लक्ष्मणोऽत्रांतरे प्राप्तो जगादान्तःशुचं स्पृशन् । आकुलोऽसि किमित्येव देव धैर्यं समाश्रय॥८४॥
फलं पूर्वार्जितस्येदं कर्मणः समुपागतम् । सकलस्यापि लोकस्य राजपुत्र्या न केवलम् ॥ ८५ ॥
प्राप्तव्यं येन यल्लोके दुःखं कल्याणमेव वा । स तं स्वयमवाप्नोति कुतश्चिद्व्यापदेशतः ॥ ८६ ॥
आकाशमपि नीतः सन् वनं वा श्वापदाकुलम् । मूर्धानं वा महीध्रस्य पुण्येन स्वेन रक्ष्यते॥८७॥
देव सीतापरित्यागश्रवणाद्भरतावनौ । अकरोदास्पदं दुःखं प्राकृतीयमनःस्वपि ॥ ८८ ॥
प्रजानां दुःखतप्तानां विलीनानां समंततः । अश्रुधारापदेशेन हृदयं न्यगलन्निव ॥ ८९ ॥
परिदेवनमेवं च चक्रेत्यन्तसमाकुलः । हिमाहतप्रभांभोजखंडसम्मितवक्त्रकः ॥ ९० ॥
हा दुष्टजनवाक्याग्निप्रदीपितशरीरिके । गुणशस्यसमुद्भूतिभूमिभूतसुभावने ॥ ९१ ॥
राजपुत्रि क यातासि सुकुमारांघ्रिपल्लवे । शीलाद्रिधरणक्षोणि सीते सौम्ये मनस्विनि ॥ ९२ ॥
खलवाक्यतुषारेण मातः पश्य समंततः । गुणराट् विसिनी दग्धा राजहंसनिषेविता ॥ ९३ ॥
सुभद्रासदृशी भद्रा सर्वाचारविचक्षणा । सुखासिकेव लोकस्य मूर्त्ता क्वासि वरे गता ॥ ९४ ॥
भास्करेण विना का द्यौः का निशा शशिना विना । स्त्रीरत्नेन विना तेन साकेता वाऽपि कीदृशी॥९५

वेणुवीणामृदंगादिनिःस्वानपरिवर्जिता । नगरी देव संजाता करुणाक्रंदपूरिता ॥ ९६ ॥
रथ्याग्रुद्यानदेशेषु कांतारेषु सरित्सु च । त्रिकचत्त्वरभागेषु भवनेष्वापणेषु च ॥ ९७ ॥
संतताभिपतन्तीभिरश्रुधाराभिरुद्गतः । पंकः समस्तलोकस्य घनकालभवोपमः ॥ ९८ ॥
वाष्पगद्गदया वाचा कृच्छ्रेण समुदाहरन् । गुणप्रसूनवर्षेण परोक्षामपि जानकीम् ॥ ९९॥
पूजयत्यखिलो लोकस्तदेकगतमानसः । सा हि सर्वसतीमूर्ध्नि पदं चक्रे गुणोज्ज्वला ॥ १०० ॥
समुत्कंठा पराधीनैः स्वयं देव्याऽनुपालितैः । छेकैरपि परं दीनं रुदितं धूतविग्रहैः ॥ १०१ ॥
तदेवं गुणसंबंधं समस्तजनचेतसः । कृते कस्य न जानक्या वर्तते शुगनुत्तरा ॥ १०२ ॥
किन्तु कोविद नोपायः पश्चात्तापो मनीषिते । इति संचिंत्य धीरत्वमवलंबितुमर्हसि ॥ १०३ ॥
इति लक्ष्मणवाक्येन पद्मनाभः प्रसादितः । शोकं किंचित्परित्यज्य कर्त्तव्ये निदधे मनः १०४
प्रेतकर्मणि जानक्याः सादरं जनमादिशत् । द्राग् भद्रकलशं चैव समाहूय जगाविति ॥१०५॥
समादिष्टोऽसि वैदेह्या पूर्वं भद्र यथाविधम् । तेनैव विधिना दानं तामुद्दिश्य प्रदीयताम्॥१०६॥
यथाऽऽज्ञापयसीत्युक्त्वा कोषाध्यक्षः सुमानसाः । अर्थिनामीप्सितं द्रव्यं नवमासानशिश्रणत् ॥
सहस्रैरष्टभिः स्त्रीणां सेव्यमानोऽपि संततम् । वैदेहीं मनसा रामो निमेषमपि नात्यजत् ॥१०८॥

सीताशब्दमयस्तस्य समालापः सदाऽभवत् । सर्वं ददर्श वैदेहीं तद्गुणाकृष्टमानसः ॥ १०९ ॥
क्षितिरेणुपरीतांगां गिरिगह्वरवर्त्तिनीम् । अपश्यज्जानकीं स्वप्ने नेत्रांबुकृतदुर्दिनाम् ॥ ११० ॥
मनसा च सशल्येन गाढशोको विबुद्धवान् । अचिंतयत्ससूत्कारो वाष्पाच्छादितलोचनः १११
कष्टं लोकांतरस्थाऽपि सीता सुंदरचेष्टिता । न विमुंचति मां साध्वी सानुबंधा हितोद्यता ११२
स्वैरं स्वैरं ततः सीताशोके विरलतामिते । परिशिष्टवरस्त्रीभिः पद्मो धृतिमुपागमत् ॥ ११३ ॥
तौ शीरचक्रदिव्यास्त्रौ परमन्यायसंगतौ । प्रीत्याऽनंतरया युक्तौ प्रशस्तगुणसागरौ ॥ ११४ ॥
पालयंतौ महीं सम्यङ्निम्नगापतिमेखलाम् । सौधर्मैशानदेवेंद्राविव रेजतुरुत्कटम् ॥ ११५ ॥

तौ तत्र कोशलायां सुरलोकसमानमानवायां राजन् ।
परमान् प्राप्तौ भोगान् सुप्रभौ पुरुषोत्तमौ यथा पुरुषेंद्रौ ॥ ११६ ॥
सुकृतसुकर्मोदयतः सकलजनानंददानकोविदचरितौ ।
सुखसागरे निमग्नौ रविभावज्ञातकालमवतस्थाते ॥ ११७ ॥

श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे रामशोकाभिधानं नाम नवनवतितमं पर्व ॥ ९९ ॥

# अथ शतं पर्व ।

एवं तावदिदं जातमिदमन्यन्नरेश्वर । शृणु वक्ष्यामि तं वृत्तं लवणांकुशगोचरम् ॥ १ ॥
अथ सर्वप्रजापुण्यैर्गृहीतायाः इवामलैः । अधत्त पांडुतामंगयष्टिर्जनकजन्मनः ॥ २ ॥
श्यामतासमवष्टब्धचारुचूचुकचूलिकैः । पयोधरघटौ पुत्रपानार्थमिव मुद्रितौ ॥ ३ ॥
स्तन्यार्थमानने न्यस्ता दुग्धसिंधुरिवायता । सुस्निग्धधवला दृष्टिर्माधुर्यमदधात्परम् ॥ ४ ॥
सर्वमंगलसंघातैर्गात्रयष्टिरधिष्ठिता । अमंदायतकल्याणा गौरवोद्भवनादिव ॥ ५ ॥
मंदं मंदं प्रयच्छंत्याः क्रमं निर्मलकुट्टिमे । प्रतिबिंबांबुजेन क्ष्मा पूर्वसेवामिवाकरोत् ॥ ६ ॥
सुतिकालकृता कांक्षा कपोलप्रतिबिंबिता । समलक्ष्यत लक्ष्मीर्वा शय्याऽपाश्रयपुत्रिका ॥ ७ ॥
रात्रौ सौधोपयातायाः व्यंशुके स्तनमंडले । श्वेतच्छत्रमिवाधारि संक्रांतं शशिमंडलम् ॥ ८ ॥
वासवेश्मनि सुप्ताया अपि प्रचलबाहुकाः । चित्रचामरधारिण्यश्चामराणि व्यधूनयन् ॥ ९ ॥
स्वप्ने पयोजिनीपुत्रपुटं वारिभिरादरात् । अभिषेको महानागैरकारि परिमंडितैः ॥ १० ॥
असकृज्जयनिःस्वानं व्रजंत्याः प्रतिबुद्धताम् । सचंद्रशालिका शालभंजिका अपि चक्रिरे ॥ ११ ॥

परिवारजनाह्वानेष्वादिशेति स संभ्रमाः । अशरीरा विनिश्चेरुर्वाचः परमकोमलाः ॥ १२ ॥
क्रीडयाऽपि कृतं सेहे नाज्ञाभंगं मनस्विनी । सुक्षिप्रेष्वपि कार्येषु भ्रूरभ्राम्यत्सविभ्रमम् ॥ १३ ॥
यथेच्छं विद्यमानेऽपि मणिदर्पणसन्निधौ । मुखमुत्खातखड्गाग्रे जातं व्यसनमीक्षितुम् ॥ १४ ॥
समुत्सारितवीणाद्या नारीजनविरोधिनः । श्रोत्रयोरसुखायन्त कार्मुकध्वनयः परम् ॥ १५ ॥
चक्षुः पंजरसिंहेषु जगाम परमां रतिम् । ननाम कथमप्यंगमुत्तमं स्तंभितं यथा ॥ १६ ॥
पूर्णेथ नवमे मासि चंद्रे श्रवणसंगते । श्रावणस्य दिने देवी पौर्णमास्यां सुमंगला ॥ १७ ॥
सर्वलक्षणसंपूर्णा पूर्णचन्द्रनिभानना । सुखं सुखकरात्मानमसूत सुतयुग्मकम् ॥ १८ ॥
नृत्यमध्य इवाभूवंस्तयोरुद्गतयोः प्रजाः । भेरीपटहनिःस्वाना जाताः शंखस्वनान्विताः ॥ १९ ॥
उन्मत्तमर्त्यलोकाभश्चारुसंपत्समन्वितः । स्वसृप्रीत्या नरेंद्रेण जनितः परमोत्सवः ॥ २० ॥
अनंगलवणाभिख्यामेकोऽमंडयदेतयोः । मदनांकुशनामान्यः सद्भूतार्थनियोगतः ॥ २१ ॥
ततः क्रमेण तौ वृद्धिं बालकौ व्रजतस्तदा । जननीहृदयानंदौ प्रवीरपुरुषांकुरौ ॥ २२ ॥
रक्षार्थं सर्षपकणा विन्यस्ता मस्तके तयोः । समुन्मिषत्प्रतापाग्निस्फुलिंगा इव रेजिरे ॥ २३ ॥
वपुर्गौरोचनापंकपिंजरं परिवारिताम् । समभिव्यज्यमानेन सहजेनेव तेजसा ॥ २४ ॥

विकटा हाटकाबद्धवैयाघ्रनखपंक्तिका । रेजे दर्पांकुरालीव समुद्भेदमिता हृदि ॥ २५ ॥
आद्यं जल्पितमव्यक्तं सर्वलोकमनोहरम् । बभूव जन्मपुण्याहसत्यग्रहणसन्निभम् ॥ २६ ॥
मुग्धस्मितानि रम्याणि कुसुमानीव सर्वतः । हृदयानि समाकर्षन् कुलानीव मधुभृताम् ॥ २७ ॥
जननीक्षीरसेकोत्थविलासहसितैरिव । जातं दशनकैवर्कपत्रकं लब्धमंडनम् ॥ २८ ॥
धात्रीकरांगुलीलग्नौ पंचषाणि पदानि तौ । एवंभूतौ प्रयच्छंतौ मनः कस्य न जह्रतुः ॥ २९ ॥
पुत्रकौ तादृशैर्वीक्ष्य चारुक्रीडनकारिणौ । शोकहेतुं विसस्मार समस्तं जनकात्मजा ॥ ३० ॥
वर्द्धमानौ च तौ कांतौ निसर्गोदात्तविभ्रमौ । देहावस्थां परिप्राप्तौ विद्यासंग्रहणोचिताम् ॥३१॥
ततस्तत्पुण्ययोगेन सिद्धार्थो नाम विश्रुतः । शुद्धात्मा क्षुल्लकः प्राप वज्रजंघस्य मंदिरम् ॥३२॥
संध्यात्रयमवंध्यं यो महाविद्यापराक्रमः । मंदरोरसि वंदित्वा जिनानेति पदं क्षणात् ॥ ३३ ॥
प्रशांतवदनो धीरो लुंचरंजितमस्तकः । साधुभावनचेतस्को वस्त्रमात्रपरिग्रहः ॥ ३४ ॥
उत्तमाणुव्रतो नानागुणशोभनभूषितः । जिनशासनतत्त्वज्ञः कलाजलधिपारगः ॥ ३५ ॥
अंशुकेनोपवीतेन सितेन प्रचलात्मना । मृणालकांडजालेन नागेन्द्र इव मंथरः ॥ ३६ ॥
करंजजालिकां कक्षे कृत्वा प्रियसखीमिव । मनोज्ञममृतास्वादां धर्मवृद्धिरिति ब्रुवन् ॥ ३७ ॥

गृहे गृहे शनैर्भिक्षां पर्यटन् विधिसंगतः । गृहोत्तमं समासीदद्यत्र तिष्ठति जानकी ॥ ३८ ॥
जिनशासनदेवीव सा मनोहरभावना । दृष्ट्वा क्षुल्लकमुत्तीर्य संभ्रान्ता नवमालिका ॥ ३९ ॥
उपगत्य समाधाय करवारिरुहद्वयम् । इच्छाकारादिना सम्यक् संपूज्य विधिकोविदा ॥ ४० ॥
विशिष्टेनान्नपानेन समतर्पयदादरात् । जिनेन्द्रशासनाऽऽसक्तान् सा हि पश्यति बांधवान् ॥४१॥
निर्वर्तितान्यकर्त्तव्यः सविश्रब्धः सुखं स्थितः । पृष्टो जगाद सीतायै स्ववार्त्तां भ्रमणादिकम् ४२
महोपचारविनयप्रयोगहृतमानसः । क्षुल्लकः परितुष्टात्मा ददर्श लवणांकुशौ ॥ ४३ ॥
महानिमित्तमष्टांगं ज्ञात्वा सुश्राविकामसौ । संभाषयितुमप्राक्षीद्वार्त्तां पुत्रकसंगताम् ॥ ४४ ॥
तया वेदितवृत्तान्तो बाष्पदुर्दिननेत्रया । क्षणं शोकसमाक्रान्तः क्षुल्लको दुःखितोऽभवत् ॥ ४५ ॥
उवाच च न देवि त्वं विधातुं शोकमर्हसि । यस्या देव कुमाराभौ प्रशस्तौ बालकाविमौ ॥ ४६ ॥
अथ तेन घनप्रेमप्रवीणकृतचेतसा । अचिराच्छस्त्रशास्त्राणि ग्राहितौ लवणांकुशौ ॥ ४७ ॥
ज्ञानविज्ञानसंपन्नौ कलागुणविशारदौ । दिव्यास्त्रक्षेपसंहारविषयातिविचक्षणौ ॥ ४८ ॥
बिभ्रतुस्तौ परां लक्ष्मीं महापुण्यानुभावतः । ध्वस्तावरणसंबंधौ निधानकलशाविव ॥ ४९ ॥
न हि कश्चिद्गुरोः खेदः शिष्ये शक्तिसमन्विते । सुखेनैव प्रदर्श्यन्ते भावाः सूर्येण नेत्रिणे ॥५०॥

मजतां संस्तवं पूर्वं गुणानामागमः सुखम् । खेदोऽवतरतां कोऽसौ हंसानां मानसं ह्रदम् ॥५१॥
उपदेशं ददत्पात्रे गुरुर्याति कृतार्थताम् । अनर्थकः समुद्योतो रवेः कौशिकगोचरः ॥ ५२ ॥
स्फुरद्यशः प्रतापाभ्यामाक्रान्तभुवनावथ । अभिरामदुरालोकौ शीततिग्मकराविव ॥ ५३ ॥
व्यक्ततेजोबलावग्निमारुताविव संगतौ । शिलादृढवपुःस्कंधौ हिमविंध्याचलाविव ॥ ५४ ॥
महावृषौ यथा कांतयुगसंयोजनोचितौ । धर्माश्रमाविवात्यंतरमणीयौ सुखावहौ ॥ ५५ ॥
पूर्वापरककुब्भागाविव लोकाभिलाक्षितौ । उदयास्तमयाधाने सर्वतेजस्विनां क्षमौ ॥ ५६ ॥
अभ्यर्णार्णवसंरोधसंकटे कुकुटीरके । तेजसः परिनिंदन्तौ छायामपि पराङ्मुखीम् ॥ ५७ ॥
अपि पादनखस्थेन प्रतिबिंबेन लज्जितौ । केशानामपि भंगेन प्राप्नुवंतावशं परम् ॥ ५८ ॥
चूडामणिगतेनापि छत्रेणानेन सत्रपौ । अपि दर्पणदृष्टेन प्रतिपुंसोपतापिनौ ॥ ५९ ॥
अंभोधरधृतेनाऽपि धनुषा कृतकोपनौ । अनानमद्भिरालेख्यपार्थिवैरपि खेदितौ ॥ ६० ॥
स्वल्पमंडलसंतोषसंगतस्य रवेरपि । अनादरेण पश्यन्तौ तेजसः प्रतिघातकम् ॥ ६१ ॥
भिंदंतौ बलिनं वायुमध्यवीक्षितविग्रहम् । हिमवत्यपि सामर्षौ चमरीवालवीजिते ॥ ६२ ॥
शंखैः सलिलनाथानामपि खेदितमानसौ । प्रचेतसमपीशानममृष्यंतावुदन्वताम् ॥ ६३ ॥

सच्छत्रानपि निश्छायान्कुर्वाणौ धरणीक्षितः । मुखेन मधु मुंचंतौ प्रसन्नौ सत्सुसेवितौ ॥ ६४ ॥
दुष्टभूपालवंशानामप्यनासन्नवर्तिनाम् । कुर्वाणावूष्मणा ग्लानिं संप्राप्तसहजन्मना ॥ ६५ ॥
शस्त्रसंस्तवनश्याममुद्वहंतौ करोदरम् । शेषराजप्रतापाग्निपरिनिर्वापणादिव ॥ ६६ ॥
धीरैः कार्मुकनिःस्वानैर्योग्यकाले समुद्गतैः । आलपंताविवासन्नाभोगाः सकलदिग्वधूः ॥ ६७ ॥
ईदृशो लवणस्तादृगीदृशस्तादृशोऽकुशः । इत्यलं विकसच्छब्दप्रादुर्भावौ शुभोदयौ ॥ ६८ ॥
नवयौवनसंपन्नौ महासुंदरचेष्टितौ । प्रकाशतां परिप्राप्तौ धरण्यां लवणांकुशौ ॥ ६९ ॥
अभिनंद्यौ समस्तस्य लोकस्योत्सुकताकरौ । पुण्येन घटितात्मानौ सुखकारणदर्शनौ ॥ ७० ॥
युवत्यास्याः कुमुद्वत्याः शरत्पूर्णेन्दुतां गतौ । वैदेहीहृदयानंदमयजंगममंदरौ ॥ ७१ ॥
कुमारादित्यसंकाशौ पुंडरीकनिभेक्षणौ । द्वीपदेवकुमाराभौ श्रीवत्सांकितवक्षसौ ॥ ७२ ॥
अनंतविक्रमाधारौ भवांभोधितटस्थितौ । परस्परमहाप्रेमबंधनप्रवणीकृतौ ॥ ७३ ॥
मनोहरणसंसक्तौ धर्ममार्गस्थितावपि । वक्रतापरिनिर्मुक्तौ कोटिस्थितगुणावपि ॥ ७४ ॥
विजित्य तेजसा भानुं स्थितौ कांत्या निशाकरम् । ओजसा त्रिदशाधीशं गांभीर्येण महोदधिम् ७५
मेरुं स्थिरत्वयोगेन क्षमाधर्मेण मेदिनीम् । शौर्येण मेघनिःस्वानं गत्या मारुतनंदनम् ॥ ७६ ॥

गृह्णीयातामिषुं मुक्तमपि वेगाद्दूरतः । मकरग्राहनक्राद्यैः कृतक्रीडौ महाजले ॥ ७७ ॥
श्रमसौख्यमसंप्राप्तौ मत्तैरपि महाद्विपैः । भयादिव तनुच्छायात्स्खलितार्ककरोत्करौ ॥ ७८ ॥
धर्मतः सम्मितौ साधोरर्ककीर्त्तिश्च सत्त्वतः । सम्यग्दर्शनतोऽगस्य दानाच्छ्रीविजयस्य च ॥७९॥
अयोध्यावभिमानेन साहसान्मधुकैटभौ । महाहवसमुद्योगादिन्द्रजिन्मेघवाहनौ ॥ ८० ॥
गुरुशुश्रूषणोद्युक्तौ जिनेश्वरकथारतौ । शत्रूणां जनितत्रासौ नाममात्रश्रुतेरपि ॥ ८१ ॥

एवं तौ गुणरत्नपर्वतवरौ विज्ञानपातालिनौ
लक्ष्मीश्रीद्युतिकीर्त्तिकांतिनिलयौ चित्तद्विपेंद्रांकुशौ ।
सौराज्यालयभारधारणदृढस्तंभौ महीभास्करौ
संवृत्तौ लवणांकुशौ नरवरौ चित्रैककर्माकरौ ॥ ८२ ॥
धीरौ प्रपौंडनगरे रेमाते तौ यथेप्सितं नरनागौ ।
लज्जितरवितेजस्कौ हलधरनारायणौ यथायोग्यम् ॥ ८३ ॥

इति श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे लवणांकुशोद्भवाभिधानं नाम शतसंख्यं पर्व ॥ १०० ॥

# अथैकाधिकशतं पर्व ।

ततो दारक्रियायोग्यौ दृष्ट्वा तावतिसुंदरौ । वज्रजंघो मतिं चक्रे कन्यान्वेषणतत्पराम् ॥ १ ॥
लक्ष्मीदेव्याः समुत्पन्नां शशिचूलाभिधानकाम् । द्वात्रिंशत्कन्यकायुक्तामाद्यस्याकल्पयत्सुताम् ॥२॥
विवाहमंगलं द्रष्टुमुभयोर्युगपन्नृपः । अभिलष्यन् द्वितीयस्य कन्यां योग्यां समन्ततः ॥ ३ ॥
अपश्यन्मनसा खेदं परिप्राप्त इवोत्तमम् । सस्मार सहसा सद्यः कृतार्थत्वमिवाव्रजत् ॥ ४ ॥
पृथिवीनगरेशस्य राज्ञोऽस्ति प्रवरांगजा । शुद्धा कनकमालाख्याऽमृतवत्यंगसंभवा ॥ ५ ॥
रजनीपतिलेखेव सर्वलोकमलिमम्लुचा । श्रियं जयति या पद्मवती पद्मविवर्जिता ॥ ६ ॥
या साम्यं शशिचूलायाः समाश्रितवती शुभा । इति संचिंत्य तद्धेतोर्दूतं प्रेषितवान्नृपः ॥ ७ ॥
पृथिवीपुरमासाद्य स क्रमेण विचक्षणः । जगाद कृतसंमानो राजानं पृथुसंज्ञगम् ॥ ८ ॥
तावदेवेक्षितो दृष्टया दूतो राज्ञा विशुद्धया । कन्यायाचनसंबंधं यावद् गृह्णाति नो वचः ॥९॥
उवाच वचनं दूतः काचिदप्यस्ति दूषिता । यतो भवान् पराधीनः परवाक्यानुवादकृत् ॥१०॥
निरुष्माणश्चलात्मानो बहुभंगसमाकुलाः । जलौघा इव नीयंते यथेष्टं हि भवद्विधाः ॥ ११ ॥

कर्तुं तथापि ते युक्तो निग्रहः पापभाषिणः । परेण प्रेरितं केन यंत्रं हंतृ विहन्यते ॥ १२ ॥
किंचित्कर्तुमशक्तस्य रजःपातसमात्मनः । अपाकरणमात्रेण मया ते दूत सत्कृतम् ॥ १३ ॥
कुलं शीलं धनं रूपं समानत्वं बलं वयः । देशो विद्यागमश्चेति यद्यप्युक्ता वरे गुणाः ॥ १४ ॥
तथापि तेषु सर्वेषु संतोऽभिजनमेककम् । वरिष्ठमनुरुध्यं ते शेषेषु तु मनःसमम् ॥ १५ ॥
स च न ज्ञायते यस्य वरस्य प्रथमो गुणः । कथं प्रदीयते तस्मै कन्या मान्या समंततः ॥ १६ ॥
निस्त्रपं भाषमाणाय तस्मै सुप्रतिकूलनम् । दातुं युक्तं कुमारीं न कुमारीं तु ददाम्यहम् ॥ १७ ॥
इत्येकान्तपरिध्वस्तवचनो निरुपायकः । दूतः श्रीवज्रजंघाय गत्वाऽवस्थां न्यवेदयत् ॥ १८ ॥
ततो गत्वार्धमध्वानं स्वयमेव प्रपन्नवान् । अयाचत महादूतवदनेन पृथुं पुनः ॥ १९ ॥
अलब्ध्वाऽसौ ततः कन्यां तथापि जनितादरः । पृथोर्ध्वंसयितुं देशं क्रोधनुन्नः समुद्यतः ॥२०॥
पृथुदेशावधेः पाता नाम्ना व्याघ्ररथो नृपः । वज्रजंघेन संग्रामे जित्वा बंधनमाहृतः ॥ २१ ॥
ज्ञात्वा व्याघ्ररथं बद्धं सामंतं सुमहाबलम् । देशं विनाशयंतं च वज्रजंघं समुद्यतम् ॥ २२ ॥
पृथुः सहायताहेतोः पोदनाधिपतिं नृपम् । मित्रमाह्वाययामास यावत्परमसैनिकम् ॥ २३ ॥
तावत्कुलिशजंघेन पौंडरीकपुरं द्रुतम् । समाह्वाययितुं पुत्रान्प्रहितो लेखवाहकः ॥ २४ ॥

पितुराज्ञां समाकर्ण्य राजपुत्रास्त्वरान्विताः । भेरीशंखादिनिःस्वानं सन्नाहार्थमदापयन् ॥ २५ ॥
ततः कोलाहलस्तुंगो महान् संक्षोभकारणः । पौंडरीकपुरे जातो घूर्णमानार्णवोपमः ॥ २६ ॥
तावदश्रुतपूर्वं तं श्रुत्वा सन्नाहनिःस्वतम् । किमेतदिति पार्श्वस्थानप्राष्टां लवणांकुशौ ॥ २७ ॥
स्वनिमित्तं ततः श्रुत्वा वृत्तांतं तत्समंततः । वैदेहीनंदनौ गंतुमुद्यतौ समरार्थिनौ ॥ २८ ॥
अतित्वरापरीतौ तौ पराभूत्युद्भवासहौ । अपि नासहतां यानमभिव्यक्तमहाद्युती ॥ २९ ॥
तौ वारयितुमुद्युक्ता वज्रजंघस्य सूनवः । सर्वमन्तःपुरं चैव परिवर्गश्च यत्नतः ॥ ३० ॥
अपकर्णिततद्वाक्यौ जानकी वीक्ष्य पुत्रकौ । जगाद तनयस्नेहपरिद्रावितमानसा ॥ ३१ ॥
बालकौ नैष युद्धस्य भवतोः समयः समे । न हि वत्सौ नियुज्येते महारथधुरामुखे ॥ ३२ ॥
ऊचतुस्तौ त्वया मातः किमेतदिति भाषितम् । किमत्र वृद्धकैः कार्यं वीरभोज्या वसुंधरा॥३३॥
कियता देहभारेण ज्वलनस्य प्रयोजनम् । दिधक्षतो महाकक्षं स्वभावेनेह कारणम् ॥ ३४ ॥
एवमुद्गतवाक्यौ तौ तनयौ वीक्ष्य जानकी । बाष्पं मिश्ररसोत्पन्नं नेत्रयोः किंचिदाश्रयत् ॥३५॥
सुस्नातौ तौ कृताहारौ ततोऽलंकृतविग्रहौ । प्रणम्य प्रयतौ सिद्धान् वपुषा मनसा गिरा ॥३६॥
प्रणिपत्य सवित्रीं च समस्तविधिपंडितौ । उपयातावगारस्य बहिः सत्तममंगलैः ॥ ३७ ॥

रथौ ततः समारुह्य परमौ जविवाजिनौ । संपूर्णौ विविधैरस्त्रैरुपरि प्रस्थितौ पृथोः ॥ ३८ ॥
तौ महासैन्यसंपन्नौ चापन्यस्तसहायकौ । मूर्त्येव संगतिं प्राप्तौ समुद्योगपराक्रमौ ॥ ३९ ॥
परमोदारचेतस्कौ पुरुसंग्रामकौतुकौ । पंचभिर्दिवसैः प्राप्तौ वज्रजंघं महोदयौ ॥ ४० ॥
ततः शत्रुबलं श्रुत्वा परमोद्योगमंतिकम् । निरैन्महाबलांतस्थः पृथिवीनगरात्पृथुः ॥ ४१ ॥
भ्रातरः सुहृदः पुत्रा मातुला मातुलांगजाः । एकपात्रभुजोऽन्ये च परमप्रीतिसंगताः ॥ ४२ ॥
सुह्मांगा वंगमगधप्रभृतिक्षितिगोचराः । समंतेन महीपालाः प्रस्थिताःसुमहाबलाः ॥ ४३ ॥
रथाश्वनागपादाताः कटकेन समावृताः । वज्रजंघं प्रति क्रुद्धाः प्रययुस्ते सुतेजसः ॥ ४४ ॥
रथेभतुरगस्थानं श्रुत्वा तूर्यस्वनान्वितम् । सामंता वज्रजंघीयाः सन्नद्धा योद्धुमुद्यताः ॥ ४५ ॥
प्रत्यासन्नं समायाने सेनाऽस्य द्वितये ततः । परानीकं महोत्साहौ प्रविष्टौ लवणांकुशौ ॥ ४६ ॥
अतिक्षिप्रपरावर्त्तौ तावुदाररुषाविव । आरेभाते परिक्रीडां परसैन्यं महाह्रदे ॥ ४७ ॥
इतस्ततश्च तौ दृष्टादृष्टौ विद्युल्लतोपमौ । दुरालक्ष्यत्वमापन्नौ परासोढपराक्रमौ ॥ ४८ ॥
गृह्णन्तौ संदधानौ वा मुंचंतौ वा शिलीमुखान् । नादृश्येतामदृश्यंत केवलं निहताः परे ॥ ४९ ॥
विभिन्नैः विशिखैः क्रूरैः पतितैः सह वाहनैः । महीतलं समाक्रांतं कृतमत्यन्तदुर्गमम् ॥ ५० ॥

निमेषेण पराभग्नं सैन्यमुन्मत्तसन्निभम् । द्विपयूथं परिश्रान्तैः सिंहवित्रासितं यथा ॥ ५१ ॥
ततोऽसौ क्षणमात्रेण पृथुराजस्य वाहिनी । लवणांकुशसूर्येषुमयूखैः परिशोषिता ॥ ५२ ॥
कुमारयोस्तयोरिच्छामंतरेण भयार्दिताः । अर्कतूलसमूहाभा नष्टा शेषा यथा ककुप् ॥ ५३ ॥
असहायो विषण्णात्मा पृथुर्भंगपथे स्थितः । अनुधाव्य कुमाराभ्यां सचापाभ्यामितीरितः ॥५४॥
नरखेट पृथो व्यर्थं क्वाद्यापि प्रपलाप्यते । एतौ तावागतावावामज्ञातकुलशीलकौ ॥ ५५ ॥
अज्ञातकुलशीलाभ्यामावाभ्यां त्वं ततोऽन्यथा । पलायनमिदं कुर्वन् कथं न त्रपसेऽधुना ॥५६॥
ज्ञापयावोऽधुनात्मीये कुलशीले शिलीमुखैः । अवधानपरस्तिष्ठ बलाद्वा स्थाप्यसेऽथवा ॥ ५७ ॥
इत्युक्ते विनिवृत्त्यासौ पृथुराह कृतांजलिः । अज्ञानजनितं दोषं वीरौ मे क्षन्तुमर्हथ ॥ ५८ ॥
माहात्म्यं भवदीयं मे नाऽऽयातं मतिगोचरम् । भास्करीयं यथा तेजः कुमुदप्रचयोदरम् ॥५९॥
ईदृगेव हि धीराणां कुलशीलनिवेदनम् । शस्यते न तु भारत्या ताद्धि संदेहसंगतम् ॥ ६० ॥
अरण्यदाहशक्तस्य पावकस्य न को जनः । ज्वलनादेव संभूतिं मूढोऽपि प्रतिपद्यते ॥ ६१ ॥
भवंतौ परमौ धीरौ महाकुलसमुद्भवौ । अस्माकं स्वामिनौ प्राप्तौ यथेष्टसुखदायिनौ ॥ ६२ ॥
एवं प्रशस्यमानौ तौ कुमारौ नतमस्तकौ । जातौ निर्वासिताशेषकोपौ शांतमनोमुखौ ॥ ६३ ॥

वज्रजंघप्रधानेषु ततः प्राप्तेषु राजसु । ससाक्षिकाऽभवत्प्रीतिः पृथुना सह वीरयोः ॥ ६४ ॥
प्रणाममात्रतः प्रीता जायंते मानशालिनः । नोन्मूलयंति नद्योघा वेतसान् प्रणतात्मकान् ॥६५॥
ततस्तौ सुमहाभूत्या पृथुना पृथिवीपुरम् । प्रवेशितौ समस्तस्य जनस्यानंदकारिणौ ॥ ६६ ॥
मदनांकुशवीरस्य पृथुना परिकल्पिता । कन्या कनकमालाऽसौ महाविभवसंगता ॥ ६७ ॥
अत्र नीत्वा निशामेकां करणीयविचक्षणौ । निर्गतौ नगरीं जेतुं समस्तां पृथिवीमिमाम् ॥६८॥
सुह्मांगमगधैर्वंगैः पोदनेशादिभिस्तथा । कृतौ लोकाक्षनगरं गंतुमेतौ समुद्यतौ ॥ ६९ ॥
आक्रामंतौ सुखं तस्य संबद्धान् विषयान् बहून् । अभ्यर्णत्वं परिप्राप्तौ तौ महासाधनान्वितौ ७०
कुबेरकान्तनामानं राजानं तत्र मानिनम् । समवक्षोभतां नागं पक्षाविव गरुन्मतः ॥ ७१ ॥
चतुरंगाकुले भीमे परमे समरांगणे । जित्वा कुबेरकांतं तौ पूर्णमानबलौ भृशम् ॥ ७२ ॥
सहस्रैर्नरनाथानामावृतौ वश्यतां गतैः । कृच्छ्राधिगमने पार्नलंपाकविषयं गतौ ॥ ७३ ॥
एककर्णं विनिर्जित्य राजानं तत्र पुष्कलम् । गतौ मार्गानुकूलत्वान्नरेंद्रौ विजयस्थलीम् ॥ ७४ ॥
तत्र भ्रातृशतं जित्वा समालोकनमात्रतः । गतौ गंगां समुत्तीर्य कैलासस्योत्तरां दिशम् ॥७५॥
तत्र नंदनचारूणां देशानां कृतसंगमौ । पूजमानौ नरश्रेष्ठैर्नानोपायनपाणिभिः ॥ ७६ ॥

भाषकुंतलकालांबुनंदिनंदनसिंहलान् । शलभाननलांश्चौलान्भीमान् भूतरवादिकान् ॥ ७७ ॥
नृपान् वश्यत्वमानीय सिंधोः कूलं परं गतौ । परार्णवतटांतस्थान् चक्रतुः प्रणतान्नृपान् ॥७८॥
पुरखेटमटंबेन्द्रा विषयादीश्वराश्च ये । वशत्वे स्थापितास्ताभ्यां कांश्चित्तान् कीर्त्तयामि ते ॥७९॥
एते जनपदाः केचिदार्या म्लेच्छास्तथा परे । विद्यमानद्वयाः केचिद्विविधाचारसंमताः ॥ ८० ॥
भीरवो यवनाः कक्षाश्चारवस्त्रिजटा नटाः । शककेरलनेपाला मालवारुलशर्वराः ॥ ८१ ॥
वृषाणवैद्यकाश्मीरा हिंडिबावष्टवर्वराः । त्रिशिरः पारशैलाश्च गौशीलोसीनरात्मकाः ॥ ८२ ॥
सूर्यारकाः सनर्ताश्च खशा विंध्याः शिखापदाः । मेखलाः शूरसेनाश्च बाल्हीकोलूककोसलाः ८३
दरीगांधारसौवीराः पुरीकौबेरकोहराः । अंध्रकालकलिंगाद्या नानाभाषा पृथग्गुणाः ॥ ८४ ॥
विचित्ररत्नवस्त्राद्या बहुपादपजातयः । नानाकरसमायुक्ता हेमादिवसुशालिनः ॥ ८५ ॥
देशानामेवमादीनां स्वामिनः समराजिरे । जिताः केचिद्द्रताः केचित्प्रतापादेव वश्यताम् ॥८६॥
ते महाविभवैर्युक्ता देशभाजोऽनुरागिणः । लवणांकुशयोरिच्छां कुर्वाणा बभ्रमुर्महीम् ॥ ८७ ॥
प्रसाद्य पृथिवीमेतामथ तौ पुरुषोत्तमौ । नानाराजसहस्राणां महतामुपरि स्थितौ ॥ ८८ ॥
रक्षन्तौ विषयान्सम्यङ्नानाचारुकथारतौ । पौंडरीकपुरं तेन प्रस्थितौ पुरुसम्मदौ ॥ ८९ ॥

राष्ट्राद्याधिकृतैः पूजां प्राप्यमाणौ च भूयसीम् । समीपीभावतां प्राप्तौ पुंडरीकस्य पार्थिवैः ॥९०॥
ततः सप्तमभूपृष्ठं प्रासादस्य समाश्रिता । वृता परमनारीभिः सुखासनपरिग्रहा ॥ ९१ ॥
तरलच्छातजीमूतपरिधूसरमुत्थितम् । रजःपटलमद्राक्षीदप्राक्षीच्च सखीजनम् ॥ ९२ ॥
किमिदं दृश्यते सख्यो दिग्याक्रमणचंचलम् । ऊचुस्ता देवि सैन्यस्य रजश्चक्रामिदं भवेत् ॥ ९३ ॥
तथा हि पश्य मध्येऽस्य ज्ञायते स्वच्छवारिणः । अश्वीयं मकराणां वा प्लवमानकदंबकम् ॥९४॥
नूनं स्वामिनि सिद्धार्थौ कुमारावागताविमौ । तथा ह्येतौ प्रदृश्येते तावेव भुवनोत्तमौ ॥ ९५ ॥
आसीदेवं कथा यावत्सीतादेव्या मनोहरा । तावदग्रेसराः प्राप्ता नरा इष्टनिवेदिनः ॥ ९६ ॥
उपशोभा ततः पृथ्वी समस्तां नगरे कृता । लोकेनादरयुक्तेन विभ्रता तोषमुत्तमम् ॥ ९७ ॥
प्राकारशिखरावल्यामुच्छ्रिता विमलध्वजाः । मार्गदेशाः कृता दिव्यतोरणासंगसुंदराः ॥ ९८ ॥
आगुल्फं पूरितो राजमार्गः पुष्पैः सुगंधिभिः । चारुवंदनमालाभिः शोभमानः पदे पदे ॥९९॥
स्थापिता द्वारदेशेषु कलशाः पल्लवाननाः । पदवस्त्रादिभिः शोभा कृता चापणवर्त्मनि ॥१००॥
विद्याधरैः कृतं देवैराहोस्वित्पद्मया स्वयम् । पौंडरीकपुरं जातमयोध्यासमदर्शनम् ॥ १०१ ॥
दृष्ट्वा संप्रविशंतौ तौ महाविभवसंगतौ । आसीन्नगरनारीणां लोको दुःशक्यवर्णनः ॥ १०२ ॥

आरात्पुत्रौ समालोक्य कृतकृत्यावुपागतौ । निममज्जेव वैदेही सिद्धावमृतवारिणि ॥ १०३ ॥
विरचितकरपुटकमलौ जननीमुपगम्य सादरौ परमम् ।
नेमतुरवनतशिरसौ सैन्यरजोधूसरौ वीरौ ॥ १०४ ॥
तनयस्नेहप्रवणा पद्मप्रमदा सुतौ परिष्वज्य ।
करतलकृतपरमर्शा शिरसि निनिक्षोत्तमानंदा ॥ १०५ ॥
जननीं जनितौ पुनरभिनंद्य परं प्रसादमानयत्या ।
रविचन्द्राविव लोकव्यवहारकरौ स्थितौ योग्यम् ॥ १०६ ॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते श्रीपद्मपुराणे लवणांकुशदिग्विजयकीर्त्तनं नामैकाधिकशतं पर्व ॥ १०१ ॥

---

# अथ द्व्युत्तरशतं पर्व ।

एवं तौ परमैश्वर्यं प्राप्तावुत्तममानवौ । स्थितावाज्ञां प्रयच्छन्तावुन्नतानां महीभृताम् ॥ १ ॥
तदा कृतांतवक्त्रं तु नारदः परिपृष्टवान् । जानकीत्यजनोद्देशं दुःखी भ्राम्यन् गवेषकः ॥ २ ॥

दर्शनेऽवस्थितौ वीरौ प्राप ताभ्यां च पूजितः । आसनादिप्रदानेन गृहस्थमुनिवेषभृत् ॥ ३ ॥
ततः सुखं समासीनः परमं तोषमुद्वहन् । अब्रवीत्तावबद्धारः कृतस्निग्धनिरीक्षणः ॥ ४ ॥
रामलक्ष्मणयोर्लक्ष्मीर्यादृशी नरनाथयोः । तादृशी सर्वथा भूयादचिराद्भवतोरपि ॥ ५ ॥
ततस्तावूचतुः कौ तौ भगवन् रामलक्ष्मणौ । कीदृग्गुणसमाचारौ कस्य वा कुलसंभवौ ॥ ६ ॥
ततो जगाववद्धारः कृत्वा विस्मितमानसम् । स्थिरमूर्त्तिः क्षणं स्थित्वा भ्रामयन् करपल्लवम् ॥७॥
भुजाभ्यामुत्क्षिपेन्मेरुं प्रतेरन्निम्नगापतिम् । नरो न तग्गुणान् वक्तुं समर्थः कश्चिदेतयोः ॥ ८ ॥
अनंतेनाऽपि कालेन वदनैरन्तवर्जितैः । सकलोऽपि न लोकोऽयं तयोर्वक्तुं गुणान् क्षमः ॥ ९ ॥
इदं तद्गुणसंप्रश्नप्रतीकारसमाकुलम् । हृदयं कंपमानं मे पश्यतां जातकौतुकौ ॥ १० ॥
तथापि भवतोर्वाक्यात्स्थूलोच्चयसमाश्रयात् । वदामि तद्गुणं किंचिच्छृणुतं पुण्यवर्द्धनम् ॥ ११ ॥
अस्तीक्ष्वाकुकुलव्योमसकलामलचंद्रमाः । नाम्ना दशरथो राजा दुर्वृत्तेंधनपावकः ॥ १२ ॥
अधितिष्ठन्महातेजोमूर्त्तिरुत्तरकोसलम् । सवितेव प्रकाशत्वं धत्ते यः सर्वविष्टपे ॥ १३ ॥
पुरुषाद्रीन्द्रतो यस्मान्निःसृताः कीर्तिसिंधवः । उदन्वत्संगता वीध्रा ह्लादयंत्यखिलं जगत् ॥१४॥
तस्य राज्यमहाभारवहनक्षमचेष्टिताः । चत्वारो गुणसंपन्नास्तनया सुनया इव ॥ १५ ॥

राम इत्यादितस्तेषामभिरामः समंततः । आद्यः सर्वश्रुतज्ञोऽपि विश्रुतः सर्वविष्टपे ॥ १६ ॥
लक्ष्मणेनानुजेनासौ सीतया च द्वितीयया । जनकस्य नरेंद्रस्य सुतयाऽत्यंतभक्तया ॥ १७ ॥
जानकं पालयत्सत्यं कृत्वाऽयोध्यां वितानिकाम् । छद्मस्थः पर्यटन् क्षोणीं प्राविक्षद्दंडकं वनम् ॥१८॥
स्थानं तत्र परं दुर्गं महाविद्याभृतामपि । सोऽध्यास्त त्वैणवृत्तान्तं जातं चन्द्रनखाभवम् ॥ १९ ॥
संग्रामे वेदितुं वार्त्तां पद्मोऽगादनुजस्य च । दशग्रीवेण वैदेही हृता च छलवर्त्तिना ॥ २० ॥
ततो महेन्द्रकिष्किन्धश्रीशैलमलयेश्वराः । नृपा विराधिताद्याश्च प्रधानाः कपिकेतवः ॥ २१ ॥
महासाधनसंपन्ना महाविद्यापराक्रमाः । रामगुणानुरागेण पुण्येन च समाश्रिताः ॥ २२ ॥
लंकेश्वरं रणे जित्वा वैदेही पुनराहृता । देवलोकपुरीतुल्या विनीता च कृता खगैः ॥ २३ ॥
तत्र तौ परमैश्वर्यसेवितौ पुरुषोत्तमौ । नागेंद्राविव मोदेते सत्सुखं रामलक्ष्मणौ ॥ २४ ॥
रामो वां न कथं ज्ञातो यस्य लक्ष्मीधरोऽनुजः । चक्रं सुदर्शनं यस्य मोघतापरिवर्जितम् ॥२५॥
एकैकं रक्ष्यते यस्य तदेकगतचेतसा । रत्नं देवसहस्रेण राजराजस्य कारणम् ॥ २६ ॥
संत्यक्ता जानकी येन प्रजानां हितकाम्यया । तस्य रामस्य लोकेऽस्मिन्नास्ति कश्चिदवेदकः२७
आस्तां तावदयं लोकः स्वर्गेऽप्यस्य गुणैः कृताः। मुखरा देवसंघातास्तत्परायणचेतसः ॥ २८ ॥

ततोऽङ्कुशो जगादासौ मुने रामेण जानकी । कस्य हेतो परित्यक्ता वद वांछामि वेदितुम् २९
ततः कथितनिःशेषवृत्तान्तमिदमभ्यधात् । तद्गुणाकृष्टचेतस्को देवर्षिः सास्रवीक्षणः ॥ ३० ॥
विशुद्धगोत्रचारित्रहृदया गुणशालिनी । अष्टयोषित्सहस्राणामग्रणीः सुविचक्षणा ॥ ३१ ॥
सावित्रीं सह गायत्रीं श्रियं कीर्त्तिं धृतिं ह्रियम् । पवित्रत्वेन निर्जित्य स्थिता जैनश्रुतेः समा ३२
नूनं जन्मान्तरोपात्तपापकर्मानुभावतः । जनापवादमात्रेण त्यक्ताऽसौ विजने वने ॥ ३३ ॥
दुर्लोकधर्मभानूक्तिदीधितिप्रतितापिता । प्रायेण विलयं प्राप्ता सती सा सुखवर्द्धिता ॥ ३४ ॥
सुकुमाराः प्रपद्यन्ते दुःखमप्यनुकारणात् । म्लायंति मालतीमालाः प्रदीपालोकमात्रतः ॥ ३५ ॥
अरण्ये किं पुनर्भीमे व्यालजालसमाकुले । वैदेही धारयेत्प्राणानसूर्यपश्यलोचना ॥ ३६ ॥
जिह्वा दुष्टभुजंगीव संदूष्यानागसं जनम् । कथं न पापलोकस्य व्रजत्यवनिवर्त्तनम् ॥ ३७ ॥
आर्जवादिगुणश्लाघ्यामत्यन्तविमलां सतीम् । अपोद्य तादृशीं लोको दुःखं प्रेत्येह चाश्नुते ॥३८॥
अथवा स्वोचिते नित्यं कर्मण्याश्रितजागरे । किमत्र भाष्यतां कस्य संसारोऽत्र जुगुप्सितः॥३९॥
इत्युक्त्वा शोकभारेण समाक्रांतमना मुनिः । न किंचिच्छक्नुवन्वक्तुं मौनयोगमुपाश्रितः॥४०॥
अथांकुशो विहस्योचे ब्रह्मन्न कुलशोभनम् । कृतं रामेण वैदेहीं मुंचता भीषणे वने ॥ ४१ ॥

बहवो जनवादस्य निराकरणहेतवः । संति तत्र किमित्येवं विद्धां किल चकार सः ॥ ४२ ॥
अनंगलवणोऽवोचद्विनीता नगरी मुने । कियद्दूरं ततोऽवोचदवद्धारगतिप्रियः ॥ ४३ ॥
योजनानामयोध्या स्यादितः षष्ट्यधिकं शतम् । यस्यां स वर्तते रामः शशांकविमलप्रियः ४४
कुमारावूचतुर्यावांस्तं निर्जेतुं किमास्यते । महीकुटीरके ह्यस्मिन् कस्यान्यस्य प्रधानता ॥ ४५ ॥
ऊचतुर्वज्रजंघं च मामास्मिन्वसुधातले । सुह्मसिंधुकलिंगाद्या राजानः सर्वसाधनाः ॥ ४६ ॥
आज्ञाप्यतां यथा क्षिप्रमयोध्यागमनं प्रति । सज्जीभवत सर्वेण रणयोग्येन वस्तुना ॥ ४७ ॥
संलक्ष्यंतां महानागा विमदा मदशालिनः । ममुद्भूतमहाशब्दा वाजिनो वायुरंहसः ॥ ४८ ॥
योधाः कटकविख्याताः समरादपलायिनः । निरीक्ष्यन्तां सुशस्त्राणि मार्ज्यतां कंटकादिकम् ४९
तूर्यनादा प्रदाप्यन्तां शंखनिःस्वानसंगताः । महाहवसमारंभसंभापणविचक्षणाः ॥ ५० ॥
एवमाज्ञाप्य संग्रामसमानंदसमागतम् । आधाय मानसे धीरौ महासम्मदसंगतौ ॥ ५१ ॥
शक्राविव विनिश्चित्य त्रिदशान् धरणीपतीन् । महाविभवसंपन्नौ यथास्वं सस्थतुः सुखम् ॥५२॥
ततस्तयोः समाकर्ण्य पद्मनाभाभिषेणनम् । उत्कंठां विभ्रती तुंगां रुरोद जनकात्मजा ॥ ५३ ॥
ततः सीतासमीपस्थं सिद्धार्थो नारदं जगौ । इदमीदृक्तयाऽऽरब्धं कथं कार्यमशोभनम् ॥५४॥

साम्प्रोत्साहनशीलेन रणकौतुकिना परम् । त्वयेदं रचितं पश्य कुटुंबस्य विभेदनम् ॥ ५५ ॥
स जगाद न जानामि वृत्तान्तमहमीदृशम् । यतः संकथनं न्यस्तं पद्मलक्ष्मणगोचरम् ॥ ५६ ॥
एवं गतेऽपि मा भैषीर्नेह किंचिदसुंदरम् ! भविष्यतीति जानामि स्वस्थतां नीयतां मनः ॥५७॥
ततः समीपतां गत्वा तां कुमाराववोचताम् । अंबेदं रुद्यते कस्माद्वदाक्षेपविवर्जितम् ॥ ५८ ॥
प्रतिकूलं कृतं केन केन वा परिभाषितम् । दुर्मानसस्य कस्याद्य करोम्यसुवियोजनम् ॥ ५९ ॥
अनौषधकरः कोऽसौ क्रीडनं कुरुतेऽहिना । कोऽसौ ते मानवः शोकं करोति त्रिदशोऽपि वा ६०
कस्यासि कुपिता मातर्जनस्य गलितायुषः । प्रसादः क्रियतामंब शोकहेतुनिवेदने ॥ ६१ ॥
एवमुक्ता सती देवी जगाद विधृतास्रका । न कस्यचिदहं पुत्रौ कुपिता कमलेक्षणौ ॥ ६२ ॥
भवत्पितुर्मया ध्यातमद्य तेनाऽस्मि दुःखिता । रोदिमि प्रबलायातनयनोदकसंततिः ॥ ६३ ॥
उक्तवत्यामिदं तस्यां तदा श्रेणिक वीरयोः । सिद्धार्थो न पिताऽस्माकमिति बुद्धिः समुद्गता ६४
ततस्तावूचतुर्मातः कोऽस्माकं जनकः क्व वा । इति पृष्टाऽगदत्सीता स्ववृत्तांतमशेषतः ॥ ६५ ॥
स्वस्य संभवमाचख्यौ रामसंभवमेव च । अरण्यागमनं चैव हृतिमागमनं तथा ॥ ६६ ॥
यथा देवर्षिणा ख्यातं तच्च सर्वं सविस्तरम् । वर्त्ततेऽद्यापि कः कालो वृत्तांतस्य निगूहने ॥६७॥

एतदुक्त्वा जगौ पुत्रौ भवतोर्गर्भजातयोः । किंवदन्तीभयेनाहं युष्मत्पित्रोज्झिता वने ॥ ६८ ॥
तत्र सिंहरवाख्यायामटव्यां कृतरोदना । वारणार्थं गतेनाहं वज्रजंघेन वीक्षिता ॥ ६९ ॥
अनेन प्राप्तनागेन विनिवर्त्तनकारिणा । विशुद्धशीलरत्नेन श्रावकेण महात्मना ॥ ७० ॥
अहं स्वसेति संभाष्य करुणासक्तचेतसा । आनीतेदं निजं स्थानं पूजया चानुपालिता ॥ ७१ ॥
तस्यास्य जनकस्येव भवने विभवान्विते । भवंतौ संप्रसूताऽहं पद्मनाभशरीरजौ ॥ ७२ ॥
तेनेयं पृथिवी वत्सौ हिमवत्सागरावधिः । लक्ष्मणानुजयुक्तेन विहिता परिचारिका ॥ ७३ ॥
महाऽऽहवेऽधुना जाते श्रोष्यामि किमशोभनम् । नाथस्य भवतोः किंवा किं वा देवरगोचरम् ॥
अनेन ध्यानभारेण परिपीडितमानसा । अहं रोदिमि सत्पुत्रौ कुतोऽन्यदिह कारणम् ॥ ७५ ॥
तच्छ्रुत्वा परमं प्राप्तौ सम्मदं स्मितकारिणौ । विकासिवदनांभोजावूचतुर्लवणांकुशौ ॥ ७६ ॥
अहो सोऽसौ पिताऽस्माकं सुधन्वी लोकपुंगवः । श्रीमान् विशालसत्कीर्तिः कृतानेकमहाद्भुतः ७७
विषादं मा गमर्मातर्वने त्यक्त्वाहमित्यतः । भग्नां मानोन्नतिं पश्य रामलक्ष्मणयोर्द्रुतम् ॥७८॥
सीताऽब्रवीदलमलं विरोद्धुं गुरुणा सुतौ । न वर्तते इदं कर्तुं व्रजतां सौम्यचित्तताम् ॥ ७९ ॥
महाविनययोगेन समागत्य कृतानती । पितरं पश्यत वत्सौ मार्गोऽयं नयसंगतः ॥ ८० ॥

ऊचतुस्तौ रिपुस्थानप्राप्तं मातः कथं नुतम् । ब्रूवो गत्वा वचः क्लीबमावां ते तनयाविति ८१
वरं मरणमावाभ्यां प्राप्तं संग्राममूर्द्धनि । ननु भावितमीदृक्षं प्रवीरजननिंदितम् ॥ ८२ ॥
स्थितायामथ वैदेह्यां जोषं चिंतार्तचेतसि । अभिषेकादिकं कृत्यं भेजाते लवणांकुशौ ॥ ८३ ॥
श्रितमंगलसंघौ च कृतसिद्धनमस्कृती । प्रशांत्य मातरं किंचित्प्रणम्य च सुमंगलौ ॥ ८४ ॥
आरूढौ द्विरदौ चंद्रसूर्यौ वा नगमस्तकम् । प्रस्थितावभिसाकेतं लंकां वा रामलक्ष्मणौ ॥८५॥
ततः सन्नाहशब्देन ज्ञात्वा निर्गमनं तयोः । क्षिप्रं योधसहस्राणि निर्जग्मुः पौंडरीकतः ॥ ८६ ॥
परस्परप्रतिस्पर्द्धासमुत्कर्षितचेतसाम् । सैन्यं दर्शयतां राज्ञां संघट्टः परमोऽभवत् ॥ ८७ ॥
स्वैरं योजनमात्रं तौ महाकटकसंगतौ । पालयंतौ महीं सम्यङ्नाशस्योपशोभिताम् ॥ ८८ ॥
अग्रतः प्रसृतोदारप्रतापौ परमेश्वरौ । प्रयातौ विषयन्यस्तैः पूज्यमानौ नरेश्वरैः ॥ ८९ ॥
महाकुठारहस्तानां तथा कुद्दालधारिणाम् । पुंसां दशसहस्राणि संप्रयांति तदग्रतः ॥ ९० ॥
छिन्दन्तः पादपादींस्ते जनयंति समंततः । उच्चावचविनिर्मुक्तां महीं दर्पणसन्निभाम् ॥ ९१ ॥
महिषोष्ट्रमहोक्षाद्या कोशसंभारवाहिनः । प्रयांति प्रथमं मंत्री पत्तयश्च मृदुस्वनाः ॥ ९२ ॥
ततः पादातिसंघाता युवसारंगविभ्रमाः । पश्चात्तुरंगवृंदानि कुर्वन्त्युत्तमवल्गितम् ॥ ९३ ॥

अथ कांचनकक्षाभिर्नितांतकृतराजनाः । महाघंटाकृतस्वानाः शंखचामरधारिणः ॥ ९४ ॥
बुद्बुदादर्शलंबूषचारुवेषा महोद्धताः । अयस्ताम्रसुवर्णादिबद्धशुभ्रमहारदाः ॥ ९५ ॥
रत्नचामीकराद्यात्मकंठमालाविभूषिताः । चलत्पर्वतसंकाशा नानावर्णकसंगिनः ॥ ९६ ॥
केचिन्निर्भरनिश्च्योतद्गंडा मुकुलितेक्षणाः । हृष्टा दानोद्गमाः केचिद्वेगचंडा घनोपमाः ॥ ९७ ॥
अधिष्ठिताः सुसन्नाहैर्नानाशास्त्रविशारदैः । समुद्भूतमहाशब्दैः पुरुषैः पुरुदीप्तिभिः ॥ ९८ ॥
स्वान्यसैन्यसमुद्भूतनिनादज्ञानकोविदाः । सर्वशिक्षा सुसंपन्ना दंतिनश्चारुविभ्रमाः ॥ ९९ ॥
बिभ्राणाः कवचं चारु पश्चाद्विन्यस्तखेटकाः । सादिनस्तत्र राजंते परमं कुंतपाणयः ॥ १०० ॥
आश्ववृन्दखुराघातसमुद्भूतेन रेणुना । नभः पांडुरजीमूतचयैरिव समंततः ॥ १०१ ॥
शस्त्रांधकारपिहिता नानाविभ्रमकारिणः । अग्रंयत्रः समुद्वृताः प्रवर्त्तन्ते पदातयः ॥ १०२ ॥
शयनासनतंबूलगंधमाल्यैर्मनोहरैः । न कश्चिद्दुःस्थितस्तत्र वस्त्राहारविलेपनैः ॥ १०३ ॥
नियुक्ता राजवाक्येन संतताः पथि मानवाः । दिने दिने महादक्षा बद्धकक्षाः सुचेतसः ॥१०४॥
मधु शीधु घृतं वारि नानान्नं रसवत्परम् । परमादरसंपन्नं प्रयच्छंति समंततः ॥ १०५ ॥
नादर्शि मलिनस्तत्र न दीनो न बुभुक्षितः । तृषितो न कुवस्त्रो वा जनो न च विचिंतकः १०६

नानाभरणसंपन्नाश्चारुवेषाः सुकांतयः । पुरुषास्तत्र नार्यश्च रेजुः सैन्यमहार्णवे ॥ १०७ ॥
विभूत्या परया युक्तावेवं जनकजात्मजौ । साकेतात्रिषयं प्राप्ताविन्द्राविव सुरास्पदम् ॥ १०८ ॥
यवपुंड्रेक्षुगोधूमप्रभृत्युत्तमसंपदा । सस्येन शोभिता यत्र वसुधांतरवर्जिता ॥ १०९ ॥
सरितो राजहंसौघैः सरांसि कमलोत्पलैः । पर्वता विविधैः पुष्पैर्गीतैरुद्यानभूमयः ॥ ११० ॥
नैत्रिकी महिषीव्रातैर्महोक्षखरहारिभिः । गोपीभिर्मचसक्ताभिर्यत्र भांति वनानि च ॥ १११ ॥
सीमांतावस्थिता यत्र ग्रामा नगरसंनिभाः । त्रिविष्टपपुराभानि राजंते नगराणि च ॥ ११२ ॥
स्वैरं तमुपभुंजानौ विषयं विषयप्रियम् । परेण तेजसा युक्तौ गच्छंतौ लवणांकुशौ ॥ ११३ ॥
दंतिनां रणचंडानां गंडनिर्गतवारिणां । कर्दमत्वं समानीता सकलाः पथि पांसवः ॥ ११४ ॥
भृशं पटुखुराघातैर्वाजिनां चंचलात्मनाम् । जर्जरत्वमिवानीता कोसलाविषयावनिः ॥ ११५ ॥
ततः संध्यासमासक्तघनौघेनेव संगतम् । दूरे नभः समालक्ष्य जगदुर्लवणांकुशौ ॥ ११६ ॥
किमेतद्दृश्यते माम तुंगशोणमहाद्युतिः । वज्रजंघस्ततोऽवोचत्परिज्ञाय चिरादिव ॥ ११७ ॥
देवावेषा विनीतासौ दृश्यते नगरी परा । हेमप्राकारसंजाता यस्याश्छायेयमुन्नता ॥ ११८ ॥
अस्यां हलधरः श्रीमानास्तेऽसौ भवतः पिता । यस्य नारायणो भ्राता शत्रुघ्नश्च महागुणः ॥११९॥

शौर्यमानसमेताभिः कथाभिरात्तसक्तयोः । सुखेन गच्छतोरासीदंतराले तयोर्नदी ॥ १२० ॥
प्रवृत्तवेगमात्रेण नगरी ग्रहणैषिणोः । जाताऽसावंतरे तृष्णा सिद्धिप्रस्थितयोरिव ॥ १२१ ॥
सैन्यमावासितं तत्र परिश्रमसमागतम् । सुरसैन्यमित्रोदारमुपनंदननिम्नगाम् ॥ १२२ ॥
अथ श्रुत्वा परानीकं स्थितमासन्नगोचरे । किंचिद्विस्मयमापन्नावूचतुः पद्मलक्ष्मणौ ॥ १२३ ॥
त्वरितं कः पुनर्मर्त्तुमयं वांछति मानवः । युद्धापदेशमाश्रित्य यदेत्यंतिकमावयोः ॥ १२४ ॥
ददौ नारायणश्चाज्ञां विराधितमहीभृते । क्रियतां साधनं सज्जं युद्धाय क्षेपवर्जितम् ॥ १२५ ॥
वृषनामप्लवंगादिकेतनाः खेचराधिपाः । क्रियंतामुदितज्ञाना संप्राप्ते रणकर्मणि ॥ १२६ ॥
यथाऽऽज्ञापयसीत्युक्त्वा विराधितखगेश्वरः । नृपान् किष्किंधनाथाद्यान् समाहूय समुद्यतः१२७
दूतदर्शनमात्रेण सर्वे ते खेचरेश्वराः । अयोध्यानगरीं प्राप्ता महासाधनसंगताः ॥ १२८ ॥
अथात्यंताकुलात्मानौ तदा सिद्धार्थनारदौ । प्रभामंडलराजाय गत्वा ज्ञापयतां द्रुतम् ॥ १२९ ॥
श्रुत्वा स्वसुर्यथा वृत्तं वात्सल्यगुणयोगतः । बभूव परमं दुःखी प्रभामंडलमंडितः ॥ १३० ॥
विषादं विस्मयं हर्षं बिभ्राणश्च त्वरान्वितः । आरुह्य मनसा तुल्यं विमानं पितृसंगतः ॥ १३१ ॥
समेतः सर्वसैन्येन किंकर्तव्यत्वविह्वलः । पौंडरीकपुरं चैत्र प्रस्थितः स्नेहनिर्भरः ॥ १३२ ॥

प्रभामंडलमायातं जनकं मातरं तथा । दृष्ट्वा सीता नवीभूतशोकोत्थाय त्वरान्विता ॥ १३३ ॥
विप्रलापं परिष्वज्य चक्रेऽस्रकृतदुर्दिना । निर्वासनादिकं दुःखं वेदयंती सुविह्वला ॥ १३४ ॥
सांत्वयित्वाऽतिकृच्छ्रेण तां प्रभामंडलो जगौ । देवि संशयमापन्नौ पुत्रौ ते साधु नो कृतम् ॥१३५॥
हलचक्रधरौ ताभ्यामुपेत्य क्षोभितौ यतः । सुराणामपि यौ वीरौ न जय्यौ पुरुषोत्तमौ ॥ १३६ ॥
कुमारयोस्तयोर्यावत्प्रमादो नोपजायते । व्रजामस्तावदेह्याशु चिंतयामोऽभिरक्षणम् ॥ १३७ ॥
ततः स्नुषासमेताऽसौ भामंडलविमानगा । प्रवृत्ता तनयौ तेन वज्रजंघबलान्वितौ ॥ १३८ ॥
रामलक्ष्मणयोर्लक्ष्मीं कोऽसौ वर्णयितुं क्षमः । इति श्रेणिक संक्षेपात्कीर्त्यमानमिदं शृणु ॥१३९॥
रथाश्वगजपादातमहार्णवसमावृतौ । वहंतामिव संरंभं निर्गतौ रामलक्ष्मणौ ॥ १४० ॥
अश्वयुक्तरथारूढः शत्रुघ्नश्च प्रतापवान । हारराजितवक्षस्को निर्ययौ युद्धमानसः ॥ १४१ ॥
ततोऽभवत्कृतांतास्यः सर्वसैन्यपुरःसरः । मानी हरिणकेशीव नाकौकः सैनिकाग्रणीः ॥ १४२ ॥
शरासनकृतच्छायं चतुरंगं महाद्युतिः । अप्रमेयं बलं तस्य प्रतापपरिवारणम् ॥ १४३ ॥
सुरप्रासादसंकाशो मध्यस्तंभोऽतकध्वजः । शात्रवानीकदुःप्रेक्षो रेजे तस्य महारथः ॥ १४४ ॥
अनुमार्गे त्रिमूर्ध्नोऽस्य ततो वह्निशिखो नृपः । सिंहविक्रमनामा च तथा दीर्घभुजश्रुतिः ॥ १४५ ॥

सिंहोदरः सुमेरुश्च बालिखिल्यो महाबलः । प्रचंडो रौद्रभूतिश्च शरभः स्यंदनः पृथुः ॥ १४६ ॥
कुलिशश्रवणश्चंडो मारिदत्तो रणप्रियः । मृगेन्द्रवाहनाद्याश्च सामंता मत्तमानसाः ॥ १४७ ॥
सहस्रपंचकेयत्ता नानाशस्त्रांधकारिणः । निर्जग्मुर्वन्दिनां वृन्दैरुद्गीतगुणकोटयः ॥ १४८ ॥
एवं कुमारकोट्योऽपि कुटिलानीकसंगताः । दृष्टप्रत्ययशस्त्रांगे क्षणविन्यस्तचक्षुषः ॥ १४९ ॥
युद्धानंदकृतोत्साहा नाथभक्तिपरायणाः । महाबलास्त्वरावत्यो निरीयुः कंपितक्ष्माः ॥ १५० ॥
रथैः केचिन्नगैस्तुंगैर्द्विपैः केचिद्‌घनोपमैः । महार्णवतरंगाभैस्तुरंगैरपरैः परे ॥ १५१ ॥
शिबिकाशिखरैः केचिद्युग्यैर्योग्यतरैः परैः । निर्ययुर्बहुवादित्रबधिरीकृतदिङ्मुखाः ॥ १५२ ॥
सकंकटशिरस्त्राणाः क्रोधालिंगितचेतसः । पुरादृष्टसुविक्रान्तप्रसादपरसेवकाः ॥ १५३ ॥
ततः श्रुत्वा परानीकनिःस्वनं संभ्रमान्वितः । सन्नह्यतेति सैन्यं स्वं वज्रजंघः समादिशत् १५४
ततस्ते परसैन्यस्य श्रुत्वा निःस्वनमावृताः । स्वयमेव सुसन्नद्धास्तस्यांतिकमुपागमन् ॥ १५५ ॥
कालानलाः प्रचूडांगवंगा नेपालवर्बराः । पौंड्रा मागधसौस्नाश्च पारशैलाःससिंहलाः ॥१५६॥
कालिंगकाश्च राजानो रत्नांकाद्या महाबलाः एकादशसहस्राणि युक्ता ह्युत्तमतेजसः ॥ १५७ ॥
एवं तत्परमं सैन्यं परसैन्यकृताननम् । संघट्टमुत्तमं प्राप्तं चलितं प्रचलायुधम् ॥ १५८ ॥

तयोः समागमो रौद्रो देवासुरकृताद्भुतः । वर्तते सुमहाशब्दः क्षुब्धाकूपारयोरिव ॥ १५९ ॥
प्रहर प्रथमं क्षुद्र मुंचास्त्रं किमुपेक्षसे । प्रहंतुं प्रथमं शस्त्रं न मे जातु प्रवर्तते ॥ १६० ॥
प्रहृतं लघुना तेन विशदोऽभूद्भुजो मम । प्रहरस्व वपुर्गाढं दृढपीडितमुष्टिकः ॥ १६१ ॥
किंचिद् व्रज पुरोभागं संचारो नास्ति संगरे । सायकस्यैनमुज्झित्वा छुरिकां वा समाश्रय १६२
किं वेपसे न हन्मि त्वां मुंच मार्गमयं परः । भटो युद्धमहाकंडूचपलोऽग्रेऽवतिष्ठताम् ॥ १६३ ॥
किं वृथा गर्जसि क्षुद्र न वीर्यं वाचि तिष्ठति । अयं ते चेदितेनैव करोमि रणपूजनम् ॥ १६४॥
एवमाद्या महारावा भटानां शौर्यशालिनाम् । निश्चेरुरतिगंभीरा वदनेभ्यः समंततः ॥ १६५ ॥
भूगोचरनरेंद्राणां यथायातः समंततः । नभश्चरनरेंद्राणां तथैवात्यंतसंकुलः ॥ १६६ ॥
लवणांकुशयोः पक्षे स्थितो जनकनंदनः । वीरः पवनवेगश्च मृगांको विद्युदुज्ज्वलः ॥ १६७ ॥
महासैन्यसमायुक्ता सुरछंदादयस्तथा । महाविद्याधरेशानां महारणविशारदाः ॥ १६८ ॥
लवणांकुशसंभूतिं श्रुतवानथ तत्त्वतः । उर्द्धखेचरसामन्तसंघट्टश्लथतां नयन् ॥ १६९ ॥
यथा कर्तव्यविज्ञानप्रयोगात्यंतकोविदः । वैदेहीसुतयोः पक्षं वायुपुत्रोऽप्यशिश्रियत् ॥ १७० ॥
लांगूलपाणिना तेन निर्जिता रामसैन्यतः । प्रभामंडलवीरस्य चित्तमानंदवत्कृतम् ॥ १७१ ॥

विमानशिखरारूढां ततः संदृश्य जानकीम् । औदासीन्यं ययुः सर्वे विहायश्चरपार्थिवाः ॥१७२॥
कृतांजलिपुटाश्चैनां प्रणम्य परमादराः । तस्थुरावृत्य विभ्राणा विस्मयं परमोन्नतम् ॥ १७३ ॥
वित्रस्तहरिणीनेत्रा समुद्भृष्टतनूरुहा । वैदेही वलयोः संगमालुलोके सवेपथुः ॥ १७४ ॥
क्षोभयंतावथोदारं तत्सैन्यं प्रचलद्ध्वजे । पद्मलक्ष्मीधरौ तेन प्रवृत्तौ लवणांकुशौ ॥ १७५ ॥
मृगनागारिसंलक्ष्यध्वजयोरनयोः पुरः । स्थितौ कुमारवीरौ तौ प्रतिपक्षमुखं श्रितौ ॥ १७६ ॥
आपातमात्रकेणैव रामदेवस्य सद्ध्वजम् । अनंगलवणश्चापं निचकर्त्त कृतायुधः ॥ १७७ ॥
विहस्य कार्मुकं यावत्सोऽन्यदा दातुमुद्यतः । तावल्लवणवीरेण तरसा विरथीकृतः ॥ १७८ ॥
अथान्यं रथमारुह्य काकुत्स्थोऽलघुविक्रमः । अनंगलवणं क्रोधात्ससर्प भ्रकुटीं वहन् ॥ १७९ ॥
घर्मार्कदुर्निरीक्ष्याक्षः समुत्क्षिप्तशरासनः । चमरासुरनाथस्य वज्रीवासौ गतोऽतिकम् ॥ १८० ॥
स चापि जानकीसूनुरुद्धृत्य सशरं धनुः । रणप्राघूर्णकं दातुं पद्मनाभमुपागत् ॥ १८१ ॥
ततः परमभूद्युद्धं पद्मस्य लवणस्य च । परस्परं समुत्कृत्तशस्त्रसंघातकर्कशम् ॥ १८२ ॥
महाहवो यथा जातः पद्मस्य लवणस्य च । अनुक्रमेण तेनैव लक्ष्मणस्यांकुशस्य च ॥ १८३ ॥
एवं द्वन्द्वमभूद्युद्धं स्वामिरागमुपेयुषाम् । सामंतानामपि स्वस्ववीरशोभाभिलाषिणाम् ॥ १८४ ॥

अश्ववृन्दं क्वचित्तुंगं तरंगकृतरंगणम्। निरुद्धं परचक्रेण घनं चक्रे रणांगणम् ॥ १८५ ॥
क्वचिद्विच्छिन्नसंनाहं प्रतिपक्षं पुरः स्थितम्। निरीक्ष्य रणकंडूलो निदधे मुखमन्यतः ॥ १८६ ॥
केचिन्नाथं समुत्सृज्य प्रविष्टाः परवाहिनीम्। स्वामिनाम समुच्चार्य निजघ्नुरभिलक्षितम् ॥१८७॥
अनादृतनराः केचिद्वर्वशौंडा महाभटाः। प्रक्षरद्दानधाराणां करिणामरितामिताः ॥ १८८ ॥
दंतशय्यां समाश्रित्य कश्चित्समददंतिनः। रणनिद्रां सुखं लेभे परमं भटसत्तमः ॥ १८९ ॥
कश्चिदभ्यायतोऽश्वस्य भग्नशस्त्रो महाभटः। अदत्त्वा पदवीं प्राणान् ददौ स करताडनम् ॥१९०॥
प्रच्युतं प्रथमाघाताद्भटं कश्चित्त्रपान्वितः। भणन्तमपि नो भूयः प्रजहार महामनाः ॥ १९१ ॥
च्युतशस्त्रं क्वचिद्वीक्ष्य भटमच्युतमानसः। शस्त्रं दूरं परित्यज्य बाहुभ्यां योद्धुमुद्यतः ॥ १९२ ॥
दातारोऽपि प्रविख्याताः सदा समरवर्त्तिनः। प्राणानपि ददुर्वीरा न पुनः पृष्ठदर्शनम् ॥१९३॥
असृक्कर्दमनिर्मग्नचक्रकृच्छ्रचलद्रथम्। तोत्रप्रतोदनोद्युक्तः त्वरितश्च न सारथिः ॥ १९४ ॥
क्वणदश्वसमुद्यूढस्यन्दनोन्मुक्तचीत्कृतम्। तुरंगजवविक्षिप्तभटसीमंतिताविलम् ॥ १९५ ॥
निःक्रामद्रुधिरोद्गार सहितोरुभटस्वनम्। वेगवच्छस्त्रसंपातजातवह्निकणोत्करम् ॥ १९६ ॥
करिशूत्कृतसंभूतसीकरासारजालकम्। करिदारितवक्षस्कभटसंकटभूतलम् ॥ १९७ ॥

पर्यस्तकरिसंरुद्धरणमार्गाकुलायतम् । नागमेघपरिश्च्योतन्मुक्ताफलमहोपलम् ॥ १९८ ॥
मुक्तासारसमाघातविकटं कर्मरंगकम् । नागोच्छालितपुंनागकृतखेचरसंगमम् ॥ १९९ ॥
शिरःक्रीतयशोरत्नं मूर्छाजनितविश्रमम् । मरणप्राप्तनिर्वाणं बभूव रणमाकुलम् ॥ २०० ॥

जीविततृष्णारहितं साधुस्वनजलधिलुब्धयौधेयम् ।
समरं समरसमासीन्महति लघिष्टे च वीराणाम् ॥ २०१ ॥
भक्तिः स्वामिनि परमा निष्क्रयदानं प्रचंडरणकंडूः ।
रवितेजसां भटानां जग्मुः संग्रामहेतुत्वम् ॥ २०२ ॥

इति श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे लवणांकुशसमेतयुद्धाभिधानं द्व्युत्तरशतं पर्व ॥ १०२ ॥

---

# अथ त्र्युत्तरशतं पर्व ।

अतो मगधराजेन्द्र भवावहितमानसः । निवेदयामि युद्धं ते विशेषकृतवर्त्तनम् ॥ १ ॥
सम्प्रेष्टा वज्रजंघोऽभूदनंगलवणांबुधेः । मदनांकुशनाथस्य पृथुः प्रथितविक्रमः ॥ २ ॥

सुमित्रातनुजातस्य चंद्रोदरनृपात्मजः । कृतान्तवक्त्रतिग्मांशुः पद्मनाभमरुत्वतः ॥ ३ ॥
वज्रावर्त्तं समुद्धृत्य धनुरत्युद्धुरध्वनिः । पद्मनाभः कृतांतास्यं जगौ गंभीरभारतिः ॥ ४ ॥
कृतांतवक्त्र वेगेन रथं प्रत्यरि वाहय । मोघीभवत्तनूभारः किमेवमलसायसे ॥ ५ ॥
सोऽवोचद्देव वीक्षस्व वाजिनो जर्जरीकृतान् । अमुना नरवीरेण सुनिशातैः शिलीमुखैः ॥ ६ ॥
अमी निद्रामिव प्राप्ता देहविद्राणकारिणीम् । द्वारं विकारनिर्मुक्ता जाता गलितरंहसः ॥ ७ ॥
नैते चाटुशतान्युक्त्वा न हस्ततलताडिताः । वहंत्यायतमंगं तु क्रणतां कुर्वते परम् ॥ ८ ॥
शोणं शोणितधाराभिः कुर्वाणा धरणीतलम् । अनुरागमिवोदारं भवते दर्शयंत्यमी ॥ ९ ॥
इमौ च पश्य मे बाहू शरैः कंकटभेदिभिः । समुत्फुल्लकदंबस्रग्गुणसाम्यमुपागतौ ॥ १० ॥
पद्मोऽवदन्ममाप्येवं कार्मुकं शिथिलायते । ज्ञायते कर्मनिर्मुक्तं चित्रार्पितशरासनम् ॥ ११ ॥
एतन्मुशलरत्नं च कार्येण परिवर्जितम् । सूर्यावर्त्तगुरूभूतं दोर्दण्डमुपविध्यति ॥ १२ ॥
दुर्वाररिपुनागेन्द्रसृणितां यच्च भूरिशः । भंगं लांगलरत्नं मे तदिदं विफलं स्थितम् ॥ १३ ॥
परपक्षपरिक्षोददक्षाणां यक्षदक्षिणाम् । अमोघानां महास्त्राणामीदृशी वर्त्तते मतिः ॥ १४ ॥
यथापराजितजस्य वर्त्ततेऽनर्थकास्त्रता । तथा लक्ष्मीधरस्यापि मदनांकुशगोचरे ॥ १५ ॥

विज्ञातजातिसंबंधौ सापेक्षौ लवणांकुशौ । युयुधातेऽनपेक्षौ तु निर्ज्ञातौ रामलक्ष्मणौ ॥ १६ ॥
तथाऽप्यलं स दिव्यास्त्रो विषादपरिवर्जितः । प्रासचक्रशरासारं मुमुचे लक्ष्मणोऽकुशे ॥ १७ ॥
वज्रदंडैः शरैर्वृष्टिं तामपाकरदंशुकः । पद्मनाभविनिर्मुक्तामनंगलवणो यथा ॥ १८ ॥
उपवक्षस्ततः पद्मं प्रासेन लवणोऽक्षिणोत् । मदनांकुशवीरश्च लक्ष्मणं नैपुणान्वितः ॥ १९ ॥
लक्ष्मणं घूर्णमानाक्षिहृदयं वीक्ष्य संभ्रमी । विराधितो रथं चक्रे प्रतीपं कोशलां प्रति ॥ २० ॥
ततः संज्ञां परिप्राप्य रथं दृष्ट्वाऽन्यतः स्थितम् । जगाद लक्ष्मणः कोपकपिलीकृतलोचनः ॥२१॥
भो विराधित सद्बुद्धे किमिदं भवता कृतम् । रथं निवर्त्तय क्षिप्रं रणे पृष्ठं न दीयते ॥ २२ ॥
पुंखिपूरितदेहस्य स्थितस्याभिमुखं रिपोः । शूरस्य मरणं श्लाघ्यं नेदं कर्म जुगुप्सितम् ॥ २३ ॥
सुरमानुषमध्येऽस्मिन् परामप्यापदं श्रिताः । कथं भजंति कातर्यं स्थिताः पुरुषमूर्द्धनि ॥ २४ ॥
पुत्रो दशरथस्याहं भ्राता लांगललक्ष्मणः । नारायणः क्षितौ ख्यातस्तस्येदं सदृशं कथम् ॥२५॥
त्वरितं गदितेनैवं रथस्तेन निवर्त्तितः । पुनर्युद्धमभूद्घोरं प्रतीपागतसैनिकम् ॥ २६ ॥
लक्ष्मणेन ततः कोपात्संग्रामांतचिकीर्षया । अमोघमुद्धृतं चक्रं देवासुरभयंकरम् ॥ २७ ॥
ज्वालावलीपरीतं तद्दुःप्रेक्ष्यं पूषसन्निभम् । नारायणेन दीप्तेन प्रहितं हन्तुमंकुशम् ॥ २८ ॥

अंकुशस्यांतिकं गत्वा चक्रं विगलितप्रभम् । निवृत्त्य लक्ष्मणस्यैव पुनः पाणितलं गतम् ॥ २९ ॥
क्षिप्तं क्षिप्तं सुकोपेन लक्ष्मणेन त्वरावता । चक्रमंतिकमस्यैव प्रतियाति पुनः पुनः ॥ ३० ॥
अथांकुशकुमारेण बिभ्रता विभ्रमं परम् । धनुर्दंडः सुधीरेण भ्रामितो रणशालिना ॥ ३१ ॥
तथाभूतं समालोक्य सर्वेषां रणमीयुषाम् । विस्मयव्याप्तचित्तानां शेमुषीयमजायत ॥ ३२ ॥
अयं परमसत्त्वोऽसौ जातश्चक्रधरोऽधुना । भ्रमता यस्य चक्रेण संशये सर्वमाहितम् ॥ ३३ ॥
किमिदं स्थिरमाहोस्विद्भ्रमणं समुपाश्रितम् । ननु न स्थिरमेताद्धि श्रूयतेऽस्यातिगर्जितम् ॥३४॥
अलीकं लक्ष्मणैः ख्यातं नूनं कोटिशिलादिभिः । यतस्तादिहमुत्पन्नं चक्रमन्यस्य सांप्रतम् ॥३५॥
कथं वा मुनिवाक्यानामन्यथात्वं प्रजायते । किं भवंति वृथोक्तानि जिनेंद्रस्यापि शासने॥३६॥
भ्रमितश्चापदंडोऽयं चक्रमेतदिति स्वनः । समाकुलः समुत्तस्थौ वक्रेभ्योऽस्तमनीषिणाम् ॥ ३७॥
तावल्लक्ष्मणवीरोऽपि परमं सत्त्वमुद्वहन् । जगाद नूनमेतौ तावुदितौ बलचक्रिणौ ॥ ३८ ॥
इति व्रीडापरिष्वक्तं निष्क्रियं वीक्ष्य लक्ष्मणम् । समीपं तस्य सिद्धार्थो गत्वा नारदसंमतः ३९
जगौ नारायणो देव त्वमेवात्र कुतोऽन्यथा । जिनेंद्रशासनोक्तं हि निष्कंपं मंदरादपि ॥ ४० ॥
जानक्यास्तनयावेतौ कुमारौ लवणांकुशौ । ययोर्गर्भस्थयोरासीदसौ विरहिता वने ॥ ४१ ॥

परिज्ञातमितः पश्चादापन्नद्दुःखसागरे । भवानिति न रत्नानामत्र जाता कृतार्थता ॥ ४२ ॥
लवणांकुशमाहात्म्यं ततो ज्ञात्वा समंततः । मुमोच कवचं शस्त्रं लक्ष्मणः शोककर्षितः ॥ ४३ ॥
श्रुत्वा तमथ वृत्तांतं विषादभरपीडितः । परित्यक्तधनुर्वर्मा घूर्णमाननिरीक्षणः ॥ ४४ ॥
स्यंदनात्तरसोत्तीर्णो दुःखस्मरणसंगतः । पर्यस्तक्ष्मातले पद्मो मूर्छामीलितलोचनः ॥ ४५ ॥
चंदनोदकसिक्तश्च स्पष्टां संप्राप्य चेतनाम् । स्नेहाकुलमना यातः पुत्रयोरंतिकं द्रुतम् ॥ ४६ ॥
ततो रथात्समुत्तीर्य तौ युक्तकरकुड्मलौ । तातस्यानमतां पादौ शिरसा स्नेहसंगतौ ॥ ४७ ॥
ततः पुत्रौ परिष्वज्य स्नेहद्रवितमानसः । विलापमकरोत्पद्मो बाष्पदुर्दिनिताननः ॥ ४८ ॥
हा मया तनयौ कष्टं गर्भस्थौ मंदबुद्धिना । निर्दोषौ भीषणेऽरण्ये विमुक्तौ सह सीतया ॥ ४९ ॥
हा वत्सौ विपुलैः पुण्यैर्मयाऽपि कृतसंभवौ । उदरस्थौ कथं प्राप्तौ व्यसनं परमं वने ॥ ५० ॥
हा सुतौ वज्रजंघोऽयं वने चेत्तत्र नो भवेत् । पश्येयं वा तदा वक्त्रपूर्णचंद्रमिमं कुतः ॥ ५१ ॥
हा शावकावमैरस्त्रैरमोघैर्निहतौ न यत् । तत्सुरैः पालितौ यद्वा सुकृतैः परमोदयैः ॥ ५२ ॥
हा वत्सौ विशिखैर्विद्धौ पतितौ संयुगक्षितौ । भवंतौ जानकी वीक्ष्य किं कुर्यादिति वेद्मि नः ५३
निर्वासनकृतं दुःखमितरैरपि दुःसहम् । भवद्भ्यां सा सुपुत्राभ्यां त्यजिता गुणशालिनी ॥५४॥

भवतोरन्यथाभावं प्रतिपद्य सुजातयोः । वेद्मि जीवेत् ध्रुवं नेति जानकी शोकविह्वला ॥ ५५ ॥
लक्ष्मणोऽपि सवाष्पाक्षः संभ्रान्तः शोकविह्वलः । स्नेहनिर्भरमालिंगद्विनयप्रणताविमौ ॥ ५६ ॥
शत्रुघ्नाद्या महीपालाः श्रुत्वा वृत्तान्तमीदृशम् । तमुद्देशं गताः सर्वे प्राप्ताः प्रीतिमनुत्तमाम् ॥ ५७ ॥
ततः समागमो जातः सेनयोरुभयोरपि । स्वामिनोः संगमे जाते सुखविस्मयपूर्णयोः ॥ ५८ ॥
सीताऽपि पुत्रमाहात्म्यं दृष्ट्वा संगममेव च । पौंडरीकं विमानेन प्रतीतहृदयाऽगमत् ॥ ५९ ॥
अवतीर्य ततो व्योम्नः संभ्रमी जनकात्मजः । स्वस्रीयौ निर्व्रणौ पद्मयन्नालिलिंग सवाष्पदृक् ६०
लांगूलपाणिरप्येवं प्राप्तः प्रीतिपरायणः । आलिंगति स्म तौ साधु जातमित्युच्चरन्मुहुः ॥ ६१ ॥
श्रीविराधितसुग्रीवावेवं प्राप्तौ सुसंगमम् । नृपा बिभीषणाद्याश्च सुसंभाषणतत्पराः ॥ ६२ ॥
अथ भूव्योमचाराणां सुराणामेव संकुलः । जातः समागमोऽत्यंतमहानंदसमुद्भवः ॥ ६३ ॥
परिप्राप्य परं कान्तं पद्मः पुत्रसमागमम् । बभार परमां लक्ष्मीं धृतिनिर्भरमानसः ॥ ६४ ॥
मेने सुपुत्रलंभं च भुवनत्रयराज्यतः । सुदूरमधिकं रम्यं भावं कमपि संश्रितः ॥ ६५ ॥
विद्याधर्यः समानंदं ननृतुर्गगनांगणे । भूगोचरस्त्रियो भूमौ समुन्मत्तजगन्निभम् ॥ ६६ ॥
परं कृतार्थमात्मानं मेने नारायणस्तथा । जितं च भुवनं कृत्स्नं प्रमोदोत्फुल्ललोचनः ॥ ६७ ॥

सगरोऽहमिमौ तौ मे वीरभीमभगीरथौ । इति बुद्ध्या कृतौपम्यौ दधार परमद्युतिम् ॥ ६८ ॥
पद्मः प्रीतिं परां बिभ्रद्वज्रजंघमपूजयत् । भामंडलसमस्त्वं मे सुचेता इति चावदत् ॥ ६९ ॥
ततः पुरेव रम्यासौ पुनः स्वर्गसमा कृता । साकेता नगरी भूयः कृता परमसुंदरी ॥ ७० ॥
रम्या या स्त्रीस्वभावेन कलाज्ञानविशेषतः । आचारमात्रतस्तस्याः क्रियते भूषणादरः ॥ ७१ ॥
ततो गजघटा पृष्ठे स्थितं सूर्यसमप्रभम् । आरूढः पुष्पकं रामः सपुत्रो भास्करो यथा ॥ ७२ ॥
नारायणोऽपि तत्रैव स्थितो रेजे स्वलंकृतः । विद्युत्त्वाँश्च महामेघः सुमेरोः शिखरे यथा ॥७३॥
बाह्योद्यानानि चैत्यानि प्राकारं च ध्वजाकुलम् । पश्यन्तो विविधैर्यानैः प्रस्थितास्ते शनैः शनैः ७४
त्रिप्रश्रुतद्विपाश्चीयं रथपादातसंकुलाः । अभवन्विशिखाश्चापध्वजछत्रांधकारिताः ॥ ७५ ॥
वरसीमंतिनीवृंदैर्गवाक्षाः परिपूरिताः । महाकुतूहलाकीर्णैर्लवणांकुशदर्शने ॥ ७६ ॥
नयनांजलिभिः पातुं सुंदर्यौ लवणांकुशौ । प्रवृत्ताः न पुनः प्रापुस्तृप्तिमुत्तानमानसाः ॥ ७७ ॥
तदेकगतचित्तानां पश्यंतीनां सुयोषिताम् । महासंघट्टतो भ्रष्टं न ज्ञातं हारकुंडलम् ॥ ७८ ॥
मातर्मनागितो वक्त्रं कुरु मे किन्तु कौतुकम् । आत्मंभरित्वमेतत्ते कियदच्छिन्नकौतुके ॥ ७९ ॥
विनतं कुरु मूर्धानं सखि किंचित्प्रसादतः । उन्नद्धाऽसि किमित्येवं धम्मिल्लकमितो नय ॥ ८० ॥

किमेव परमप्राणे तुदसि क्षिप्तमानसे । पुरः पश्यसि किं नेमां पीडितां भर्तृदारिकाम् ॥ ८१ ॥
मनागवस्थता तिष्ठ पतितास्मि गताऽसि किम् । निश्चेतनत्वमेवं त्वं किं कुमारं न वीक्षसे ॥८२॥
हा मातः कीदृशी योषिद्यदि पश्यामि तेऽत्र किम् । इमां मे प्रेरिकां कस्मात्त्वं वारयसि दुर्बले ८३
एतौ तावद्धचंद्राभललाटौ लवणांकुशौ । यावेतौ रामदेवस्य कुमारौ पार्श्वयोः स्थितौ ॥ ८४ ॥
अनंगलवणः कोऽत्र कतरो मदनांकुशः । अहो परममेतौ हि तुल्याकारावुभावपि ॥ ८५ ॥
महारजतरागाक्तं वरं वाणं दधाति यः । लवणोऽयं शुकच्छायवस्त्रोऽसावंकुशो भवेत् ॥ ८६ ॥
अहो पुण्यवती सीता यस्याः सुतनयाविमौ । अहो धन्यतमा सा स्त्री यानयो रमणी भवेत् ॥८७॥
एवमाद्याः कथास्तत्र मनः श्रोत्रमलिम्लुचाः । प्रवृत्ताः परमस्त्रीणां तदेकगतचक्षुषाम् ॥ ८८ ॥
कपोलमतिसंघट्टा कुंडलोरगदंष्ट्रया । न विवेद तदा काचिद्विक्षतं तद्गतात्मिकाः ॥ ८९ ॥
अन्यनारी भुजोत्पीडात्कस्याश्चित्सकवाटके । कंचुकेऽभ्युन्नतो रेजे स्तनांशः सघनेंदुवत् ॥ ९० ॥
न विवेद च्युतां कांचीं काचिन्निक्वणिनीमपि । प्रत्यागमनकाले तु संदिता स्खलिताऽभवत् ९१
धम्मिल्लमकरीदंष्ट्राकोटिस्फाटितमंशुकम् । महत्तरिकया काचिद्दृष्टेषत्परिभाषिता ॥ ९२ ॥
विभ्रसि मनसोऽन्यस्य वपुषि श्लथतां गता । विस्रस्तबाहुलतिका वदनात्कटकोऽपतत् ॥ ९३ ॥

कस्याश्चिदन्यवनिताकर्णाभरणसंगतः । विच्छिन्नपतितो हारः कुसुमांजलितां गतः ॥ ९४ ॥
बभूवुर्दृष्टयस्तासां निमेषपरिवर्जिताः । गतयोरपि कासांचित्तयोर्दूरं तथा स्थिताः ॥ ९५ ॥
इति वरभवनाद्रिस्त्रीलताप्रमुक्तपुष्पप्रकरगलितधूलीधूसराकाशदेशाः ।
परमविभवभाजो भूभुजो राघवाद्याः प्रविविशुरतिरम्याः मंगलं मंगलाढ्यम् ॥९६॥
अनभिसंहितमीदृशमुत्तमं दयितजं तु समागमनोत्सवम् ।
भजति पुण्यरविप्रतिबोधितप्रवरमानसचारिरुहो जनः ॥ ९७ ॥

इति श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे रामलवणांकुशसमागमाभिधानं नाम त्र्युत्तरशतं पर्व ॥ १०३ ॥

---

# अथ चतुरुत्तरशतं पर्व ।

अथ विज्ञापितोऽन्यस्मिन्दिने हलधरो नृपः । मरुन्नंदनसुग्रीवविभीषणपुरःसरैः ॥ १ ॥
नाथ प्रसीद विषयेऽन्यस्मिञ्जनकदेहजा । दुःखमास्ते समानेतुं तामादेशो विधीयताम् ॥ २ ॥
निःश्वस्य दीर्घमुष्णं च क्षणं किंचिद्विचिन्त्य च । ततो जगाद पद्माभो बाष्पश्यामितादिङ्मुखः ३

अनघं वेद्मि सीतायाः शीलमुत्तमचेतसः । प्राप्तायाः परिवादं तु पश्यामि वदनं कथम् ॥ ४ ॥
समस्तं भूतले लोकं प्रत्याययतु जानकी । ततस्तया समं वासो भवेदेव कुतोऽन्यथा ॥ ५ ॥
एतस्मिन्भुवने तस्मान्नृपाः जनपदैः समम् । निमंत्र्यंतां परं प्रीत्या सकलाश्च नभश्चराः ॥ ६ ॥
समक्षं शपथं तेषां कृत्वा सम्यग्विधानतः । निरघप्रभवं सीता शचीव प्रतिपद्यताम् ॥ ७ ॥
एवमस्त्विति तैरेवं कृतं क्षेपविवर्जितम् । राजानः सर्वदेशेभ्यः सर्वदिग्भ्यः समाहृताः ॥ ८ ॥
नानाजनपदा बालवृद्धयोषित्समन्विताः । अयोध्यानगरीं प्राप्ता महाकौतुकसंगताः ॥ ९ ॥
असूर्यंपश्यनार्योऽपि यत्राऽऽजग्मुःससंभ्रमाः । ततः किं प्रकृतिस्थस्य जनस्यान्यस्य भण्यताम् १०
वर्षीयांसोऽतिमात्रं ये बहुवृत्तांतकोविदाः । राष्ट्रप्राग्रहराः ख्यातास्ते चान्ये च समागताः ॥११॥
तदा दिक्षु समस्तासु मार्गत्वं सर्वमेदिनीम् । नीता जनसमूहेन परसंघट्टमीयुषा ॥ १२ ॥
तुरगैः स्यन्दनैर्युग्यैः शिबिकाभिर्मतंगजैः । अन्यैश्च विविधैर्यानैर्लोकसंपत्समागताः ॥ १३ ॥
आगच्छद्भिः खगैरूर्ध्वमधश्च क्षितिगोचरैः । जगज्जंगममेवेति तदा समुपलक्ष्यते ॥ १४ ॥
सुप्रपंचाः कृता मंचाः क्रीडापर्वतसुंदराः । विशालाः परमा शाला मंडिता दूष्यमंडपाः ॥१५॥
अनेकपुरसंपन्नाः प्रासादाः स्तंभधारिताः । उदारजालकोपेता रचितोदारमंडपाः ॥१६॥

तेषु स्त्रियः समं स्त्रीभिः पुरुषा पुरुषैः समम् । यथायोग्यं स्थिताः सर्वे शपथेक्षणकांक्षिणः ॥१७॥
शयनासनतांबूलभक्तमाल्यादिनाऽखिलम् । कृतमागंतुलोकस्य सौस्थित्यं राजमानवैः ॥ १८ ॥
ततो रामसमादेशात्प्रभामंडलसुंदरः । लंकेशो वायुपुत्रश्च किष्किंधाधिपतिस्तथा ॥ १९ ॥
चंद्रोदरसुतो रत्नजटी चेति महानृपाः । पौंडरीकं पुरं याता बालिनो नभसा क्षणात् ॥ २० ॥
ते विन्यस्य बहिः सैन्यमन्तरंगजनान्विताः । विविशुर्जानकीस्थानं ज्ञापिताः सानुमोदनाः २१
विधाय जयशब्दं च प्रकीर्य कुसुमांजलिम् । पादयोः पाणियुग्मांकमस्तकेन प्रणम्य च ॥ २२ ॥
उपविष्टा महीपृष्ठे चारुकुट्टिमभासुरे । क्रमेण संकथां चक्रुः पौरस्त्या विनयानताः ॥ २३ ॥
संभाषिता सुगंभीरा सीतास्रपिहितेक्षणा । आत्माभिनंदनप्रायं जगाद परिमंथरम् ॥ २४ ॥
असज्जनवचोदावदग्धान्यंगानि सांप्रतम् । क्षीरोदधिजलेनापि न मे गच्छति निर्वृतिम् ॥ २५ ॥
ततस्ते जगदुर्देवि भगवत्यधुनोत्तमे । शोकं सौम्ये च मुंचस्व प्रकृतौ कुरु मानसम् ॥ २६ ॥
असुमान्विष्टपे कोऽसौ त्वयि यः परिवादकः। कोऽसौ चालयति क्षोणीं वह्नेः पिबति कःशिखाम् २७
सुमेरुमूर्तिमुत्क्षेप्तुं साहसं कस्य विद्यते । जिह्वया लेढि मूढात्मा कोऽसौ चंद्रार्कयोस्तनुम् ॥२८॥
गुणरत्नमहीध्रं ते कोऽसौ चालयितुं क्षमः । न स्फुटत्यपवादेन कस्य जिह्वा सहस्रधा ॥ २९ ॥

अस्माभिः किंकरगणा नियुक्ता भरतावनौ । परिवादरतो देव्या दुष्टात्मा वध्यतामिति ॥३०॥
पृथिव्यां योऽतिनीचोऽपि सीतागुणकथारतः । विनीतस्य गृहे तस्य रत्नवृष्टिर्निपात्यताम् ॥३१॥
अनुरागेण ते धान्यराशिषु क्षेत्रमानवाः । कुर्वन्ति प्रार्थनां शस्यसंपत्प्रार्थनतत्पराः ॥ ३२ ॥
एतत्ते पुष्पकं देवि प्रेषितं रघुभानुना । प्रसीदारुह्यतामेतद्गम्यतां कोशलां पुरीम् ॥ ३३ ॥
पद्मः पुरं च देशश्च न शोभंते त्वया विना । यथा तरुगृहाकाशं लतादीपेन्दुमूर्त्तिभिः ॥ ३४ ॥
मुखं मैथिलि पश्याद्य सद्यः पूर्णेन्दुरुक्प्रभोः । ननु पत्युर्वचः कार्यमवश्यं कोविदे त्वया ॥३५॥
एवमुक्ता प्रधानस्त्रीशतोत्तमपरिच्छदा । महद्‌र्ध्या पुष्पकारूढा तरसा नभसा ययौ ॥ ३६ ॥
अथायोध्यां पुरीं दृष्ट्वा भास्करं चारुसंगतम् । सा महेन्द्रोदयोद्याने निन्ये चितातुरा निशाम् ॥३७॥
यदुद्यानं सपद्मायास्तदासीत्सुमनोहरम् । तदेतत्स्मृतपूर्वायास्तस्या जातमसांप्रतम् ॥ ३८ ॥
सीता शुद्ध्यनुरागाद्वा पद्मबंधावथोदिते । प्रसाधितेऽखिले लोके किरणैः किंकरैरिव ॥ ३९ ॥
शपथादिव दुर्वादे भीते ध्वान्ते क्षयं गते । समीपं पद्मनाभस्य प्रस्थिता जनकात्मजा ॥ ४० ॥
सा करेणुसमारूढा दौर्मनस्याहतप्रभा । भास्करालोकदष्टेव सानुगाऽऽसीन्महौषधिः ॥ ४१ ॥
तथाप्युत्तमनारीभिरावृता भद्रभावना । रेजे सा नितरां तन्वी ताराभिर्वा विधोः कला ॥ ४२॥

ततः परिषदं पृथ्वीं गंभीरां विनयस्थिताम् । वंद्यमानेऽभ्यमाना च धीरा रामांगनाविशत् ॥४३॥
विषादी विस्मयी हर्षी संक्षोभी जनसागरः । वर्द्धस्व जय नंदेति चकाराम्रेडितं स्वनम् ॥ ४४ ॥
अहोरूपमहो धैर्यमहो सत्त्वमहो द्युतिः । अहो महानुभावत्वमहो गांभीर्यमुत्तमम् ॥ ४५ ॥
अहोऽस्या वीतपंकत्वं समागमनसूचितम् । श्रीमज्जनकराजस्य सुतायाः सितकर्मणः ॥ ४६ ॥
एवमुद्धृषितांगानां नराणां सहयोषिताम् । वदनेभ्यो विनिश्चेरुर्वाचो व्याप्तदिगंतराः ॥ ४७ ॥
गगने खेचरो लोको धरण्यां धरणीचरः । उदात्तकौतुकस्तस्थौ निमेषरहितेक्षणः ॥ ४८ ॥
प्रजातसम्मदाः केचित्पुरुषाः प्रमदास्तथा । अभीक्षांचक्रिरे रामं संक्रन्दनमिवामराः ॥ ४९ ॥
पार्श्वस्थौ वीक्ष्य रामस्य केचिच्च लवणांकुशौ । जगदुः सदृशावस्य सुकुमाराविमाविति ॥ ५० ॥
लक्ष्मणं केचिदैक्षंत प्रतिपक्षक्षयक्षमम् । शत्रुघ्नसुंदरं केचिदके जनकनंदनम् ॥ ५१ ॥
रुयाते केचिद्धनूमंतं त्रिकूटाधिपतिं परे । अन्ये विराधितं केचित्किष्किधनगरेश्वरम् ॥ ५२ ॥
केचिज्जनकाराजस्य सुतां विस्मितचेतसः । वसतिः सा हि नेत्राणां क्षणमात्रान्यचारिणाम् ५३
उपसृत्य ततो रामं दृष्ट्वा व्याकुलमानसा । वियोगसागरस्यांतं प्राप्तं जानक्यमन्यत ॥ ५४ ॥
प्राप्तायाः पद्मभार्याया लक्ष्मणोऽर्घं ददौ ततः । प्रणामं चक्रिरे भूपा संभ्रान्ता रामपार्श्वगाः ॥५५॥

ततोऽभिमुखमायंतीं वीक्ष्य तां रभसान्विताम् । राघवोऽक्षोभ्यसत्त्वोऽपि सकंपहृदयोऽभवत् ॥५६॥
अचिंतयच्च मुक्ताऽपि वने व्यालसमाकुले । मम लोचनचौरीयं कथं भूयः समागता ॥ ५७ ॥
अहो विगतलज्जेयं महासत्त्वसमन्विता । यैवं निर्वास्यमानापि विरागं न प्रपद्यते ॥ ५८ ॥
ततस्तदिंगितं ज्ञात्वा वितानीभूतमानसा । विरहो न मयोत्तीर्ण इति साऽभूद्विषादिनी ॥ ५९ ॥
विरहोदन्वतः कूलं मे मनः पात्रमागतम् । नूनमेष्यति विध्वंसमिति चिंताकुलाऽभवत् ॥ ६० ॥
किंकर्तव्यविमूढा सा पादांगुष्ठेन संगता । विलिखन्ती क्षितिं तस्थौ बलदेवसमीपगा ॥ ६१ ॥
अग्रतोऽवस्थिता तस्य विरेजे जनकात्मजा । पुरंदरपुरो जाता लक्ष्मीरिव शरीरिणी ॥ ६२ ॥
ततोऽभ्यधायि रामेण सीते तिष्ठसि किं पुरः । अपसर्प न शक्तोऽस्मि भवतीमभिवीक्षितुम् ॥६३॥
मध्याह्ने दीधितिं सौरीमाशीविषमणेः शिखाम् । वरमुत्सहते चक्षुरीक्षितुं भवतीं तु नो ॥ ६४ ॥
दशास्यभवने मासान्बहूनंतःपुरावृता । स्थिता यदाहृता भूयः समस्तं किं ममोचितम् ॥ ६५ ॥
ततो जगाद वैदेही निष्ठुरो नास्ति त्वत्समः । तिरस्करोषि मां येन सुविद्यां प्राकृतो यथा॥६६॥
दोहलच्छद्मना नीत्वा वनं कुटिलमानसः । गर्भाधानसमेतां मे त्यक्तुं किं सदृशं तव ॥ ६७ ॥
असमाधिमृतिं प्राप्ता तत्र स्यामहकं यदि । ततः किं ते भवेत्सिद्धं मम दुर्गतिदायिनः ॥ ६८ ॥

अतिस्वल्पोऽपि सद्भावो मय्यस्ति यदि वा कृपा । क्षांत्यार्याणां ततः किं न नीत्वा वसतिमुज्झिता ॥
अनाथानामबंधूनां दरिद्राणां सुदुःखिनाम् । जिनशासनमेतद्धि शरणं परमं मतम् ॥ ७० ॥
एवं गतेऽपि पद्माभ प्रसीद किमिहोरुणा । कथितेन प्रयच्छाऽऽज्ञामित्युक्त्वा दुःखिताऽरुदत् ॥७१॥
रामो जगाद जानामि देवि शीलं तवानघम् । मदनुव्रततां चोच्चैर्भावस्य च विशुद्धताम् ॥ ७२ ॥
परिवादमिमं किन्तु प्राप्ताऽसि प्रकटं परम् । स्वभावकुटिलस्वांतामेतां प्रत्यायय प्रजाम् ॥ ७३ ॥
एवमस्त्विमिति वैदेही जगौ सम्मदिनी ततः । दिव्यैः पंचभिरप्येषा लोकं प्रत्याययाम्यहम् ॥७४॥
विषाणां विषमं नाथ कालकूटं पिबाम्यहम् । आशीविषोऽपि यं घ्रात्वा सद्यो गच्छति भस्मताम् ॥
आरोहामि तुलां वह्निज्वालां रौद्रां विशामि वा । यो वा भवदभिप्रेतः समयस्तं करोम्यहम् ॥७६॥
क्षणं विचिन्त्य पद्माभो जगौ वह्निं विशेत्यतः । जगौ सीता विशामीति महासम्मदधारिणी ७७
प्रतिपन्नोऽनया मृत्युरित्युदीर्यत नारदः । शोकोत्पीडैरपीड्यन्त श्रीशैलाद्या नरेश्वराः ॥ ७८ ॥
पावकं प्रविविक्षन्तीं परिनिश्चित्य मातरम् । चक्रतुस्तद्गतिं बुद्धावात्मनोर्लवणांकुशौ ॥ ७९ ॥
महाप्रभावसंपन्नः प्रहर्षं धारयंस्ततः । सिद्धार्थक्षुल्लकोऽवोचदुद्धृत्य भुजमुन्नतम् ॥ ८० ॥
न सुरैरपि वैदेह्याः शीलव्रतमशेषतः । शक्यं कीर्त्तयितुं कैव कथा क्षुद्रशरीरिणाम् ॥ ८१ ॥

पातालं प्रविशेन्मेरुः शुष्येयुर्मकरालयाः । न पद्मचलनं किंचित्सीताशीलव्रतस्य तु ॥ ८२ ॥
इंदुरर्कत्वमाच्छेदर्कः शीतांशुतां व्रजेत् । न तु सीतापरीवादः कथंचित्सत्यतां व्रजेत् ॥ ८३ ॥
विद्याबलसमृद्धेन मया पंचसु मेरुषु । वंदना जिनचंद्राणां कृता शाश्वतधामसु ॥ ८४ ॥
सा मे विपुलतां यायात्पद्मनाभ सुदुर्लभा । विपत्तिर्यदि सीतायाः शीलस्यास्ति मनागपि ॥८५॥
भूरिवर्षसहस्राणि सचेलेन मया कृतम् । ततस्तेन शपे नाहं यथेमौ तव पुत्रकौ ॥ ८६ ॥
भीमज्वालावतीभंगं सर्वभंगं सुनिष्ठुरम् । मा विक्षदनलं सीता तस्मात्पद्म विचक्षण ॥ ८७ ॥
व्योम्नि वैद्याधरो लोको धरण्यां धरणीचरः । जगाद साधु साधूक्तमिति मुक्तमहास्वनः ॥८८॥
प्रसीद देव पद्माभ प्रसीद व्रज सौम्यताम् । नाथ मा राम मा राम कार्षीः पावकमानसम् ॥ ८९ ॥
सती सीता सती सीता न संभाव्यमिहान्यथा । महापुरुषपत्नीनां जायते न विकारिता ॥ ९० ॥
इति बाष्पभराद्वाचो गद्गदाज्जनसागरात् । संक्षुब्धादभिनिश्चेरुर्व्याप्तसर्वदिगंतराः ॥ ९१ ॥
महाकोलाहलस्वानैः समं सर्वासुधारिणाम् । अत्यंतशोकिनां स्थूला निपेतुर्बाष्पबिंदवः ॥ ९२ ॥
पद्मो जगाद यद्येवं भवंतः करुणापराः । ततः पुरा परिवादमभाषिध्वं कुतो जनाः ॥ ९३ ॥
एवमाज्ञापयत्तीव्रमनपेक्षश्च किंकरान् । आलंब्य परमं सत्त्वं विशुद्धिन्यस्तमानसः ॥ ९४ ॥

पुरुषौ द्वावधस्ताद्द्राक् खन्यतामत्र मेदिनी । शतानि त्रीणि हस्तानां चतुष्कोणा प्रमाणतः ९६
प्रचंडबहलज्वालो ज्वाल्यतामाशुशुक्षणिः । साक्षान्मृत्युरिवोपात्तविग्रहो निर्विलंबितम् ॥ ९७ ॥
यथाऽऽज्ञापयसीत्युक्त्वा महाकुद्दालपाणिभिः । किंकरैस्तत्कृतं सर्वं कृतांतपुरुषोत्तमैः ॥ ९८ ॥
यस्यामेवाथ वेलायां संवादः पद्मसीतयोः । क्रियते किंकरैर्भूमिमनुष्ठानं च दाहनम् ॥ ९९ ॥
तदनंतरं शर्वर्यां ध्यानमुत्तममीयुषः । महेन्द्रोदयमेदिन्यां सर्वभूषणयोगिनः ॥ १०० ॥
उपसर्गो महानासीज्जनितः पूर्ववैरतः । अत्यंतरौद्रराक्षस्या विद्युद्वक्त्राभिधानया ॥ १०१ ॥
अपृच्छदथ संबंधं श्रेणिको मुनिपुंगवम् । ततो गणधरोऽवोचन्नरेंद्र श्रूयतामिति ॥ १०२ ॥
विजयार्द्धोत्तरे वास्ये सर्वं पूर्वत्र शोभिते । गुंजाभिधाननगरे राजाऽभूत्सिंहविक्रमः ॥ १०३ ॥
तस्य श्रीरित्यभूद्भार्या पुत्रः सकलभूषणः । अष्टौ शतानि तत्कान्ता अग्राः किरणमंडला ॥१०४॥
कदाचित्सा सपत्नीभिरुच्यमाना सुमानसा । चित्रे मैथुनिकं चक्रे देवी हेमशिखाभिधम् ॥१०५॥
तं राजा सहसा वीक्ष्य परमं कोपमागतः । पत्नीभिश्चोच्यमानश्च प्रसादं पुनरागमत् ॥ १०६ ॥
सम्मदेनान्यदा सुप्ता साध्वी किरणमंडला । मुहुर्हेमशिखाभिख्यां प्रमादात्समुपाददे ॥ १०७ ॥
श्रुत्वा तां सुतरां क्रुद्धो राजा वैराग्यमागतः । प्राव्राजीत्साऽपि मृत्वाऽभूद्विद्युदास्येति राक्षसी १०८

तस्य सा भ्रमतो भिक्षां कृत्वा त्रुटितबंधनम् । मतंगजं परिक्रुद्धा प्रत्यूहनिरताऽभवत् ॥ १०९ ॥
गृहदाहं रजोवर्षमश्वोक्षाभिमुखागमम् । कंटकावृतमार्गत्वं तथा चक्रे दुरीहिता ॥ ११० ॥
छित्त्वाऽन्यदा गृहे संधिमेतं प्रतिमया स्थितम् । स्थापयत्यानने तस्य स चौर इति गृह्यते १११
मुच्यते च पराभूय परमार्थपराङ्मुखैः । महता जनवृंदेन स्वनता बद्धमंडलः ॥ ११२ ॥
कृतभिक्षस्य निर्यातः कदाचिद्भिक्षदास्त्रियः । हारं गलेऽस्य बध्नाति स चौर इति कथ्यते ११३
अतिक्रूरमनाः पापा एवमादीनुपद्रवान् । चक्रे सा तस्य निर्वेदरहिता सततं परान् ॥ ११४ ॥
ततोऽस्य प्रतिमास्थस्य महेंद्रोद्यानगोचरे । उपसर्गं परं चक्रे पूर्ववैरानुबंधतः ॥ ११५ ॥
वेतालैः करिभिः सिंहैर्व्याघ्रैरुग्रैर्महोरगैः । नानारूपैर्गुणैर्दिव्यनारीदर्शनलोचनैः ॥ ११६ ॥
उपद्रवैर्यदाऽभीभिः स्खलितं नास्य मानसम् । तदा तस्य मुनीन्द्रस्य ज्ञानं केवलमुद्गतम् ११७
ततः केवलसंभूतिमहिमाहितमानसाः । सुरासुराः समायाताः सुनाशीरपुरःसराः ॥ ११८ ॥
स्तंबेरमैर्मृगाधीशैः स्थूरीपृष्ठैः क्रमेलकैः । बालेयैरुरुभिर्व्याघ्रैः शरभैः सृमरैः खगैः ॥ ११९ ॥
विमानैः स्यन्दनैर्युग्यैर्यानैरन्यैश्च चारुभिः । ज्योतिःपथं समासाद्य महासंपत्समन्विताः ॥१२०॥
पवनोद्भूतसत्केशवस्त्रकेतनपंक्तयः । मौलिकुंडलहारांशुसमुद्योतितपुष्कराः ॥ १२१ ॥

अप्सरोगणसंकीर्णाः साकेताभिमुखाः सुराः । अवतेरुरलं हृष्टाः पश्यन्तो धरणीतलम् ॥१२२॥
अवलोक्य ततः सीतावृत्तान्तं मेषकेतनः । शक्रं जगाद देवेंद्र पश्येदमपि दुष्करम् ॥ १२३ ॥
सुराणामपि दुःस्पर्शो महाभयसमुद्भवः । सीताया उपसर्गोऽयं कथं नाथ प्रवर्त्तते ॥ १२४ ॥
श्राविकायाः सुशीलायाः परमस्वच्छचेतसः । दुरीक्ष्यः कथमेतस्या जायतेऽयमुपप्लवः ॥ १२५ ॥
आखंडलस्ततोऽवोचदहं सकलभूषणम् । त्वरितं वंदितुं यामि कर्त्तव्यं त्वमिहाश्रय ॥ १२६ ॥
अभिधायेति देवेंद्रो महेन्द्रोदयसंमुखम् । ययावेषोऽपि मेषांकः सीतास्थानमुपागमत् ॥ १२७ ॥
तत्र व्योमतलस्थोऽसौ विमानशिखरे स्थितः । सुमेरुशिखरच्छाये................ ॥ १२८ ॥
...................................... । रविरिव विराजमानः सर्वजनमनोहरं स पश्यति रामम् ॥१२९॥

इति श्रीरविषेणाचार्यप्रोक्ते श्रीपद्मपुराणे सकलभूषणदेवागमनाभिधानं नाम चतुरुत्तरशतं पर्व ॥१०४॥

# अथ पंचोत्तरशतं पर्व ।

तां निरीक्ष्य ततो वापीं तृणकाष्ठप्रपूरिताम् । समाकुलमना दध्याविति काकुत्स्थचंद्रमाः ॥ १ ॥
कुतः पुनरिमां कांतां पश्येयं गुणतूणिकाम् । महालावण्यसंपन्नां द्युतिशीलपरावृताम् ॥ २ ॥

विकासिमालतीमाला सुकुमारशरीरिका । नूनं यास्यति विध्वंसं स्पृष्टमात्रेव वह्निना ॥ ३ ॥
अभविष्यदियं नो चेत्कुले जनकभूभृतः । परिवादमिमं नाप्स्यन्मरणं च हुताशने ॥ ४ ॥
उपलप्स्ये कुतः सौख्यं क्षणमप्यनया विना । वरं वासोऽनयाऽरण्ये न विना दिवि राजते ॥५॥
महानिश्चिन्तचित्तेयमपि मर्त्तुं व्यवस्थिता । प्रविशंती कृतास्थाग्निं रोद्धुं लोकस्य लज्यते ॥ ६ ॥
उन्मुक्तसुमहाशब्दः सिद्धार्थः क्षुल्लकोऽप्ययम् । तूष्णीं स्थितः किमु व्याजं करोम्येतन्निवर्त्तते॥७॥
अथ वा येन यादृक्षं मरणं समुपार्जितम् । नियमं स तदाऽऽप्नोति कस्तद्वारयितुं क्षमः ॥ ८ ॥
तदाऽपह्रियमाणाया ऊर्ध्वं क्षारमहोदधेः । मदनुव्रतचित्ताया नेच्छत्येषेति कोपिता ॥ ९ ॥
लंकाधिपतिना किं नालुप्तमस्याः शिरोऽसिना । येनाऽयमपरः प्राप्तः संशयोऽत्यंतदुस्तरः ॥१०॥
वरं हि मरणं श्लाघ्यं न वियोगः सुदुःसहः । श्रुतिस्मृतिहरोऽसौ हि परमः कोऽपि निंदितः ॥११॥
यावज्जीवं हि विरहस्तापं यच्छति चेतसः । मृतेति छिद्यते स्वैरं कथाकांक्षा च तद्गता ॥ १२ ॥
इति चिंतातुरे तस्मिन् वाप्यां प्रज्वाल्यतेऽनलः । समुत्पन्नोरुकारुण्या रुरुदुर्नरयोषितः ॥ १३ ॥
ततोऽन्धकारितं व्योम धूमेन घनमुद्यता । अभूदकालसंप्राप्तप्रावृण्मेघैरिवावृतम् ॥ १४ ॥
भृंगालकामिवोद्भूतं जगदन्यदिदं तदा । कोकिलात्मकमाहोस्विदाहो पारापतात्मकम् ॥ १५ ॥

अशक्नुवन्निव द्रष्टुमुपसर्गं तथाविधम् । दयार्द्रहृदयः शीघ्रं भानुः क्वापि तिरोदधे ॥ १६ ॥
प्रज्वालज्वलनश्चोग्रः सर्वाशासु महाजवः । गव्यूतिपरिमाणाभिर्ज्वालाभिर्विकरालितः ॥ १७ ॥
किं निरंतरतीव्रांशुसहस्रैश्छादितं नभः । पातालं किंशुकांगौघाः सहसा किं समुत्थिताः ॥ १८ ॥
आहोस्विद्गगनं प्राप्तमुत्पातमयसंध्यया । हाटकात्मकमेकं तु प्रारब्धं भवितुं जगत् ॥ १९ ॥
सौदामिनीमयं किन्तु संजातं भुवनं तदा । जिगीषया परो जातः किमु जंगममंदरः ॥ २० ॥
ततः सीता समुत्थाय नितांतस्थिरमानसा। कार्योत्सर्गं क्षणं कृत्वा स्तुत्वा भावार्पितान् जिनान् २१
ऋषभादीन्नमस्कृत्य धर्मतीर्थस्य देशकान् । सिद्धान् समस्तसाधूंश्च सुव्रतं च जिनेश्वरम् ॥२२॥
यस्य संसेव्यते तीर्थं तदा सम्मदधारिभिः । परमैश्वर्यसंयुक्तैस्त्रिदशा सुरमानवैः ॥ २३ ॥
सर्वप्राणिहिताऽऽचार्यचरणौ च मनःस्थितौ । प्रणम्योदारगंभीरा विनीता जानकी जगौ ॥२४॥
कर्मणा मनसा वाचा रामं मुक्त्वा परं नरम् । समुद्वहामि न स्वप्नेप्यन्यं सत्यमिदं मम ॥ २५ ॥
यद्येतदनृतं वच्मि तदा मामेष पावकः । भस्मसाद्भावमप्राप्तामपि प्रापयतु क्षणात् ॥ २६ ॥
अथ पद्मान्तरं नान्यं मनसाऽपि वहाम्यहम् । ततोऽयं ज्वलनो धाक्षीन्मा मां शुद्धिसमन्विताम् २७
मिथ्यादर्शनिनीं पापां क्षुद्रिकां व्यभिचारिणीम् । ज्वलनो मां दहत्येष सतीं व्रतस्थितां तु मा २८

अभिधायेति सा देवी प्रविवेशानलं च तम् । जातं च स्फटिकं स्वच्छं सलिलं सुखशीतलम् ॥२९॥
भित्त्वेव सहसा क्षोणीं तरसा पयसाद्यता । परमं पूरिता वापी रंगद्भंगकुलाऽभवत् ॥ ३० ॥
नोत्सुकानि न काष्ठानि नोगारा न तृणादिकम् । आलोक्यते तदा तत्र वृद्धं पावकसूचनम् ॥३१॥
पर्यन्तबद्धफेनौघवलया वेगशालिनः । आवर्तास्तत्र संवृद्धा गंभीरा भीमदर्शनाः ॥ ३२ ॥
भवन्मृदंगनिस्वानात्क्वचिद्गुलुगुलायते । भुंभुंद्भुंभायतेऽन्यत्र क्वचित्पटपटायते ॥ ३३ ॥
क्वचिन्मुंचति हुंकारान्धूंकारान्क्वचिदायतान् । क्वचिद्दिमिदिमिस्वाना जुगुधुद्भूदिति क्वचित् ? ॥
क्वचित्कलकलारावांच्छसद्धसदिति क्वचित् । द्रुद्रु घंटासमुत्तस्थामिति क्वचिदितीति च ॥३५॥
एवमादिपरिक्षुब्धसागराकारनिःस्वना । क्षणाद्रोधःस्थितं वापी लग्ना प्लावयितुं जनम् ॥ ३६ ॥
जानुमात्रं क्षणादंभः श्रोणिदघ्नमभूत्क्षणात् । पुनर्निमेषमात्रेण स्तनद्वयसतां गतम् ॥ ३७ ॥
नैति पौरुषतां यावत्तावत्त्रस्ता महीचराः । किंकर्तव्यातुरा जाताः खेचरा वियदाश्रिताः ॥३८॥
कंठस्पर्शि ततो जाते वारिण्युरुजवान्विते । विह्वला संगता मंचास्तेऽपि चंचत्कतां गताः ॥ ३९ ॥
केचित्स्तवितुमारब्धा जातेंभसि शिरोतिगे । वस्त्रडिंभकसंबंधसंदिग्धोर्द्धैकवाहनाः ॥ ४० ॥
त्रायस्व देवि त्रायस्व मान्ये लक्ष्मि सरस्वति । महाकल्याणि धर्माढ्ये सर्वप्राणिहितैषिणि ॥४१॥

दयां कुरु महासाध्वि मुनिमानसनिर्मले । इति वाचो विनिश्चेरुर्वारिविह्वललोकतः ॥ ४२ ॥
ततः सरसिरुड्गर्भकोमलं नखभावितम् । स्पृष्ट्वा वापीवधूरूर्मिहस्तैः पद्मक्रमद्वयम् ॥ ४३ ॥
प्रशांतकलुषावर्त्ता त्यक्तभीषणनिःस्वनाः । क्षणेन सौम्यतां प्राप्ता ततो लोकोऽभवत्सुखी ॥४४॥
उत्पलैः कुमुदैः पत्रैः संछन्ना साऽभवत्क्षणात् । सौरभ्यक्षीवभृंगौघसंगीतकमनोहरा ॥ ४५ ॥
क्रौंचानां चक्रवाकानां हंसानां च कंदंबकैः । तथा कादंबकादीनां सुस्वनानां विराजिता ॥४६॥
मणिकांचनसोपानैर्वीचीसंतानसंगिभिः । पुष्पैर्मरकतच्छायाकोमलैश्चातिसत्तटा ॥ ४७ ॥
उत्तस्थावथ मध्येस्या विपुलं विमलं शुभम् । सहस्रच्छदनं पद्मविकचं विकटं मृदु ॥ ४८ ॥
नानाभक्तपरीतांगं रत्नोद्योतांशुकावृतम् । आसीत्सिंहासनं तस्य मध्ये तुल्येन्दुमंडलम् ॥ ४९ ॥
तत्रामरवरस्त्रीभिर्मा भैषीरिति सांत्विता । सीताऽवस्थापिता रेजे श्रीरिवात्यद्भुतोदया ॥ ५० ॥
कुसुमांजलिभिः सार्द्धं साधु साध्विति निःस्वनः । गगनस्थैः समुत्सृष्टस्तुष्टैर्देवकदंबकैः ॥ ५१ ॥
जुगुंजुर्मंजवो गुंजा विनेदुः पटहाः पटु । नांद्यो ननंदुरायत्तं चकणुः काहलाः कलम् ॥ ५२ ॥
अशब्दायंत शंखौघा धीरं तूर्याणि दध्वनुः । ववणुर्विशदं वंशाः कांसतालानि चकणुः ॥ ५३ ॥
वल्गितान् क्ष्वेडितोद्घुष्टकुष्ठादिकरणोद्यताः । तुष्टा ननृतुरन्योन्यश्लिष्टा वैद्याधरा गणाः ॥ ५४ ॥

श्रीमज्जनकराजस्य तनया परमोदया । श्रीमतो बलदेवस्य पत्नी विजयतेतराम् ॥ ५५ ॥
अहो चित्रमहो चित्रमहो शीलं सुनिर्मलम् । एवं स्तनः समुत्तस्थौ रोदसी प्राप्य सर्वतः ॥५६॥
ततोऽकृत्रिमसावित्रीस्नेहसंमग्नमानसौ । तीर्त्वा ससंभ्रमौ प्राप्तौ जानकीं लवणांकुशौ ॥ ५७ ॥
स्थितौ च पार्श्वयोः पद्मपुत्रप्रीतिप्रवृद्धया । समाश्वास्य समाघ्रातौ मस्तके प्रणतांगकौ ॥ ५८ ॥
जांबूनदमयीयष्टिमिव शुद्धां हुताशने । अत्युत्तमप्रभाचक्रपरिवारितविग्रहा ॥ ५९ ॥
मैथिलीं राघवो वीक्ष्य कमलालयवासिनीम् । महानुरागरक्तात्मा तदंदिकमुपागमत् ॥ ६० ॥
जगौ च देवि कल्याणि प्रसीदोत्तमपूजिते । शरत्संपूर्णचंद्रास्ये महाद्भुतविचेष्टिते ॥ ६१ ॥
कदाचिदपि नो भूयः करिष्याम्याग ईदृशम् । दुःखं वा ते ततोऽतीतं दोषं मे साध्वि मर्षय ॥६२॥
योषिदष्टसहस्राणामपि त्वं परमेश्वरी । स्थिता मूर्ध्नि ददस्वाज्ञां मय्यपि प्रभुतां कुरु ॥ ६३ ॥
अज्ञानप्रवणीभूतचेतसा मयकेदृशम् । किंवदंतीभयात्सृष्टं कष्टं प्राप्ताऽसि यत्सति ॥ ६४ ॥
सकाननवनामेतां सखेचरजनां महीम् । समुद्रांतां मया साकं यथेष्टं विचर प्रिये ॥ ६५ ॥
पूज्यमाना समस्तेन जगता परमादरम् । त्रिविष्टपसमान् भोगान् भावय स्वमहीतले ॥ ६६ ॥
उद्यद्भास्करसंकाशं पुष्पकं कामगत्वरम् । आरूढा मेरुसानूनि पश्य देवि समं मया ॥ ६७ ॥

तेषु तेषु प्रदेशेषु भवतीचित्तहारिषु । क्रियतां रमणं कांते मया वचनकारिणा ॥ ६८ ॥
विद्याधरवरस्त्रीभिः सुरस्त्रीभिरिवावृता । मनस्विनि भजैश्वर्यं सद्यः सिद्धमनीषिता ॥ ६९ ॥
दोषाब्धिमग्नकस्यापि विवेकरहितस्य मे । उपसन्नस्य सुश्लाघ्ये प्रसीद क्रोधमुत्सृज ॥ ७० ॥
ततो जगाद वैदेही राजन्नैवास्मि कस्यचित् । कुपिता किं विषादं त्वमीदृशं समुपागतः ॥७१॥
न कश्चिदत्र ते दोषस्तीव्रो जानपदो न च । स्वकर्मणा फलं दत्तमिदं मे परिपाकिता ॥ ७२ ॥
बलदेव प्रसादात्ते भोगा भुक्ताः सुरोपमाः । अधुना तदहं कुर्वे जाये स्त्री न यतः पुनः ॥ ७३ ॥
एतैर्विनाशिभिः क्षुद्रैरवसन्नैः सुदारुणैः । किं वा प्रयोजनं भोगैर्मूढमानवसेवितैः ॥ ७४ ॥
योनिलक्षाध्वसं क्रांत्या खेदं प्राप्ताऽस्म्यनुत्तमम् । साहं दुःखक्षयाकांक्षा दीक्षां जैनेश्वरीं भजे ॥७५॥
इत्युक्त्वाऽभिनवाशोकपल्लवोपमपाणिना । मूर्द्धजान् स्वयमुद्धृत्य पद्मायाऽर्पयदस्पृहा ॥ ७६ ॥
इंद्रनीलद्युतिच्छायान्सुकुमारान्मनोहरान् । केशान्वीक्ष्य ययौ मोहं रामोऽपप्तच्च भूतले ॥ ७७ ॥
यावदाश्वासनं तस्य प्रारब्धं चंदनादिना । पृथ्वीमत्यार्यया तावद्दीक्षिता जनकात्मजा ॥ ७८ ॥
ततो दिव्यानुभावेन सा विघ्नपरिवार्जिता । संवृत्ता श्रमणा साध्वी वस्त्रमात्रपरिग्रहा ॥ ७९ ॥
महाव्रतपवित्रांगा महासंवेगसंगता । देवासुरसमायोगं ययौ चोद्यानमुत्तमम् ॥ ८० ॥

पद्मो मौक्तिकगोशीर्षतालवृंतानिलादिभिः । संप्राप्तस्पष्टचैतन्यस्तद्दिङ्न्यस्तनिरीक्षणः ॥ ८१ ॥
अदृष्ट्वा राघवः सीतां शून्यीभूतदशांशकः । शोककोपकषायात्मा समारुह्य महागजम् ॥ ८२ ॥
समुच्छ्रितसितच्छत्रश्चामरोत्करवीजितः । नरेन्द्रैरिन्द्रवद्देवैर्वृतो हस्तितलायतः ॥ ८३ ॥
प्रौढकोकनदच्छायः क्षणसंवृतलोचनः । उदात्तनिनदोऽवोचद्वचोऽपि निजभीतिदम् ॥ ८४ ॥
प्रियस्य प्राणिनो मृत्युर्वरिष्ठो विरहस्तु न । इति पूर्वं प्रतिज्ञातं मया निश्चितचेतसा ॥ ८५ ॥
यदि तत्किं वृथा देवैः प्रातिहार्यमिदं शठैः । वैदेह्या विहितं येन तयेदं समनुष्ठितम् ॥ ८६ ॥
लुप्तकेशीमपीमां मे यदि नार्पयत द्रुतम् । अद्य देवानदेवान्वः करोमि च जगद्वियत् ॥ ८७ ॥
कथं मे ह्रियते पत्नी सुरैर्न्यायव्यवस्थितैः । पुरस्तिष्ठंतु मे शस्त्रं गृह्णन्तु क्व नु ते गताः ॥ ८८ ॥
एवमादिकृतचेष्टो लक्ष्मणेन विनीतिना । सांत्वयमानो बहूपायं प्राप्तः सुरसमागमम् ॥ ८९ ॥
ज्वलज्ज्वलनतोदीप्तिं विभ्राणं परमर्द्धिकम् । वहंतं दहनं देहं कलुषस्योपसेदुषम् ॥ ९० ॥
विबुद्धेष्वपि राजंतं केवलज्ञानतेजसा । वीतजीमूतसंघातं भानुबिंबमिवोदितम् ॥ ९१ ॥
चक्षुःकुमुद्वतीकान्तं चंद्रं वा वीतलांछनम् । परेण परिवेषेण वृत्तं देहस्य तेजसा ॥ ९२ ॥
तमालोक्य मुनिश्रेष्ठं सद्योगाद्वृष्टमानताम् । अवतीर्य च नागेन्द्राज्जगामास्य समीपताम् ॥९३॥

विधाय चांजलिं भक्त्या कृत्वा शान्तः प्रदक्षिणाम् । त्रिविधं गृहिणां नाथोऽनंसीदाश्रमवेश्मनाम् ॥
मुनीन्द्रदेहजच्छायास्तिमितांशुकिरीटिकाः । वैलक्ष्यादिव चंचद्भिः कुंडलैः श्लिष्टगंडकाः ॥९५॥
भावार्पितनमस्काराः करकुड्मलमस्तकाः । मानवेन्द्रैः समं योग्यमुपविष्टाः सुरेश्वराः ॥ ९६ ॥
चतुर्भेदजुषो देवा नानालंकारधारिणः । अलक्ष्यंत मुनीन्द्रस्य रवेरिव मरीचयः ॥ ९७ ॥
रराज राजराजोऽपि रामोऽत्यंतदूरगः । मुनेः सुमेरुकूटस्य पार्श्वे कल्पतरुर्यथा ॥ ९८ ॥
लक्ष्मीधरनरेन्द्रोऽपि मौलिकुंडलराजितः । विद्युत्वानिव जीमूतः शुशुभेंतिकपर्वतः ॥ ९९ ॥
शत्रुघ्नोऽपि महाशत्रुभयदानविचक्षणः । द्वितीय इव भाति स्म कुबेरश्चारुदर्शनः ॥ १०० ॥
गुणसौभाग्यतूणीरौ वीरौ तौ च सुलक्षणौ । सूर्याचंद्रमसौ यद्वद्रेजतुर्लवणांकुशौ ॥ १०१ ॥
बाह्यालंकारमुक्ताऽपि वस्त्रमात्रपरिग्रहा । आर्या रराज वैदेही रविमूर्त्येव संयता ॥ १०२ ॥
मनुष्यनाकवासेषु धर्मश्रवणकांक्षिषु । धरण्यामुपविष्टेषु ततो विनयशालिषु ॥ १०३ ॥
धीरोऽभयनिनादाख्यो मुनिः शिष्यगणाग्रणीः । संदेहतापशान्त्यर्थं पप्रच्छ मुनिपुंगवम् ॥१०४॥
विपुलं निपुणं शुद्धं तत्त्वार्थं मुनिबोधनम् । ततो जगाद योगीशः कर्मक्षयकरं वचः ॥ १०५ ॥
रहस्यं तत्तदा तेन विबुधानां महात्मनाम् । कथितं तत्समुद्रस्य कणमेकं वदाम्यहम् ॥ १०६ ॥

प्रशस्तदर्शनज्ञाननंदनं भव्यसंमतम् । वस्तुतत्त्वमिदं तेन प्रोक्तं परमयोगिना ॥ १०७ ॥
अनंतालोकखांतस्थो मृदंगद्वयसन्निभः । लोको व्यवस्थितोऽधस्तात्तिर्यगूर्द्ध्वव्यवस्थितः ॥१०८॥
त्रैविध्येनामुना तस्य ख्याता त्रिभुवनाभिधा । अधस्तान्मंदरस्याद्रेर्विज्ञेयाः सप्त भूमयः ॥१०९॥
रत्नाभा प्रथमा तत्र यस्यां भवनजाः सुराः । षडधस्तात्ततः क्षोण्यो महाभयसमावहाः ॥११०॥
शर्करावालुकापंकधूमध्वांततमोनिभाः । सुमहादुःखदायिन्यो नित्यांधध्वान्तसंकुलाः ॥ १११ ॥
तप्तायास्तलदुःस्पर्शमहाविषमदुर्गमाः । शीतोग्रवेदनाः काश्चिद्वसारुधिरकर्दमाः ॥ ११२ ॥
श्वसर्पमनुजादीनां कुथितानां कलेवरैः । सन्मिश्रो यो भवेद्गंधस्तादृशस्तत्र कीर्त्तितः ॥ ११३ ॥
नानाप्रकारदुःखौघकारणानि समाहरन् । वाति तत्र महाशब्दः प्रचंडोद्दंडमारुतः ॥ ११४ ॥
रसनस्पर्शनासक्ता जीवास्तत्कर्म कुर्वते । गरिष्ठा नरके येन पतंत्यायसपिंडवत् ॥ ११५ ॥
हिंसावितथचौर्यान्यस्त्रीसंगादनिवर्त्तनाः । नरकेषूपजायन्ते पापभारगुरूकृताः ॥ ११६ ॥
मनुष्यजन्म संप्राप्य सततं भोगसंगताः । जनाः प्रचंडकर्माणो गच्छन्ति नरकावनिम् ॥ ११७ ॥
विधाय कारयित्वा च पापं समनुमोद्य च । रौद्रार्त्तप्रवणाजीवा यान्ति नारकवीजताम् ॥११८॥
वज्रोपमेषु कुड्येषु निःसंधिकृतपारणाः । नारकेनाग्निना पापा दह्यन्ते कृतविस्वराः ॥ ११९ ॥

ज्वलद्वह्निचयाद्भीता यांति वैतरणीं नदीम् । शीतलांबुकृताकांक्षास्तस्यां मुंचति देहकम् ॥१२०॥
ततो महोत्कटक्षारदग्धदेहोरुवेदनाः । मृगा इव परित्रस्ता असिपत्रवनं स्थिता ॥ १२१ ॥
छायाप्रत्याशया यत्र संगता दुष्कृतप्रियाः । प्राप्नुवंत्यसिनाराचचक्रकुंतादिदारुणम् ॥ १२२ ॥
खरमारुतनिर्धूतनरकागसमीरितैः । तीक्ष्णैरस्त्रसमूहैस्ते दार्यन्ते शरणोज्झिताः ॥ १२३ ॥
छिन्नपादभुजस्कंधवर्णवक्त्राक्षिनासिकाः । भिन्नतालुशिरःकुक्षिहृदया निपतंति ते ॥ १२४ ॥
कुंभीपाकेषु पच्यन्ते केचिदूर्ध्वीकृतांघ्रयः । यंत्रैः केचिन्निपीड्यन्ते बलिभिः परुषस्वनम् ॥१२५॥
अरिभिः परमक्रोधैः केचिन्मुद्गरपीडिताः । कुर्वते लोठनं भूमौ सुमहावेदनाकुलाः ॥ १२६ ॥
महातृष्णार्दिता दीना याचंते वारि विह्वलाः । ततः प्रदीयते तेषां त्रपुताम्रादिविद्रुतम् ॥१२७॥
स्फुलिंगोद्गमरौद्रं तं तत्रोद्वीक्ष्य विकंपिताः । परावर्त्तितचेतस्का बाष्पपूरितकंठकाः ॥ १२८ ॥
ब्रुवते नास्ति तृष्णा मे मुंच मुंच व्रजाम्यहम् । अनिच्छतां ततस्तेषां तद्बलेन प्रदीयते ॥ १२९ ॥
विनिपात्य क्षिताविषां क्रंदतां लोहदंडकैः । विदार्यास्यं विषं रक्तं कलिलं च निधीयते ॥१३०॥
तत्तेषां प्रदहत्कंठं हृदयं स्फोटयद्भृशम् । जठरं प्राप्य निर्याति पुरीषराशिना समम् ॥ १३१ ॥
पश्चात्तापहताः पश्चात्पालकैर्नरकावनेः । स्मार्यन्ते दुष्कृतं दीनाः कुशास्त्रपरिभाषितम् ॥ १३२ ॥

गुरुलोकं समुल्लंघ्य तदा वाक्पटुना सता । मांसं निर्दोषमित्युक्तं यत्ते तत्क्वाधुना गतम् ॥१३३॥
मांसेन बहुभेदेन मधुना च पुरा कृतम् । श्राद्धं गुणवदित्युक्तं यत्ते तत्क्वाधुना गतम् ॥ १३४ ॥
इत्युक्त्वा वैक्रियैरन्यैराहत्याहत्य निष्ठुरम् । कुर्वाणाः कृपणं चेष्टाः खादन्ते स्वशरीरकम् ॥१३५॥
स्वप्नदर्शननिःसारां स्मारयित्वा च राजताम् । तज्ज्ञातैरेव पीड्यंते विरूपैस्तो विडंबनैः ॥ १३६ ॥
एवमादीनि दुःखानि जीवाः पापकृतो नृप । निमेषमप्यविश्रान्ता लभंते नारकक्षितौ ॥१३७॥
तस्मात्फलमधर्मस्य ज्ञात्वेदमतिदुःसहम् । प्रशांतहृदयाः संतः सेवध्वं जिनशासनम् ॥ १३८ ॥
अनंतरमधोवासा ज्ञाता भवनवासिनाम् । देवारण्यार्णवद्वीपास्तथा योग्याश्च भूमयः ॥ १३९ ॥
पृथिव्यापश्च तेजश्च मातरिश्वा वनस्पतिः । शेषास्त्रसाश्च जीवानां निकायाः षट् प्रकीर्तिताः ॥१४०॥
धर्माधर्मवियत्कालजीवपुद्गलभेदतः । षोढा द्रव्यं समुद्दिष्टं सरहस्यं जिनेश्वरैः ॥ १४१ ॥
सप्तभंगीवचोमार्गः सम्यक्प्रतिपदं मतः । प्रमाणं सकलादेशो नयोऽवयवसाधनम् ॥ १४२ ॥
एकद्वित्रिचतुःपंचहृषीकेष्वविरोधतः । सत्त्वं जीवेषु विज्ञेयं प्रतिपक्षसमन्वितम् ॥ १४३ ॥
सूक्ष्मबादरभेदेन ज्ञेयास्ते च शरीरतः । पर्याप्ता इतरे चैव पुनस्ते परिकीर्तिताः ॥ १४४ ॥
भव्याभव्यादिभेदं च जीवद्रव्यमुदाहृतम् । संसारे तद्द्वयोन्मुक्ताः सिद्धास्तु परिकीर्तिताः १४५

ज्ञेयदृश्यस्वभावेषु परिणामः स्वशक्तितः । उपयोगश्च तद्रूपं ज्ञानदर्शनतो द्विधा ॥ १४६ ॥
ज्ञानमष्टविधं ज्ञेयं चतुर्धा दर्शनं मतम् । संसारिणो विमुक्ताश्च ते सचित्तविचेतसः ॥ १४७ ॥
वनस्पतिपृथिव्याद्याः स्थावराः शेषकास्त्रसाः । पंचेंद्रियाः श्रुतिघ्राणचक्षुस्त्वग्रसनान्विताः १४८
पोतांडजजरायूनामादितो गर्भसंभवः । देवानामुपपादस्तु नारकाणां च कीर्त्तितः ॥ १४९ ॥
संमूर्च्छनं समस्तानां शेषानां जन्मकारणम् । योन्यस्तु विविधाः प्रोक्ता महादुःखसमन्विताः ॥
औदारिकं शरीरं तु वैक्रियाऽऽहारके तथा । तैजसं कार्मणं चैव विद्धि सूक्ष्मं परं परम् ॥१५१॥
असंख्येयं प्रदेशेन गुणतोऽनंतके परे । आदिसंबंधमुक्तश्च चतुर्णामेककालता ॥ १५२ ॥
जंबूद्वीपमुखा द्वीपा लवणाद्याश्च सागराः । प्रकीर्त्तिताः शुभा नाम संख्यानपरिवर्जिताः ॥१५३॥
पूर्वाद्द्विगुणविष्कंभाः पूर्वविक्षेपवर्तिनः । वलयाकृतयो मध्ये जंबूद्वीपः प्रकीर्त्तितः ॥ १५४ ॥
मेरुनाभिरसौ वृत्तो लक्षयोजनमानभृत् । त्रिगुणं तत्परिक्षेपादधिकं परिकीर्त्तितम् ॥ १५५ ॥
पूर्वापरायतास्तत्र विज्ञेयाः कुलपर्वताः । हिमवांश्च महाज्ञेयो निषधो नील एव च ॥ १५६ ॥
रुक्मी च शिखरी चेति समुद्रजलसंगताः । वास्यान्येभिर्विभक्तानि जंबूद्वीपगतानि च ॥१५७॥
भरताख्यमिदं क्षेत्रं ततो हैमवतं हरिः । विदेहो रम्यकाख्यं च हैरण्यवतमेव च ॥ १५८ ॥

ऐरावतं च विज्ञेयं गंगाद्याश्चापि निम्नगाः । प्रोक्तं द्विर्धातकीखंडे पुष्करार्द्धे च पूर्वकम् ॥१५९॥
आर्या म्लेच्छा मनुष्याश्च मानुषाचलतोऽपरे । विज्ञेयास्तत्प्रभेदाश्च संख्यानपरिवर्जिताः ॥१६०॥
विदेहे कर्मणो भूमिर्भरतैरावते तथा । देवोत्तरकुरुर्भोगे क्षेत्रं शेषाश्च भूमयः ॥ १६१ ॥
त्रिपल्यांतर्मुहूर्त्ते तु स्थिती नृणां परावरे । मनुष्याणामिव ज्ञेया तिर्यग्योनिमुपेयुषाम् ॥ १६२ ॥
अष्टभेदजुषो वेद्या व्यंतराः किंनरादयः । तेषां क्रीडनकावासा यथायोग्यमुदाहृताः ॥ १६३ ॥
ऊर्ध्वं व्यंतरदेवानां ज्योतिषां चक्रमुज्ज्वलम् । मेरुप्रदक्षिणं नित्यं गतिश्चंद्रार्कराजकम् ॥१६४॥
संख्येयानि सहस्राणि योजनानां व्यतीत्य च । तत ऊर्ध्वं महालोको विज्ञेयः कल्पवासिनाम् ॥
सौधर्माख्यस्तथैशानः कल्पस्तत्र प्रकीर्त्तितः । ज्ञेयः सानत्कुमारश्च तथा माहेद्रसंज्ञकः ॥१६६॥
ब्रह्मो ब्रह्मोत्तरो लोको लांतवश्च प्रकीर्त्तितः । कापिष्ठश्च तथा शुक्रो महाशुक्राभिधस्तथा १६७
शतारोऽथ सहस्रारः कल्पश्चानतशब्दितः । प्राणतश्च परिज्ञेयस्ततपरावारणच्युतौ ॥ १६८ ॥
नव ग्रैवेयकास्ताभ्यामुपरिष्टात्प्रकीर्त्तिताः । अहमिंद्रतया येषु परमास्त्रिदशाः स्थिताः ॥ १६९ ॥
विजयो वैजयंतश्च जयंतोऽथापराजितः । सर्वार्थसिद्धिनामा च पंचैतेऽनुत्तराः स्मृताः ॥१७०॥
अग्रे त्रिभुवनस्यास्य क्षेत्रमुत्तमभासुरम् । कर्मबंधनमुक्तानां पदं ज्ञेयं महाद्भुतम् ॥ १७१ ॥

ईषत्प्राग्भारसंज्ञासौ पृथिवी शुभदर्शना । उत्तानधवलच्छत्रप्रतिरूपा शुभावहा ॥ १७२ ॥
सिद्धा यत्रावतिष्ठंते पुनर्भवविवर्जिताः । महासुखपरिप्राप्ताः स्वात्मशक्तिव्यवस्थिताः ॥ १७३ ॥
रामो जगाद भगवन्तेषां विगतकर्मणाम् । संसारभावनिर्मुक्तं निर्दुःखं कीदृशं सुखम् ॥ १७४ ॥
उवाच केवली लोकत्रितयस्यास्य यत्सुखम् । व्याबाधभंगदुःपाकैर्दुःखमेव हि तन्मतम् ॥१७५॥
कर्मणाऽष्टप्रकारेण परतंत्रस्य सर्वदा । नास्य संसारिजीवस्य सुखं नाम मनागपि ॥ १७६ ॥
यथा सुवर्णपिंडस्य वेष्टितस्यायसा भृशम् । आत्मीया नश्यति छाया तथा जीवस्य कर्मणा १७७
मृत्युजन्मजराव्याधिसहस्रैः सततं जनाः । मानसैश्च महादुःखैः पीड्यंते सुखमत्र किम् ॥१७८॥
असिधारामधुस्वादसमं विषयजं सुखम् । दग्धचंदनवद्दिव्यं चक्रिणां सविषान्नवत् ॥ १७९ ॥
ध्रुवं परमनाबाधमुपमानविवार्जितम् । आत्मस्वाभाविकं सौख्यं सिद्धानां परिकीर्त्तितम् ॥१८०॥
सुप्तया किं ध्वस्तनिद्राणां नीरोगाणां किमौषधैः । सर्वज्ञानां कृतार्थानां किं दीपतपनादिना ॥
आयुधैः किमभीतानां निर्मुक्तानामरातिभिः । पश्यतां विपुलं सर्वसिद्धार्थानां किमीहया ॥१८२॥
माहात्म्यसुखतृप्तानां किं कृत्यं भोजनादिना । देवेंद्रा अपि यत्सौख्यं वांछंति सततोन्मुखाः ॥
नास्ति यद्यपि तत्त्वेन प्रतिमाऽस्य तथाऽपि ते । वदामि प्रतिबोधार्थं सिद्धात्मसुखगोचरे १८४

सुचक्रवर्त्तिनो मर्त्याः सेंद्रा यश्च सुरा सुखम् । कालेनांतविमुक्तेन सेवंते भवहेतुजम् ॥ १८५ ॥
अनंतपूरणस्यापि भागस्य तदकर्मणाम् । सुखस्य तुल्यतां नैति सिद्धानामीदृशं सुखम् ॥१८६॥
जनेभ्यः सुखिनो भूपाः भूपेभ्यश्चक्रवर्त्तिनः । चक्रिभ्यो व्यंतरास्तेभ्यः सुखिनो ज्योतिषोऽमराः ॥
ज्योतिर्भ्यो भवनावासास्तेभ्यः कल्पभुवः क्रमात् । ततो ग्रैवेयकावासास्ततोऽनुत्तरवासिनः १८८
अनंतानंतगुणतस्तेभ्यः सिद्धिपदास्थिताः । सुखं नापरमुत्कृष्टं विद्यते सिद्धसौख्यतः ॥ १८९ ॥
अनंतं दर्शनं ज्ञानं वीर्यं च सुखमेव च । आत्मनः स्वमिदं रूपं तच्च सिद्धेषु विद्यते ॥ १९० ॥
संसारिणस्तु तान्येव कर्मोपशमभेदतः । वैचित्र्यवंति जायंते बाह्यवस्तुनिमित्ततः ॥ १९१ ॥
शब्दादिप्रभवं सौख्यं शल्यितं व्याधिकीलकैः । नवव्रणभवे तत्र सुखाशा मोहहेतुकाः ॥१९२॥
गत्यागतिविमुक्तानां प्रक्षीणक्लेशसंपदाम् । लोकशेखरभूतानां सिद्धानामसमं सुखम् ॥ १९३ ॥
यदीयं दर्शनं ज्ञानं लोकालोकप्रकाशकम् । क्षुद्रद्रव्यप्रकाशेन नैव ते भानुना समाः ॥ १९४ ॥
करस्थामलकज्ञानसर्वभागेप्यपुष्कलम् । छद्मस्थपुरुषोत्पन्नं सिद्धज्ञानस्य नो समम् ॥ १९५ ॥
समं त्रिकालभेदेषु सर्वभावेषु केवली । ज्ञानदर्शनयुक्तात्मा नेतरः सोऽपि सर्वथा ॥ १९६ ॥
ज्ञानदर्शनभेदोऽयं यथा सिद्धेतरात्मनाम् । सुखेऽपि दृश्यतां तद्वत्तथा वीर्येऽपि दृश्यताम् ॥१९७॥

दर्शनज्ञानसौख्यानि सकलत्वेन तत्त्वतः । सिद्धानां केवली वेत्ति शेषेष्वौपमिकं वचः ॥ १९८ ॥
अभव्यात्मभिरप्राप्यमिदं जैनेन्द्रमास्पदम् । अत्यन्तमपि यत्नाद्यैः कायसंक्लेशकारिभिः ॥१९९॥
अनादिकालसंबद्धां विरहेण विवर्जिताम् । अविद्यागेहिनीं ते हि शश्वदाश्लिष्य शेरते ॥ २०० ॥
विमुक्तिवनिताऽऽश्लेषसमुत्कण्ठापरायणाः । भव्यास्तु दिवसान् कृच्छ्रं प्रेरयंति तपः स्थिताः२०१
सिद्धिशक्तिविनिर्मुक्ता अभव्याः परिकीर्त्तिताः । भविष्यत्सिद्धयो जीवा भव्यशब्दमुपाश्रिताः२०२
जिनेन्द्रशासनादन्यशासने रघुनंदन । न सर्वरत्नयोगेऽपि विद्यते कर्मणां क्षयः ॥ २०३ ॥
यत्कर्म क्षपयत्यज्ञो भूरिभिर्भवकोटिभिः । ज्ञानी मुहूर्तयोगेन त्रिगुप्तस्तदपोहयेत् ॥ २०४ ॥
प्रतीतो जगतोऽप्येतत्परमात्मा निरंजनः । दृश्यते परमार्थेन यथा प्रक्षीणकर्मभिः ॥ २०५ ॥
गृहीतं बहुभिर्विद्धि लोकमार्गमसारकम् । परमार्थपरिप्राप्त्यै गृहाण जिनशासनम् ॥ २०६ ॥
एवं रघूत्तमः श्रुत्वा वचः साकलभूषणम् । प्रणिपत्य जगौ नाथ तारयाऽस्माद्भवादिति ॥२०७॥
भगवन्नुत्तमा मध्या उत्तमाश्चासुधारिणः । भव्याः केन विमुच्यंते विधिना भववासतः ॥ २०८ ॥
उवाच भगवान् सम्यग्दर्शनज्ञानचेष्टितम् । मोक्षवर्त्म समुद्दिष्टमिदं जैनेन्द्रशासने ॥ २०९ ॥
तत्वश्रद्धानमेतस्मिन् सम्यग्दर्शनमुच्यते । चेतनाचेतनं तत्त्वमनंतगुणपर्ययम् ॥ २१० ॥

निसर्गाधिगमद्वाराद्भक्त्या तत्त्वमुपाददत् । सम्यग्दृष्टिरिति प्रोक्तो जीवो जिनमते रतः ॥२११॥
शंका कांक्षा च कुत्सा च परशासनसंस्तवः । प्रत्यक्षोदारदोषाद्या एते सम्यक्त्वदूषणाः २१२
स्थैर्यं जिनवरागारे रमणं भावना पराः । शंकादिरहितत्वं च सम्यग्दर्शनशोधनम् ॥ २१३ ॥
सर्वज्ञशासनोक्तेन विधिना ज्ञानपूर्वकम् । क्रियते यदसाध्येन सुचारित्रं तदुच्यते ॥ २१४ ॥
गोपायितहृषीकत्वं वचो मानसयंत्रणम् । विद्यते यत्र निष्पापं सुचारित्रं तदुच्यते ॥ २१५ ॥
अहिंसा यत्र भूतेषु त्रसेषु स्थावरेषु च । क्रियते न्याययोगेषु सुचारित्रं तदुच्यते ॥ २१६ ॥
मनः श्रोत्रपरिह्लादं स्निग्धं मधुरमर्थवत् । शिवं यत्र वचः सत्यं सुचारित्रं तदुच्यते ॥ २१७ ॥
अदत्तग्रहणे यत्र निवृत्तिः क्रियते त्रिधा । दत्तं च गृह्यते न्याय्यं सुचारित्रं तदुच्यते ॥ २१८ ॥
सुराणामपि संपूज्यं दुर्धरं महतामपि । ब्रह्मचर्यं शुभं यत्र सुचारित्रं तदुच्यते ॥ २१९ ॥
शिवमार्गमहाविघ्नमूर्च्छात्यजनपूर्वकः । परिग्रहपरित्यागः सुचारित्रं तदुच्यते ॥ २२० ॥
परिपीडाविनिर्मुक्तं दानं श्रद्धादिसंगतम् । दीयते यन्निवृत्तेभ्यः सुचारित्रं तदुच्यते ॥ २२१ ॥
विनयो नियमः शीलं ज्ञानं दानं दया दमः । ध्यानं च यत्र मोक्षार्थं सुचारित्रं तदुच्यते ॥२२२॥
एतद्गुणसमायुक्तं जिनेन्द्रवचनोदितम् । श्रेयः संप्राप्तये सेव्यं चारित्रं परमोदयम् ॥ २२३ ॥

शक्यं करोत्यशक्ये तु श्रद्धावान् स्वस्य निंदकः । सम्यक्त्वसहितो जंतुर्युक्तश्चारित्रसंगतः २२४
यत्र त्वेते न विद्यंते समीचीना महागुणाः । तत्र नास्ति सुचारित्रं न च संसारनिर्गमः ॥२२५॥
दयादमक्षमा यत्र न विद्यंते न संवरः । न ज्ञानं न परित्यागस्तत्र धर्मो न विद्यते ॥ २२६ ॥
हिंसावितथचौर्यस्त्रीसमारंभसमाश्रयः । क्रियते यत्र धर्मार्थं तत्र धर्मो न विद्यते ॥ २२७ ॥
दीक्षामुपेत्य यः पापे मूढचेताः प्रवर्त्तते । आरंभितोऽस्य चारित्रं विमुक्तिर्वा न विद्यते ॥२२८॥
षण्णां जीवनिकायानां क्रियते यत्र पीडनम् । धर्मव्याजेन सौख्यार्थं न तेन शिवमाप्यते॥२२९॥
वधताडनबंधांकदोहनादिविधायिनः । ग्रामक्षेत्रादिसक्तस्य प्रव्रज्या का हतात्मनः ॥ २३० ॥
क्रयविक्रयशक्तस्य पक्तियाचनकारिणः । सहिरण्यस्य का मुक्तिर्दीक्षितस्य दुरात्मनः ॥ २३१ ॥
मर्दनस्नानसंस्कारमाल्यधूपानुलेपनम् । सेवंते दुर्विदग्धा ये दीक्षितास्ते न मोक्षगाः ॥ २३२ ॥
हिंसां दोषविनिर्मुक्तां वदंतः स्वमनीषया । शास्त्रं वेषं च वृत्तं च दूषयंति समूढकाः ॥ २३३ ॥
एकरात्रं वसन् ग्रामे नगरे पंचरात्रकम् । नित्यमूर्द्धभुजस्तिष्ठन्मासे मासे च पारयन् ॥ २३४ ॥
मृगैः सममरण्यान्यां शयानो विचरन्नपि । कुर्वन्नपि भृगोः पातं मौनवान्निःपरिग्रहः ॥ २३५ ॥
मिथ्यादर्शनदुष्टात्मा कुलिंगो बीजवर्जितः । पद्भ्यामगम्यदेशं च नैवाप्नोति शिवालयम् २३६

अग्निवारिप्रवेशादिपापं धर्मधिया श्रयन् । प्रयाति दुर्गतिं जीवो मूढः स्वहितवर्त्मनि ॥ २३७ ॥
रौद्रार्तध्यानसक्तस्य सकामस्य कुकर्मणः । उपायविपरीतस्य जायते निंदिता गतिः ॥ २३८ ॥
मिथ्यादर्शनयुक्तोऽपि यो दद्यात्साध्वसाधुषु । धर्मबुद्धिरसौ पुण्यं बध्नाति विपुलोदयम् ॥२३९॥
भुंजानोऽपि फलं तस्य धर्मस्यासौ त्रिविष्टपे । लक्षभागफलेनाऽपि सम्यग्दृष्टेर्न संमितः ॥२४०॥
सम्यग्दर्शनमुत्तुंगं सुश्लाघ्याः संवहन्ति ये । देवलोकप्रधानास्ते भवंति नियमप्रियाः ॥ २४१ ॥
क्लेशित्वाऽपि महायत्नं मिथ्यादृष्टिः कुलिंगकः । देवकिंकरभावेन फलं हीनमवाश्नुते ॥२४२॥
सप्ताष्टसु नृदेवत्वभवसंक्रांतिसौख्यभाक् । श्रमणत्वं समाश्रित्य सम्यग्दृष्टिर्विमुच्यते ॥ २४३ ॥
वीतरागैः समस्तज्ञैरिमं मार्गं प्रदर्शितम् । जंतुर्विषयमूढात्मा प्रतिपत्तुं न वांछति ॥ २४४ ॥
आशापाशैर्दृढं बद्धा मोहेनाधिष्ठिता भृशम् । तृष्णागारं समानीताः पापहिंजीरवाहिनः ॥२४५॥
रसनं स्पर्शनं प्राप्य दुःखसौख्याभिमानिनः । वराका विविधा जीवाः क्लिश्यंते शरणोज्झिता ॥
बिभेति मृत्युतो नास्य ततो मोक्षः प्रजायते । कांक्षत्यनारतं सौख्यं न च लाभोऽस्य सिद्ध्यति ॥
इत्ययं भीतिकामाभ्यां विफलाभ्यां वशीकृतः । केवलं तापमायाति चेतनो निरुपायकः ॥२४८॥
आशया नित्यमाविष्टो भोगान् भोक्तुं समीहते । न करोति धृतिं धर्मे कांचने मशको यथा २४९

संक्लेशवह्निना तप्तो बह्वारंभक्रियोद्यतः । न कंचिदर्थमाप्नोति ह्रियते वास्य संगतम् ॥ २५० ॥
असौ पुराकृतात्पापादप्राप्यार्थं मनोगतम् । प्रत्युताऽनर्थमाप्नोति महांतमतिदुर्जरम् ॥ २५१ ॥
इदं कृतमिदं कुर्वे करिष्येहं सुनिश्चितम् । मर्त्याहे वस्त्वदः पापान्मृत्युं यांतीति चिंतकाः ॥२५२॥
न हि प्रतीक्षते मृत्युरसुभाजां कृताकृतम् । समाक्रामत्यकांडेऽसौ मृगकं केसरी यथा ॥ २५३ ॥
अहिते हितमित्याशा सुदुःखे सुखसम्मतिः । अनित्ये शाश्वताकूतं शरणाशा भयात्रहे ॥ २५४ ॥
हिते सुखे परित्राणे ध्रुवे च विपरीतधीः । अहो कुदृष्टिसक्तानामन्यथैव व्यवस्थितिः ॥ २५५ ॥
भार्यावारिप्रविष्टः सन् मनुष्यो वनवारणः । विषयामिषसक्तश्च मत्स्यो बंधं समश्नुते ॥ २५६ ॥
कुटुंबसुमुहापंके विस्तरे मोहसागरे । मग्नोऽवसीदति स्फूर्जन्दुर्बलो गवली यथा ॥ २५७ ॥
मोक्षो निगडबद्धस्य भवेदंधाच्च कूपतः । निबद्धः स्नेहपाशैस्तु ततः कृच्छ्रेण मुच्यते ॥ २५८ ॥
बोधिं मनुष्यलोकेऽपि जैनेद्रीं सुष्ठु दुर्लभाम् । प्राप्तुमर्हत्यभव्यास्तु नैव मार्गं जिनोदितम् २५९
घनकर्मकलंकाक्ता अभव्या नित्यमेव हि । संसारचक्रमारूढा भ्राम्यंति क्लेशवाहिताः ॥ २६० ॥
ततः कृत्वांजलिं मूर्ध्नि जगाद रघुनंदनः । किमस्मि भगवन् भव्यो मुच्ये कस्मादुपायतः ॥२६१॥
शक्नोमि पृथिवीमेतां त्यक्तुं सांतःपुरामहम् । लक्ष्मीधरस्य सुकृतं न शक्नोम्येकमुज्झितुम् ॥ २६२ ॥

स्नेहोर्मिचंद्रखंडेषु तरंतं लग्नतोज्झितम् । अवलंबनदानेन मां त्रायस्व मुनीश्वर ॥ २६३ ॥
उवाच भगवान् राम न शोकं कर्त्तुमर्हसि । ऐश्वर्यं बलदेवस्य भोक्तव्यं भवता ध्रुवम् ॥ २६४ ॥
राज्यलक्ष्मीं परिप्राप्य दिवीव त्रिदशाधिपः । जैनेश्वरं व्रतं प्राप्य कैवल्यमयमेष्यसि ॥ २६५ ॥
श्रुत्वा केवलिभाषितमुत्तमहर्षप्रजातपुलको रामः ।
विकसितनयनः श्रीमान्प्रसन्नवदनो बभूव धृत्या युक्ताः ॥ २६६ ॥
विज्ञाय चरमदेहं दाशरथिं विस्मिताः सुरासुरमनुजाः ।
केवलिरविणोद्योतितमत्यन्तप्रीतिमानसाः समशंसन् ॥ २६७ ॥

इति श्रीरविषेणाचार्यप्रोक्ते पद्मपुराणे रामधर्मश्रवणाभिधानं नाम पंचोत्तरशतं पर्व ॥ १०५ ॥

---

# अथ षडुत्तरशतं पर्व ।

वृषभः खेचराणां तद्भक्तिभूषो विभीषणः । निर्भीषणमहाभूषं वृषभं व्योमवाससाम् ॥ १ ॥
पाणियुग्ममहांभोजभूषितोत्तमदेहभृत् । स नमस्कृत्य पप्रच्छ धीमान् सकलभूषणम् ॥ २ ॥

भगवन् पद्मनाभेन किमनेन भवांतरे । सुकृतं येन माहात्म्यं प्रतिपन्नोऽयमीदृशम् ॥ ३ ॥
अस्य पत्नी सती सीता दंडकारण्यवर्त्तितः । केनानुबंधदोषेण रावणेन तदा हृता ॥ ४ ॥
धर्मार्थकाममोक्षेषु शास्त्राणि सकलं विदन् । कृत्याकृत्यविवेकज्ञो धर्माधर्मविचक्षणः ॥ ५ ॥
प्रधानगुणसंपन्नो भूत्वा मोहवशं गतः । पतंगत्वमितः कस्मात्परस्त्रीलोभपावके ॥ ६ ॥
भ्रातृपक्षातिसक्तेन भूत्वा वनविचारिणा । लक्ष्मीधरेण संग्रामे स कथं भुवि मूर्च्छितः ॥ ७ ॥
स तादृग्बलवानासीद्विद्याधरमहेश्वरः । कृतानेकाद्भुतं प्राप्तः कथं मरणमीदृशम् ॥ ८ ॥
अथ केवलिनो वाणी जगाद बहुजन्मगाम् । संसारे परमं वैरमेतेनाऽऽसीत्सहानयोः ॥ ९ ॥
इह जंबूमतिद्वीपे भरते क्षेत्रनामनि । नगरे नयदत्ताख्यो वणिजोऽभूत्समस्वकः ॥ १० ॥
सुनंदा गेहिनी तस्य धनदत्तः शरीरजः । द्वितीयो वसुदत्तस्तत्सुहृद्यज्ञबलिद्विजः ॥ ११ ॥
वणिक्सागरदत्ताख्यस्तत्रैव नगरेऽपरः । पत्नी रत्नप्रभा तस्य गुणवत्त्युदितात्मजा ॥ १२ ॥
रूपयौवनलावण्यकांतिसद्विभ्रमात्मिका । अनुजो गुणवान्नामा तस्या आसीत्सुचेतसः ॥ १३ ॥
पित्राकूतं परिज्ञाय प्रीतेन कुलकांक्षिणा । दत्ता प्रौढकुमारी सा धनदत्ताय सूरिणा ॥ १४ ॥
श्रीकांत इति विख्यातो वणिक्पुत्रोऽपरो धनी । सतां संततमाकांक्षद्रूपस्तेनितमानसः ॥ १५ ॥

वित्तस्याल्पतयावज्ञां धनदत्ते विधाय च । श्रीकांतायोद्यतो दातुं भ्रान्तां तां क्षुद्रमानसः ॥१६॥
विचेष्टितमिदं ज्ञात्वा वसुदत्तः प्रियाग्रजः । यज्ञवस्युपदेशेन श्रीकांतं हन्तुमुद्यतः ॥ १७ ॥
मंडलाग्रं समुद्यम्य रात्रौ तमसि गह्वरे । निःशब्दपदविन्यासो नीलवस्त्रावगुंठितः ॥ १८ ॥
श्रीकांतं भवनोद्याने प्रमादिनमवस्थितम् । गत्वा प्राहरदेषोऽपि श्रीकांतेनासिनाहतः ॥ १९ ॥
एवमन्योन्यघातेन मृत्युं तौ समुपागतौ । विंध्यपादमहारण्ये समुद्भूतौ कुरंगकौ ॥ २० ॥
दुर्जनैर्धनदत्ताय कुमारी वारिता ततः । क्रुध्यन्ति ते हि निर्व्याजादुपदेशे तु किं पुनः ॥ २१ ॥
तेन दुर्मृत्युना भ्रातुः कुमार्यपगमेन च । धनदत्तोद् दुहादुःखी देशानभ्रमदाकुलः ॥ २२ ॥
धनदत्तापरिप्राप्त्या साऽपि बाला सुदुःखिता । अनिष्टान्यवरा गेहे नियुक्तान्तप्रदाविधौ ॥२३॥
मिथ्यादृष्टिस्वभावेन द्वेष्टि दृष्ट्वा निरंबरम् । साऽसूयते समाक्रोशत्यपि निर्भर्त्सयत्यपि ॥ २४ ॥
जिनशासनमेकांतान्न श्रद्धत्तेऽतिदुर्जना । मिथ्यादर्शनसक्तात्मा कर्मबंधानुरूपतः ॥ २५ ॥
ततः कालावसानेन सार्तध्यानपरायणा । जाता तत्र मृगी यत्र वसतस्तौ कुरंगकौ ॥ २६ ॥
पूर्वानुबंधदोषेण तस्या एव कृते पुनः । मृगावन्योन्यमुद्वृत्तौ हत्वा शूकरतां गतौ ॥ २७ ॥
द्विरदौ महिषौ गावौ प्लवगौ द्वीपिनौ वृकौ । रुरू च तौ समुत्पन्नावन्योन्यं च हतस्तथा ॥२८॥

जले स्थले च भूयोऽपि वैरानुसरणोद्यतौ । भ्राम्यतः पापकर्माणौ म्रियमाणौ तथाविधम् ॥ २९ ॥
परमं दुःखितः सोऽपि धनदत्तोऽध्वखेदितः । अन्यदाऽस्तंगते भानौ श्रमणाश्रममागमत् ॥३०॥
तत्र साधूनभाषिष्ट तृषितोऽप्युदकं मम । प्रयच्छत सुखिन्नस्य यूयं हि सुकृतप्रियाः ॥ ३१ ॥
तत्रैकश्रमणोऽवोचन्मधुरं परिसांत्वयन् । रात्रावप्यमृतं युक्तं न पातुं किं पुनर्जलम् ॥ ३२ ॥
चक्षुर्व्यापारनिर्मुक्ते काले पापैकदारुणे । अदृष्टसूक्ष्मजंत्वाढ्ये मा शीर्वत्स विभावरे ॥ ३३ ॥
आतुरेणाऽपि मोक्तव्यं विकाले भद्र न त्वया । मा पप्तो व्यसनोदारसलिले भवसागरे ॥ ३४ ॥
उपशांतस्ततः पुण्यकथाभिः सोऽल्पशक्तिकः । अणुव्रतधरो जातो दयालिंगितमानसः ॥ ३५ ॥
कालधर्मं च संप्राप्य सौधर्मे सत्सुरोऽभवत् । मौलिकुंडलकेयूरहारतुद्यंगदोज्ज्वलः ॥ ३६ ॥
पूर्वपुण्योदयात्तत्र सुरस्त्रीसुखलालितः । महाप्सरःपरिवारो मोदते वज्रपाणिवत् ॥ ३७ ॥
ततश्च्युतः समुत्पन्नः पुरश्रेष्ठमहापुरे । धारिण्यां श्रेष्ठिनो मेरोर्जैनात्पद्मरुचिः सुतः ॥ ३८ ॥
तत्रैव च पुरे नाम्ना छत्रच्छायो नरेश्वरः । महिषीगुणमंजूषा श्रीदत्ता तस्य भाविनी ॥ ३९ ॥
आगच्छन्नन्यदा गोष्ठं गत्वा तुरगपृष्ठतः । अपश्यद्भुवि पर्यस्तं भैरवो जीर्णकं वृषम् ॥ ४० ॥
सुगंधिवस्त्रमाल्योऽसावत्रवतीर्य तुरंगतः । आदरेण तमुक्षाणं दयावानातुरं गतः ॥ ४१ ॥

दीयमाने जपे तेन कर्णे पंचनमस्कृतेः । शृण्वन्नुक्षशरीरी स शरीरान्निरितस्ततः ॥ ४२ ॥
श्रीदत्तायां च संजज्ञे तनुदुःकर्मजालकः । छत्रच्छायोऽभवत्तोषी दुर्लभे पुत्रजन्मनि ॥ ४३ ॥
उदारा नगरे शोभा जनिता द्रव्यसंपदा । समुत्सवो महान् जातो वादित्रबधिरीकृतः ॥ ४४ ॥
ततः कर्मानुभावेन पूर्वजन्मसमस्मरन् । गोदुःखं दारुणं तच्च वाहशीतातपादिजम् ॥ ४५ ॥
श्रुतिं पांचनमस्कारीं चेतसा च सदा वहन् । बाललीलाप्रसक्तोऽपि महासुभगविभ्रमः ॥ ४६ ॥
कदाचिद्विहरन्प्राप्तः स तां वृषमृतक्षितिम् । पर्यज्ञासीत्प्रदेशाँश्च पूर्वमाचरितान् स्वयम् ॥ ४७ ॥
वृषभध्वजनामासौ कुमारो वृषभूमिकाम् । अवतीर्य गजात्स्वैरमपश्यद्दुःखिताशयः ॥ ४८ ॥
बुधं समाधिरत्नस्य दातारं श्लाघ्यचेष्टितम् । अपश्यद्दर्शने तस्य दध्यौ चौपायिकं ततः ॥ ४९ ॥
अथ कैलाशशृंगाभं कारयित्वा जिनालयम् । चरितानि पुराणानि पट्टकादिष्वलेखयत् ॥ ५० ॥
द्वारदेशे च तस्यैव पटं स्वभवचित्रितम् । पुरुषैः पालने न्यस्तैरधिष्ठितमतिष्ठिपत् ॥ ५१ ॥
वंदारुश्चैत्यभवनं तत्पद्मरुचिरागमत् । अपश्यच्च प्रहृष्टात्मा तच्चित्रं विस्मितस्ततः ॥ ५२ ॥
तन्निबद्धेक्षणो यावदसौ यच्चित्रमीक्षते । वृषध्वजस्य पुरुषैस्तावत्संवादितं श्रुतम् ॥ ५३ ॥
ततो महर्द्धिसंपन्नः समारुह्य द्विपोत्तमम् । इष्टसंगमनाकांक्षी राजपुत्रः समागमत् ॥ ५४ ॥

अवतीर्य च नागेन्द्रादविक्षज्जिनमंदिरम् । पश्यन्तं च तदाशक्तं धारण्येयं निरैक्षत ॥ ५५ ॥
नेत्राऽऽस्यहस्तसंचारसूचितोत्तुंगविस्मयम् । अनंसीत्पादयोरेनं परिज्ञाय वृषध्वजः ॥ ५६ ॥
गोदुःखमरणं तस्मै धारणीसूनुरब्रवीत् । राजपुत्रोऽगदीन्सोऽहमिति विस्तारिलोचनः ॥ ५७ ॥
संभ्रमेण च संपूज्य गुरुं शिष्यवरो यथा । तुष्टः पद्मरुचिं राजतनयः समुदाहरन् ॥ ५८ ॥
मृत्युव्यसनसंबद्धे काले तस्मिन् भवान्मम । प्रियबंधुरिव प्राप्तः समाधेः प्रापकोऽभवत् ॥ ५९ ॥
समाध्यमृतपाथेयं त्वया दत्ता दयालुना । स पश्य तृप्तिसंपन्नः संप्राप्तोऽहमिमं भवम् ॥ ६० ॥
नैव तत्कुरुते माता न पिता न सहोदराः । न बांधवा न गीर्वाणाः प्रियं यन्मे त्वया कृतम् ६१
नेक्षे पंचनमस्कारश्रुतिदानाविनिष्क्रयम् । तथापि मे परा भक्तिः त्वयि कारयतीरितम् ॥ ६२ ॥
आज्ञां प्रयच्छ मे नाथ ब्रूहि किं करवाणि ते । आज्ञादानेन मां भक्तं भजस्व पुरुषोत्तम ॥६३॥
गृहाण सकलं राज्यमहं ते दासरूपकः । नियुज्यतामयं देहः कर्मण्यभिसमीहिते ॥ ६४ ॥
एवमादिसुसंभाषं तयोः प्रेमाभवत्परम् । सम्यक्त्वं चैव राज्यं च संप्रयोगश्च संततम् ॥ ६५ ॥
अस्थिमज्जानुरक्तौ तौ सागरव्रतसंगतौ । जिनबिंबानि चैत्यानि भुव्यतिष्ठिपतां स्थिरौ ॥ ६६ ॥
स्तूपैश्च धवलांभोजमुकुलप्रतिमामितैः । समपादयतां क्षोणीं शतशः कृतभूषणाम् ॥ ६७ ॥

ततः समाधिमाराध्य मरणे वृषभध्वजः । त्रिदशोऽभवदीशाने पुण्यकर्मफलानुभूः ॥ ६८ ॥
सुरस्त्रीनयनांभोजविकासिनयनद्युतिः । तथाऽक्रीडत्परिध्यातसंपन्नसकलेप्सितः ॥ ६९ ॥
काले पद्मरुचिः प्राप्य समाधिमरणं तथा । ईशान एव गीर्वाणः कांतो वैमानिकोऽभवत् ॥७०॥
च्युत्वा परविदेहे तु विजयाचलमस्तके । नंद्यावर्त्तपुरेशस्य राज्ञो नंदीश्वरश्रुतेः ॥ ७१ ॥
उत्पन्नः कनकाभार्यां नयनानंदसंज्ञकः । खेचरेन्द्रश्रियं तत्र बुभुजे परमायताम् ॥ ७२ ॥
ततः श्रामण्यमास्थाय कृत्वा सुविकटं तपः । कालधर्मं समासाद्य माहेन्द्रं कल्पमाश्रयत् ॥ ७३ ॥
मनोज्ञं पंचविषयद्वारं परमसुंदरम् । परिप्राप सुखं तत्र पुण्यवल्लीमहाफलम् ॥ ७४ ॥
च्युतस्ततो गिरेर्मेरौ भागे पूर्वदिशि स्थिते । क्षेमायां पुरि संजातः श्रीचंद्र इति विश्रुतः ॥७५॥
माता पद्मावती तस्य पिता विपुलवाहनः । तत्र स्वर्गोपभुक्तस्य निष्पंदं कर्मणोऽभजत् ॥ ७६ ॥
तस्य पुण्यानुभावेन कोशो विषयसाधनम् । दिने दिनं परां वृद्धिमसेवत समंततः ॥ ७७ ॥
ग्रामस्थानीयसंपन्नां पृथिवीं विविधाकराम् । प्रियामिव महाप्रीत्या श्रीचन्द्रः समपालयत् ॥७८॥
हावभावमनोज्ञाभिर्नारीभिस्तत्र लालितः । पर्यरंसीत्सुरस्त्रीभिः सुरेन्द्र इव संगतः ॥ ७९ ॥
संवत्सरसहस्राणि सुभूरीणि क्षणोपमम् । तस्य दोदुंदुकस्येव महैश्वर्ययुजोऽगमन् ॥ ८० ॥

गुप्तिव्रतसमित्युद्यः संघेन महता वृतः । समाधिगुप्तयोगीन्द्रः पुरं तदन्यदागमत् ॥ ८१ ॥
उद्यानेऽवस्थितस्यास्य तत्र ज्ञात्वा जनोऽखिलः । वंदनामगमत्कर्तुं सम्मदं तोषतत्परः ॥ ८२ ॥
स्तुवतोऽस्य परं भक्त्या नादं घनकुलोपमम् । कर्णामादाय संश्रुत्य श्रीचंद्रोऽपृच्छदंतिकान् ८३
कस्यैष श्रूयते नादो महासागरसम्मितः । अजानाद्भिः समादिष्टैस्तैरमात्यः कृतोऽतिकः ॥ ८४ ॥
ज्ञायतां कस्य नादोऽयमिति राज्ञा स भाषितः । गत्वा ज्ञात्वा परावृत्य मुनिं प्राप्तमवेदयत् ॥८५॥
ततो विकचराजीवराजमाननिरीक्षणः । सस्त्रीकः सम्मदोद्भूतपुलकः प्रस्थितो नृपः ॥ ८६ ॥
प्रसन्नमुखतारेशं निरीक्ष्य मुनिपुंगवम् । संभ्रमी शिरसा नत्वा न्यसीदद्विनयाद्भुवि ॥ ८७ ॥
भव्यांभोजप्रधानस्य मुनिभास्करदर्शने । तस्यासीदात्मसंवेद्यः कोऽपि प्रेममहाभरः ॥ ८८ ॥
ततः परमगंभीरः सर्वश्रुतिविशारदः । अदाञ्जनमहौघाय मुनिस्तत्त्वोपदेशनम् ॥ ८९ ॥
अनगारं सहागारं धर्मं विविधमब्रवीत् । अनेकभेदसंयुक्तं संसारोत्तारणावहम् ॥ ९० ॥
करणं चरणं द्रव्यं प्रथमं च सभेदकम् । अनुयोगमुख्यं योगी जगाद वदतांवरः ॥ ९१ ॥
आक्षेपणीं पराक्षेपकारिणीमकरोत्कथाम् । ततो निक्षेपणीं तत्त्वमतनिक्षेपकोविदाम् ॥ ९२ ॥
संवेजनीं च संसारभयप्रचयबोधनीम् । निर्वेदनीं तथा पुण्यां भोगवैराग्यकारिणीम् ॥ ९३ ॥

संधावतोऽस्य संसारे कर्मयोगेन देहिनः । कृच्छ्रेण महता प्राप्तिर्मुक्तिमार्गस्य जायते ॥ ९४ ॥
संध्याबुद्बुदफेनोर्मिविद्युदिन्द्रधनुःसमः । भंगुरत्वेन लोकोऽयं न किंचिदिह सारकम् ॥ ९५ ॥
नरके दुःखमेकांतादेति तिर्यक्षु वाऽसुमान् । मनुष्यात्रिदशानां च सुखेनैवेष तृप्यति ॥ ९६ ॥
माहेन्द्रभोगसंपद्भिर्यो न तृप्तिमुपागतः । स कथं क्षुद्रकैस्तृप्तिं व्रजेन्मनुजभोगकैः ॥ ९७ ॥
कथंचिद्दुर्लभं लब्ध्वा निधानमधनो यथा । नरत्वं मुह्यति व्यर्थं विषयास्वादलोभतः ॥ ९८ ॥
काग्नेः शुष्कैंधनैस्तृप्तिः कांबुधेरापगाजलैः । विषयास्वादसौख्यैः का तृप्तिरस्य शरीरिणः ॥९९॥
मज्जन्निव जले खिन्नो विषयामिषमोहितः । दक्षोऽपि मंदतामेति तमोंधीकृतमानसः ॥ १०० ॥
दिवा तपति तिग्मांशुर्मदनस्तु दिवानिशम् । समस्ति वारणं भानोर्मदनस्य न विद्यते ॥१०१॥
जन्ममृत्युजरादुःखं संसारे स्मृतिभीतिदम् । अरहट्टघटीयंत्रसंततं कर्मसंभवम् ॥ १०२ ॥
अजंगमं यथाऽन्येन यंत्रं कृतपरिभ्रमम् । शरीरमध्रुवं पूति तथा स्नेहोऽत्र मोहतः ॥ १०३ ॥
जलबुद्बुदनिःसारं ज्ञात्वा मनुजसंभवम् । निर्विण्णाः कुलजा मार्गं प्रपद्यन्ते जिनोदितम् ॥१०४॥
उत्साहकवचच्छन्ना निश्चयाश्वस्थसादिनः । ध्यानखड्गधरा धीराः प्रस्थिताः सुगतिं प्रति १०५
अन्यच्छरीरमन्योऽहमिति संचिंत्य निश्चिताः । तथा शरीरके स्नेहं धर्मं कुरुत मानवाः ॥१०६॥

सुखदुःखादयस्तुल्याः स्वजनेतरयोः समाः । रागद्वेषविनिर्मुक्ताः श्रमणाः पुरुषोत्तमाः ॥१०७॥
तैरियं परमोदारा धवलध्यानतेजसा । कृत्स्ना कर्माटवी दग्धा दुःखश्वापदसंकुला ॥ १०८ ॥
निशम्येति मुनेरुक्तं श्रीचंद्रो बोधिमाश्रितः । पराचीनत्वमागच्छन्विषयास्वादसौख्यतः ॥१०९॥
धृतिकांताय पुत्राय दत्त्वा राज्यं महामनाः । समाधिगुप्तनाथस्य पार्श्वे श्रामण्यमग्रहीत् ॥११०॥
सम्यग्भावनया युक्तस्त्रैयोगीं शुद्धिमादधन् । स समित्यान्वितो गुप्त्या रागद्वेषपराङ्मुखः १११
रत्नत्रयमहाभूषः क्षांत्यादिगुणसंगतः । जिनशासनसंपूर्णः श्रमणः सुसमाहितः ॥ ११२ ॥
पंचोदारव्रताधारः सत्त्वानामनुपालकः । सप्तभीस्थाननिर्मुक्तो धृत्या परमयान्वितः ॥ ११३ ॥
सुविहारपरः सोढा परीषहगणान्मुनिः । षष्ठाष्टमार्द्धमासादिकृतसंशुद्धपारणः ॥ ११४ ॥
ध्यानस्वाध्याययुक्तात्मा निर्ममोऽतिजितेंद्रियः । निर्निदानकृतिः शांतः परः शासनवत्सलः ११५
प्रासुकाचारकुशलः संघानुग्रहतत्परः । बालाग्रकोटिमात्रेऽपि स्पृहामुक्तः परिग्रहे ॥ ११६ ॥
अस्नानमलसाध्वंगे निराबंधो निरंबरः । एकरात्रस्थितिर्ग्रामे नगरे पंचरात्रभाक् ॥ ११७ ॥
कंदरापुलिनोद्याने प्रशस्तावाससंगमः । व्युत्सृष्टांगः स्थिरो मौनी विद्वान् सम्यक्तपोरतः ११८
एवमादिगुणः कृत्वा जर्जरं कर्मपंजरम् । श्रीचन्द्रः कालमासाद्य ब्रह्मलोकाधिपोऽभवत् ॥११९॥

निवासे परमे तत्र श्रीकीर्तिद्युतिकांतिभाक् । चूडामणिकृतालोको भुवनत्रयविश्रुतः ॥ १२० ॥
ऋद्धया परमया क्रीडन्समनुध्यानजन्मना । अहमिन्द्रसुरो यद्वदासीद्भरतभूपतिः ॥ १२१ ॥
नंदनादिषु देवेंद्राः सौधर्माद्याः सुसंपदः । तिष्ठंत्युदीक्षमाणास्तं तदुत्कंठापरायणाः ॥ १२२ ॥
मणिहेमात्मके कांते मुक्ताजालविराजिते । रमते स्म विमानेऽसौ दिव्यस्त्रीनयनोत्सवः ॥१२३॥
या श्रीचंद्रचरस्यास्य न वा वाचस्पतेरपि । संवत्सरशतेनाऽपि शक्या वक्तुं बिभीषण ॥१२४॥
अनर्घ्यं परमं रत्नं रहस्यमुपमोज्झितम् । त्रैलोक्यप्रकटं मूढा न विदुर्जिनशासनम् ॥ १२५ ॥
मुनिधर्मजिनेंद्राणां माहात्म्यमुपलभ्य सत् । मिथ्याभिमानसंमूढा धर्मं प्रति पराङ्मुखाः ॥१२६॥
इहलोकसुखस्यार्थं शिशुर्यः कुमते रतः । तदसौ कुरुते स्वस्य ध्यायन्नपि न यद्द्विषः ॥१२७॥
कर्मबंधस्य चित्रत्वान्न सर्वो बोधिभाग्जनः । केचिल्लब्ध्वाऽपि मुंचंति पुनरन्यव्यपेक्षया ॥१२८॥
बहुकुत्सितलोकेन गृहीते बहुदोषके । मारध्वं ? निंदिते धर्मे कुरुध्वं चेत्स्वबंधुताम् ॥ १२९ ॥
जिनशासनतोऽन्यत्र दुःखमुक्तिर्न विद्यते । तस्मादनन्यचेतस्का जिनमर्चयताऽनिशम् ॥ १३० ॥
त्रिदशत्वान्मनुष्यत्वं सुरत्वं मानुषत्वतः । एवं मनोहरप्राप्तो धनदत्तो निवेदितः ॥ १३१ ॥
वक्ष्याम्यतः समासेन वसुदत्तादिसंसृतिम् । कर्मणां चित्रतायोगात् चित्रत्वमनुबिभ्रतीम् ॥१३२॥

पुरे मृणालकुंडाख्यो प्रतापी यशसोज्ज्वलः । राजा विजयसेनाख्यो रत्नचूलास्य भामिनी १३३
वज्रकंबुः सुतस्तस्य हेमवत्यस्य भामिनी । शंभुनामा तयोः पुत्रः प्रख्यातो धरणीतले ॥१३४॥
पुरोधाः परमस्तस्य श्रीभूतिस्तत्त्वदर्शनः । तस्य पत्नीगुणैर्युक्ता पत्नी नाम्ना सरस्वती ॥१३५॥
आसीद्गुणवती याऽसौ तिर्यग्योनिषु सा चिरम् । भ्रांत्वा कर्मानुभावेन सम्यग्धर्मविवर्जिता १३६
मोहेन निंदनैः स्त्रैणैर्निदानैरभिगूहनैः । स्त्रीत्वमुत्तमदुःखार्क्तं भजमानाः पुनः पुनः ॥ १३७ ॥
साधुष्ववर्णवादेन दुरवस्थाखलीकृता । परिप्राप्ता करेणुत्वमासीन्मंदाकिनीतटे ॥ १३८ ॥
सुमहापंकनिर्मग्ना परायत्तस्थिरांगिका । विमुक्तमंदसूत्कारा मुकुलीकृतलोचना ॥ १३९ ॥
मुमूर्षन्ती समालोक्य खेचरेण कृपावता । तरंगवेगनाम्नासौ कर्णेजपमुपाहृता ॥ १४० ॥
ततस्तनुकषायत्वात्तत्क्षेत्रगुणतोऽपि च । प्रत्याख्यानाच्च तद्दत्ताच्छ्रीभूतेः सा सुताऽभवत् ॥१४१॥
भिक्षार्थिनं मुनिं गेहं प्रविष्टमवलोक्य सा । उपाहसत्ततः पित्रा शामिता श्राविकाऽभवत् ॥१४२॥
तस्याः परमरूपायाः सुकन्यायाः कृतेऽवनौ । उत्कंठिताः महीपालाः शंभुस्तेषु विशेषतः ॥१४३॥
मिथ्यादृष्टिः कुबेरेण समो भवति यद्यपि । तथाऽपि नास्मै देयेयं प्रतिज्ञेति पुरोधसः ॥ १४४ ॥
ततः प्रकुपितेनासौ शंभुना शयितो निशि । हिंसितः सुरतां प्राप्तो जिनधर्मप्रसादतः ॥ १४५ ॥

ततो वेदवतीमेनां प्रत्यक्षां देवतामिव । अनिच्छन्तीं प्रभुत्वेन बलादुद्वोढुमुद्यतः ॥ १४६ ॥
मनसा कामतप्तेन तामालिंग्योपचुम्ब्य च । विस्फुरंतीं रतिं साक्षान्मैथुनेनोपचक्रमे ॥ १४७ ॥
ततः प्रकुपितात्यंतं चंडा वह्निशिखेव सा । विरक्तहृदया बाला वेपमानशरीरिका ॥ १४८ ॥
आत्मनः शीलनाशेन वधेन जनकस्य च । विश्राणा परमं दुःखं प्राह लोहितलोचना ॥ १४९ ॥
व्यापाद्य पितरं पाप कामिताऽस्मि बलेन् यत् । भवद्वधार्थमुत्पश्ये ततोऽहं पुरुषाधम ॥ १५० ॥
परलोकगतस्यापि पितुर्नाहं मनोरथम् । लुंपामि तेन दुर्दृष्टिकामनान्मरणं वरम् ॥ १५१ ॥
हरिकांतार्यिकायाश्च पार्श्वं गत्वा ससंभ्रमम् । प्रव्रज्य साऽकरोद्बाला तपः परमदुष्करम् ॥ १५२ ॥
लुंचनोत्थितसंरूक्षमूर्द्धजा मांसवर्जिता । प्रकटास्थिशिराजाला तपसा शुष्कदेहिका ॥ १५३ ॥
कालधर्मं परिप्राप्य ब्रह्मलोकमुपागता । पुण्योदयसमानीतं सुरसौख्यमसेवत ॥ १५४ ॥
तया विरहितः शंभुर्लघुत्वं भुवने गतः । विबंधुभृत्यलक्ष्मीको प्रापदुन्मत्ततां कुधीः ॥ १५५ ॥
मिथ्याभिमानसंमूढो जिनवाक्यात्पराङ्मुखः । हसति श्रमणान् दृष्ट्वा दुरुक्ते च प्रवर्त्तते ॥१५६॥
मधुमांससुराहारः पापानुमननोद्यतः । तिर्यङ्नरकवासेषु सुदुःखेष्वभ्रमच्चिरम् ॥ १५७ ॥
अथोपशमनात्किंचित्कर्मणः क्लेशकारिणः । कुशध्वजस्य विप्रस्य सावित्र्यां तनयोऽभवत् ॥१५८॥

प्रभासकुंदनामासौ प्राप्य बोधिं सुदुर्लभाम् । पार्श्वे विचित्रसेनस्य मुनेर्दीक्षामसेवत ॥ १५९ ॥
विमुक्तरतिकंदर्पगर्वसंरंभमत्सरः । निर्विकारस्तपश्चक्रे दयावान्निर्जितेन्द्रियः ॥ १६० ॥
षष्ठाष्टमार्द्धमासादिनिराहारः स्पृहोज्झितः । यत्रास्तमितनिलयो वसन् शून्यवनादिषु ॥ १६१ ॥
गुणशीलसुसंपन्नः परीषहसहः परः । आतापनरतो ग्रीष्मे पिनद्धमलकंचुकः ॥ १६२ ॥
वर्षासु मेघमुक्ताभिरद्भिः क्लिन्नस्तरोरधः । प्रालेयपटसंवीतो हेमंते पुलिनास्थितः ॥ १६३ ॥
एवमादिक्रियायुक्तः सोन्यदा सिद्धमंदिरम् । सम्मेदं वंदितुं यातः स्मृतमप्यघनाशनम् ॥ १६४ ॥
कनकप्रभसंज्ञस्य तत्र विद्याभृतां विभोः । विभूतिं गगने वीक्ष्य प्रशांतोऽप्यन्यदा नयन् ॥१६५॥
अलं विभवमुक्तेन तावन्मुक्तिपदेन मे । ईदृगैश्वर्यमाप्नोमि तपोमाहात्म्यमस्ति चेत् ॥ १६६ ॥
अहो पश्यत मूढत्वं जनितं पापकर्मभिः । रत्नं त्रैलोक्यमूल्यं यद्विक्रीतं शाकमुष्टिना ॥ १६७ ॥
भवंत्युद्भवकालेषु विपद्यंते विपर्यये । धियः कर्मानुभावेन केन किं क्रियतामिह ॥ १६८ ॥
निदानदूषितात्मासौ कृत्वातिविकटं तपः । सनत्कुमारमारुक्षत्तत्र भोगानसेवत ॥ १६९ ॥
च्युतः पुण्यावशेषेण भोगस्मरणमानसः । रत्नश्रवः सुतो जातो कैकस्यां रावणाभिधः ॥१७०॥
लंकायां च महैश्वर्यं प्राप्तो दुर्लडितक्रियम् । कृतानेकमहाश्चर्यं प्रतापाक्रांतविष्टपम् ॥ १७१ ॥

असौ तु ब्रह्मलोकेशो दशसागरसम्मितम् । स्थित्वा कालं च्युतो जातो रामो दशरथात्मजः १७२
तस्यापराजितासूनोः पूर्वपुण्यावशेषतः । भूत्या रूपेण वीर्येण समो जगति दुर्लभः ॥ १७३ ॥
धनदत्तोऽभवद्योऽसौ सोऽयं पद्मो मनोहरः । यशसा चंद्रकांतेन समाविष्टव्धविष्टपः ॥ १७४ ॥
वसुदत्तोऽभवद्यश्च श्रीभूतिश्च द्विजः क्रमात् । जातो नारायणः सोऽयं सौमित्रिः श्रीलतातरुः १७५
श्रीकांतः क्रमयोगेन योऽसौ शंभुत्वमागतः । अभूत्प्रभासकुंदश्च संजातः स दशाननः ॥१७६॥
येनेह भरतक्षेत्रे खंडत्रयमखंडितम् । अंगुलांतरविन्यस्तमिव वश्यत्वमाहृतम् ॥ १७७ ॥
आसीद्गुणवती या तु श्रीभूतेश्च सुता क्रमात् । सेयं जनकराजस्य सीतेति तनयाऽजनि ॥१७८॥
जाता च बलदेवस्य पत्नी विनयशालिनी । शीलकोशी सुरेशस्य शचीव सुविचेष्टिता ॥१७९॥
योऽसौ गुणवतीभ्राता गुणवानभवत्तदा । सोऽयं भामंडलो जातः सुहृल्लांगललक्ष्मणः ॥ १८० ॥
यत्रामृतवतीदेवी ब्रह्मलोकनिवासिनी । च्यवतेद्येति तत्रैव काले कुंडलमंडितः ॥ १८१ ॥
विदेहायास्तयोर्गर्भे समुत्पन्नः समागमः । तद्भ्रातृयुगलं जातमनघं सुमनोहरम् ॥ १८२ ॥
योऽसौ यज्ञवलिर्विप्रः स त्वं जातो विभीषणः । असौ वृषभकेतुस्तु सुग्रीवोऽयंकपिध्वजः ॥१८३॥
त एते पूर्वया प्रीत्या तथा पुण्यानुभावतः । यूयं रक्तात्मका जाता रामस्याक्लिष्टकर्मणः १८४

पूर्वमाजननं बालेयंदपृच्छद्विभीषणः । केवली च समाचख्यौ श्रृणु ते श्रेणिकाधुना ॥ १८५ ॥
रत्यरत्यादिदुःखौघे संसारे चतुरंतके । वृंदारण्यस्थले जंतुरेकः कृष्णमृगोऽभवत् ॥ १८६ ॥
साधुस्वाध्यायनिःस्वानं श्रुत्वायुर्विलये मृगः । ऐरावते दितिस्थाने प्राप नृत्वमनिंदितम् ॥१८७॥
सम्यग्दृष्टिः पिताऽस्यासीद्विहीताख्यः सुचेष्टितः । माता शिवमतिः पुत्रो मेघदत्तस्तयोरयम् १८८
अणुव्रतधरः सोऽयं जिनपूजासमुद्यतः । बंदारुः कृतसत्कालः कल्पमैशानमाश्रयत् ॥ १८९ ॥
च्युत्वा जंबूमति द्वीपे विदेहे पूर्वभूमिके । पुरोऽस्ति विजयावत्याः समीपे सततोत्सवः ॥१९०॥
सुग्रामः पत्तनाकारो नामतो मत्तकोकिलः । कांतशोकः प्रभुस्तत्र तस्य रत्नाकिनी प्रिया ॥१९१॥
तयोः सुप्रभनामाऽभूत्तनयश्चारुदर्शनः । बहुबंधुजनाकीर्णः शुभैकचरितप्रियः ॥ १९२ ॥
संसारे दुर्लभां प्राप्य बोधिं जिनमतानुगाम् । अग्रहीत्संयमं पार्श्वे संयतस्य महामुनेः ॥ १९३ ॥
अतपच्च तपस्तीव्रं यथाविधि महाशयः । संवत्सरसहस्राणि बहूनि सुमहामनाः ॥ १९४ ॥
नानालब्धिसमेतोऽपि यो न गर्वमुपागतः । संयोगजेषु भावेषु तत्याज ममतां च यः ॥ १९५ ॥
विकषायसितध्यानसिद्धः स्यात्स महामुनिः । पर्याप्तं केवलं नायुरतः सर्वार्थसिद्धिमैत् ॥ १९६ ॥
त्रयस्त्रिंशत्समुद्रायुस्तत्र भुक्त्वा महासुखम् । वालिनाम्नाऽजनिष्टासौ प्रतापी खेचराधिपः ॥१९७॥

द्रव्यदर्शनराज्यं यः प्राप किष्किधभूधरे । भ्राता यस्यैव सुग्रीवो महागुणसमन्वितः ॥ १९८ ॥
विरोधमतिरूढोऽपि लंकाधिपतिना समम् । विन्यस्यात्र श्रियं जीवदयार्थं दीक्षितोऽभवत् ॥१९९॥
दशाननेन गर्वेण सामर्थ्येन समुद्धृतः । पादांगुष्ठेन कैलाशस्त्याजितो येन साधुना ॥ २०० ॥
निर्दह्य स भवारण्यं परमध्यानतेजसा । त्रिलोकाग्रं समारूढः प्राप्तो जीवनिजस्थितिम् ॥ २०१ ॥
परस्परमनेकत्र भवेऽन्योन्यवधः कृतः । श्रीकांतवसुदत्ताभ्यां महावैरानुबंधतः ॥ २०२ ॥
पूर्वं वेदवतीकाले संबंधप्रीतिना परम् । रावणेन हृता सीता तथा कर्मानुभावतः ॥ २०३ ॥
श्रीभूतिर्वेदविद्विप्रः सम्यग्दृष्टिरनुत्तमः । हिंसितो वेदवत्यर्थे शंभुना कामिना यतः ॥ २०४ ॥
श्रीभूतिः स्वर्गमारुह्य प्रतिष्ठनगरे च्युतः । भूत्वा पुनर्वसुः शोकात्सनिदानतपोऽन्वितः ॥२०५॥
सनत्कुमारमारुह्य च्युत्वा दशरथात्मजः । भूत्वा रामानुजस्तीव्रस्नेहो लक्ष्मणचक्रभृत् ॥ २०६ ॥
शंभुपूर्वं ततः शत्रुमवधीन्पूर्ववैरतः । दशाननभयं वीरः सुमित्राजो निकाचितात् ॥ २०७ ॥
भ्रातुर्वियोगजं दुःखं यदाऽऽसीत्सह सीतया । निमित्तमात्रमासीत्तद्दशवक्त्रस्य संक्षये ॥ २०८ ॥
अकूपारं समुत्तीर्य धरणीचारिणा सता । हिंसितो हिंसकः पूर्वं लक्ष्मणेन दशाननः ॥ २०९ ॥
राक्षसीश्रीक्षपाचंद्रं तं निहत्य दशाननम् । सौमित्रिणा समाक्रान्ता पृथिवीयं ससागरा ॥२१०॥

क्वासौ तथाविधः शूरः क्व चेयं गतिरीदृशी । माहात्म्यं कर्मणामेतदसंभाव्यमवाप्यते ॥२११॥
वध्यघातकयोरेवं जायते व्यत्ययः पुनः । संसारभावसक्तानां जंतूनां स्थितिरीदृशी ॥ २१२ ॥
क्व नाके परमा भोगाः क्व दुःखं नरके पुनः । विपरीतमहोऽत्यन्तं कर्मणां दुर्विचेष्टितम् ॥२१३॥
परमान्नमहाकूटं यादृशं विषदूषितम् । तपस्तादृशमेवोग्रनिदानकृतनंदनम् ॥ २१४ ॥
इयं शाकं द्रुमं छित्वा कोद्रवाणां वृतिः कृता । अमृतद्रवसेकेन पोषितो विषपादपः ॥ २१५ ॥
सूत्रार्थे चूर्णिता सेयं परमा रत्नसंहतिः । गोशीर्षं चंदनं दग्धमंगाराहितचेतसा ॥ २१६ ॥
जीवलोकेऽबला नाम सर्वदोषमहाखनिः । किं नाम न कृते तस्याः क्रियते कर्म कुत्सितम् ॥२१७॥
प्रत्यावृत्त्य कृतं कर्म फलमर्पयति ध्रुवम् । तत्कर्तुमन्यथा केन शक्यते भुवनत्रये ॥ २१८ ॥
कृत्वापि संगतिं धर्मे यद्व्रजंतीदृशीं गतिम् । उच्यतामितरेषां किं तत्र निर्धर्मचेतसाम् ॥ २१९ ॥
श्रामण्यसंगतस्यापि साध्यमत्सरसेविनः । कृत्वाऽप्युग्रतपो नास्ति शिवं संज्वलनस्पृशः ॥२२०॥
न समो न तपो यस्य मिथ्यादृष्टेर्न संयमः । संसारोत्तरणे तस्य क उपायो दुरात्मनः ॥ २२१ ॥
ह्रियंते वायुना यत्र गजेन्द्रा मदशालिनः । पूर्वमेव हृतास्तत्र शशकाः स्थलवर्त्तिनः ॥ २२२ ॥
एवं परमदुःखानां ज्ञात्वा कारणमीदृशम् । मा कार्ष्ट वैरसंबंधं जनाः स्वहितकांक्षिणः ॥ २२३ ॥

भारत्यपि न वक्तव्या दुरितादानकारिणी। सीतायाः पश्यत प्राप्ता दुर्वादः शब्दमात्रतः ॥२२४॥
ग्रामो मंडलिको नाम तमायातः सुदर्शनः । मुनिमुद्यानमायान्तं बंदित्वा तं गता जनाः ॥२२५॥
सुदर्शनां स्थितां तत्र स्वसारं सद्वचो ब्रुवन्। ईक्षितो वेदवत्याऽसौ सत्या श्रवणया तया॥२२६॥
ततो ग्रामीणलोकाय सम्यग्दर्शनतत्परा । जगाद पश्यतेदृशं श्रमणं ब्रूथ सुंदरम् ॥ २२७ ॥
मया सुयोषिता साकं स्थितो रहसि वीक्षितः । ततः कैश्चित्प्रतीतं तत्र तु कैश्चिद्विचक्षणैः॥२२८॥
अनादरो मुनेर्लोकैः कृतश्चावग्रहोऽमुना । वेदवत्या मुखं सूनं देवताया नियोगतः ॥ २२९ ॥
अपुण्याया मयाऽलीकं चोदितं भगवानिति । तया प्रत्यायितो लोक इत्याद्यत्र कथा स्मृता २३०
एवं सद्भ्रातृयुगलं निंदितं यत्तदानया । अवर्णवादमीदृक्षं प्राप्तेयं वितथं ततः ॥ २३१ ॥
दृष्टः सत्योऽपि दोषो न वाच्यो जिनमताश्रिता । उच्यमानोऽपि चान्येन वार्यः सर्वप्रयत्नतः २३२
ब्रुवाणो लोकविद्वेषकरणं शासनाश्रितम् । प्रतिपद्य चिरं दुःखं संसारमवगाहते ॥ २३३ ॥
सम्यग्दर्शनरत्नस्य गुणोऽत्यन्तमयं महान् । यद्दोषस्य कृतस्यापि प्रयत्नादुपगूहनम् ॥ २३४ ॥
अज्ञानान्मत्सराद्वापि दोषं वितथमेव तु । प्रकाशयञ्जनोऽत्यन्तं जिनमार्गाद्बहिः स्थितः ॥ २३५ ॥
इति श्रुत्वा मुनीन्द्रस्य भाषितं परमाद्भुतम् । सुरासुरमनुष्यास्ते विस्मयं परमं गताः ॥ २३६ ॥

ज्ञात्वा सुदुर्जरं वैरं सौमित्रेः रावणस्य च । महादुःखभयोपेतं निर्मत्सरमभूत्सदः ॥ २३७ ॥
मुनयः शंकिता जाता देवार्थितां परां गताः । राजानः प्रापुरुद्वेगं प्रतिबुद्धाश्च केचन ॥ २३८ ॥
विमुक्तगर्वसंभाराः परिशान्ताः प्रवादिनः । अपि सम्यक्त्वमायाता आसन्ये कर्मकर्कशाः ॥२३९॥
कर्मदूरात्मसंभाररक्षणमात्रकमूर्छिता । समाश्वसत्सभा हा ही धिक् चित्रमिति वादिनी ॥ २४० ॥
कृत्वा करपुटं मूर्ध्नि प्रणम्य मुनिपुंगवम् । मनुष्यसुरगीर्वाणाः प्रशशंसुर्विभीषणम् ॥ २४१ ॥
भवत्समाश्रयाद्भद्र श्रुतमस्माभिरुत्तमम् । चरितं बोधनं पुण्यं मुनिपादप्रसादतः ॥ २४२ ॥
ततो नरेन्द्रदेवेन्द्रमुनीन्द्राः संमदोत्कटाः । सर्वज्ञं तुष्टुवुः सर्वे परिवर्गसमन्विताः ॥ २४३ ॥
त्रैलोक्यं भगवन्नेतत्त्वया सकलभूषण । भूषितं तेन नामेदं तव युक्तं सहार्थकम् ॥ २४४ ॥
तिरस्कृत्य श्रियं सर्वां ज्ञानदर्शनवर्त्तिनी । केवलश्रीरियं भाति तव दूरीकृतोपमा ॥ २४५ ॥
अनाथमध्रुवं दीनं जन्ममृत्युवशीकृतम् । क्लिश्यतेऽदो जगत्प्राप्तं स्वं पदं जैनमुत्तमम् ॥ २४६ ॥

नानाव्याधिजरावियोगमरणप्रोद्भूतिदुःखं परं ।
प्राप्तानां मृगयुप्रवेजितमृगव्रातोपमावर्त्तिनाम् ॥
कृच्छ्रोत्सर्जनदारुणाशुभमहाकर्माक्रुद्धात्मना—

मस्माकं कृतकार्यं यच्छ निकटं कर्मक्षयं केवलिन् ॥ २४७ ॥
नष्टानां विषयांधकारगहने संसारवासे भव ।
त्वं दीपः शिवलब्धिकांक्षणमहातृष्णार्दितानां सरः ॥
वह्निः कर्मसमूहकक्षदहने व्यग्रीभवच्चेतसां—
नानादुःखमहातुषारपतनव्याकंपितानां रविः ॥ २४८ ॥

इति श्रीरविषेणाचार्यप्रणीते श्रीपद्मचरिते सपरिवर्गरामदेवपूर्वभवाभिधानं नाम षडुत्तरशतं पर्व ॥१०६॥

# अथ सप्तोत्तरशतं पर्व ।

ततः श्रुत्वा महादुःखं भवसंसृतिसंभवम् । कृतान्तवदनोऽवोचत्पद्मं दीक्षाभिकांक्षया ॥ १ ॥
मिथ्यापथपरिभ्रान्त्या संसारेऽस्मिन्ननादिके । खिन्नोऽहमधुनेच्छामि श्रामण्यं समुपासितुम् ॥ २ ॥
पद्मनाभस्ततोऽवोचदुत्सृज्य स्नेहमुत्तमम् । अत्यन्तदुर्धरां चर्यां कथं धारयसीदृशम् ॥ ३ ॥
कथं सहिष्यसे तीव्रान् शीतोष्णादीन् परीषहान् । महाकंटकतुल्यानि वाक्यानि च दुरात्मनाम् ४

अज्ञातक्लेशसंपर्कः कमलक्रोडकोमलः । कथं भूमितलेऽरण्ये निशां व्यालिनि नेष्यसि ॥ ५ ॥
प्रकटास्थिशिराजालः पक्षमासाद्युपोषितः । कथं परगृहे भिक्षां भोक्ष्यसे पाणिभाजने ॥ ६ ॥
नासहिष्ठा द्विषां सैन्यं यो मातंगघटाकुलम् । नीचात्परिभवं स त्वं कथं वा विसहिष्यसे ॥ ७ ॥
कृतांतास्यस्ततोऽवोचद्यस्त्वत्स्नेहरसायनम् । परित्यक्तुमहं सोढुस्तस्यान्यत्किमसह्यकम् ॥ ८ ॥
यावन्न मृत्युवज्रेण देहस्तंभो निपात्यते । तावदिच्छामि निर्गन्तुं दुःखांधाद्भवसंकटात् ॥ ९ ॥
धारयंति न निर्यातं वह्निज्वालाकुलालयान् । दयावंतो यथा तद्वद्दुःखतप्ताद्भवादपि ॥ १० ॥
वियोगः सुचिरेणापि जायते यद्भवद्विधैः । ततो निंदितसंसारः को न वेत्त्यात्मनो हितम् ॥ ११ ॥
अवश्यं त्वद्वियोगेन दुःखं भवि सुदुःसहम् । मा भूत्पुनरपीदृक्षमिति मे मतिरुद्यता ॥ १२ ॥
नियम्याश्रूणि कृच्छ्रेण व्याकुलो राघवोऽवदत् । मत्तुल्यां श्रियमुज्झित्वा धन्यस्त्वं सद्व्रतोन्मुखः ॥
एतेन जन्मना नो चेत्त्वं निर्वाणमुपेष्यसि । ततो बोध्योऽस्मि देवेन त्वया संकटमागतः ॥१४॥
यद्येकमपि किंचिन्मे जानास्युपकृतं ततः । नेदं विस्मरणीयं ते भद्रैवं कुरु संगरम् ॥ १५ ॥
यथाज्ञापयसीत्युक्त्वा प्रणम्य च यथाविधि । उपसृत्योरुसंवेगः सेनानीः सर्वभूषणम् ॥ १६ ॥
प्रणम्य सकलं त्यक्त्वा वाह्यांतरपरिग्रहम् । सौम्यवक्त्रः सुविक्रान्तो निष्क्रांतः कांतचेष्टितः ॥१७॥

एवमाद्या महाराजा वैराग्यं परमं गताः । महासंवेगसंपन्ना नैर्ग्रन्थ्यं व्रतमाश्रिताः ॥ १८ ॥
केचिच्छ्रावकतां प्राप्ताः सम्यग्दर्शनतां परे । मुदित्वैवं सभा साऽभाद्रत्नत्रयविभूषणा ॥ १९ ॥
प्रयाति नामतो नाथे ततः सकलभूषणे । प्रणम्य भक्तितो याता यथायातं सुरासुराः ॥ २० ॥
पद्मोपमेक्षणः पद्मो नत्वा सकलभूषणम् । अनुक्रमेण साधूंश्च मुक्तिसाधनतत्परान् ॥ २१ ॥
उपागमद्विनीतात्मा सीतां विमलतेजसाम् । घृताहुत्या समुद्भूतां स्फीतां वह्निशिखामिव ॥२२॥
क्षांत्याऽऽर्यागणमध्यस्थां स्फुरत्स्वकिरणोत्कराम् । सुभ्रूयुगां ध्रुवामन्यामिव तारागणावृताम्॥२३॥
सद्वृत्तात्यंतनिभृतां त्यक्तस्रग्गंधभूषणाम् । धृतिकीर्त्तिरतिश्रीह्रीपरिवारां तथापि ताम् ॥ २४ ॥
मृदुचारासितश्लक्ष्णप्रलंबांबरधारिणीम् । मंदानिलचलत्फेनपटां पुण्यनदीमिव ॥ २५ ॥
विकाशिकाशसंकाशां विशदां शरदं यथा । कौमुद्वतीमिव ज्योत्स्नां कुमुदाकरहासिनीम् ॥२६॥
महाविरागतः साक्षादिव प्रव्रजितां श्रियम् । वपुष्मतीमिव प्राप्तां जिनशासनदेवताम् ॥ २७ ॥
एवंविधां समालोक्य संभ्रमभ्रष्टमानसः । कल्पद्रुम इवाकंपो बलदेवः क्षणं स्थितः ॥ २८ ॥
प्रकृतिस्थिरनेत्रभ्रूप्राप्तावेतां विचिन्तयन् । शरत्पयोदमालानां समीप इव पर्वतः ॥ २९ ॥
इयं सा मद्भुजारंध्ररतिप्रवरसारिका । विलोचनकुमुद्वत्याश्चंद्रलेखा स्वभावतः ॥ ३० ॥

मद्युक्ताऽप्यगमत्त्रासं या पयोदरवादपि । अरण्ये सा कथं भीमे न भेष्यति तपस्विनी ॥ ३१ ॥
नितंबगुरुतायोगललितालसगामिनी । तपसा विलयं नूनं प्रयास्यति सुकोमला ॥ ३२ ॥
केदं वपुः क जैनेन्द्रं तपः परमदुष्करम् । पद्मिन्यां क इवाऽऽयासो हिमस्य तरुदाहिनः ॥ ३३ ॥
अन्नं यथेप्सितं भुक्तं यया परं मनोहरम् । यथालाभं कथं भिक्षां सैषा समधियास्यति ॥ ३४ ॥
वीणावेणुमृदंगैर्या कृतमंगलनिःस्वनाम् । निद्राऽसेवत सत्तल्पे कल्पकल्पालयस्थिताम् ॥ ३५ ॥
दर्भशल्याचिते सेयं वने मृगरवाकुले । कथं भयानकीं भीरु प्रेरयिष्यति शर्वरीम् ॥ ३६ ॥
किं मयोपाचितं पश्य मोहसंगतचेतसा । पृथग्जनपरीवादाद्वारिता प्राणवल्लभा ॥ ३७ ॥
अनुकूला प्रिया साध्वी सर्वविष्टपसुंदरी । प्रियंवदा सुखक्षोणी कुतोऽन्या प्रमदेदृशी ॥ ३८ ॥
एवं चिंताभराक्रान्तचित्तः परमदुःखितः । वेपितात्माऽभवत्पद्मश्चलत्पद्माकरोपमः ॥ ३९ ॥
ततः केवलिनो वाक्यं संस्मृत्य विधुतास्रकः । कृच्छ्रसंस्तंभितौत्सुक्यो बभूव विगतज्वरः ॥४०॥
अथ स्वाभाविकीं दृष्टिं बिभ्राणः सहसंभ्रमः । अधिगम्य सतीं सीतां भक्तिस्नेहान्वितोऽनमत् ॥
नारायणोऽपि सौम्यात्मा प्रणम्य रचितांजलिः । अभ्यनंदयदार्यां तां पद्मनाभमनुब्रुवन् ॥४२॥
धन्या भगवति त्वं नो वंद्या जाता सुचेष्टिता । शीलाचलेश्वरं या त्वं क्षितिवद्वहसेऽधुना ॥४३॥

जिनवागमृतं लब्धं परमं प्रथमं त्वया । निसक्तं येन संसारसमुद्रं प्रतरिष्यसि ॥ ४४ ॥
अपरासामपि स्त्रीणां सतीनां चारुचेतसाम् । इयमेव गतिर्भूयाल्लोकद्वितयशंसिता ॥ ४५ ॥
आत्मा कुलद्वयं लोकस्त्वया सर्वं प्रसाधितम् । एवंविधं क्रियायोगं भजंत्या साधुचित्तया ॥ ४६ ॥
क्षंतव्यं यत्कृतं किंचित्सुनये साध्वसाधु वा । संसारभावसक्तानां स्खलितं च पदे पदे ॥ ४७ ॥
त्वयैवंविधया शान्ते जिनशासनसक्तया । परमानंदितं चित्तं विषाद्यपि मनस्विनि ॥ ४८ ॥
अभिनंद्येति वैदेहीं प्रकृष्टमनसाविव । प्रयातौ नगरीं कृत्वा पुरस्ताल्लवणांकुशौ ॥ ४९ ॥
विद्याधरमहीपालाः प्रमोदं परमं गताः । विस्मयाकंपिता भूत्या परया ययुरग्रतः ॥ ५० ॥
मध्ये राजसहस्राणां वर्तमानौ मनोहरौ । पुरं विविशतुर्वीराविन्द्राविव सुरावृतौ ॥ ५१ ॥
देव्यस्तदग्रतो नानायानारूढा विचेतसः । प्रययुः परिवारेण यथाविधि समाश्रिताः ॥ ५२ ॥
प्रविशन्तं बलं वीक्ष्य नार्यः प्रासादमूर्द्धगाः । विचित्ररससंपन्नमभाषन्त परस्परम् ॥ ५३ ॥
अयं श्रीबलदेवोऽसौ मानी शुद्धिपरायणः । अनुकूला प्रिया येन हारिता सुविपश्चिता ॥ ५४ ॥
जगौ काचित्प्रवीराणां विशुद्धकुलजन्मनाम् । नराणां स्थितिरेषैव कृतमेतेन सुंदरम् ॥ ५५ ॥
एवं सति विशुद्धात्मा प्रव्रज्यां समुपागता । कस्य नो जानकी जाता मनसः सौख्यकारिणी ५६

अन्योचे सखि पश्येमं वैदेह्या पद्ममुज्झितम् । ज्योत्स्नया शशिनं मुक्तं दीप्त्या विरहितं रविम् ५७
अन्योचे किं परायत्तकांतिरस्य करिष्यति । स्वयमेवातिकांतस्य बलदेवस्य धीमतः ॥ ५८ ॥
काचिदूचे त्वया सीते किं कृतं पुरुषोत्तमम् । इदृशं नाथमुज्झित्वा वज्रदारुणचित्तया ॥ ५९ ॥
जगावन्या परं सीता धन्या चित्तवती सती । यथार्था या गृहानर्थान्निःसृता स्वहितोद्यता ६०
काचिदूचे कथं धीरौ त्वयेमौ सुकुमारकौ । रहितौ मानसानंदौ सुभक्तौ सुकुमारकौ ॥ ६१ ॥
कदाचिच्चलति प्रेम न्यस्तं भर्त्तरि योषिताम् । स्वस्तन्यकृतपोषेषु जातेषु न तु जातुचित् ॥६२॥
अन्योचे परमावेतौ पुरुषौ पुण्यपोषणौ । किमत्र कुरुते माता स्वकर्मनिरते जने ॥ ६३ ॥
एवमादिकृतालापाः पद्मवीक्षणतत्पराः । न तृप्तियोगमासेदुर्मधुकर्य इव स्त्रियः ॥ ६४ ॥
केचिल्लक्ष्मणमैक्षन्त जगदुश्च नरोत्तमाः । सोऽयं नारायणः श्रीमान्प्रभावाक्रांतविष्टपः ॥ ६५ ॥
चक्रपाणिरयं राजा लक्ष्मीपतिरनुत्तमः । साक्षादरातिदाराणां वैधव्यव्रतविग्रहः ॥ ६६ ॥

एवं प्रशस्यमानौ नमस्यमानौ च पौरलोकसमूहैः ।
स्वभवनमनुप्रविष्टौ स्वयंप्रभं वरविमानमिव देवेंद्रौ ॥ ६७ ॥

एवं पद्मस्य चरितं यो निबोधति संततम् ।

अपापो लभते लक्ष्मीं स भाति च परं रवेः ॥ ६८ ॥

इति श्रीपद्मचरिते श्रीरविषेणाचार्यप्रोक्ते प्रव्रजितसीताभिधानं नाम सप्तोत्तरशतं पर्व॥ १०७ ॥

---

# अथाष्टोत्तरशतं पर्व ।

पद्मस्य चरितं राजा श्रुत्वा दुरितदारणम् । निर्मुक्तसंशयात्मानं व्यशोचदिति चेतसा ॥ १ ॥
निरस्तः सीतया दूरं स्नेहबंधः स तादृशः । सहिष्यते महाचर्यां सुकुमारा कथं नु सा ॥ २ ॥
पश्य धात्रा मृगाक्षौ तौ मात्रा विरहमाहृतौ । सर्वर्द्धिद्युतिसंपन्नौ कुमारौ लवणांकुशौ ॥ ३ ॥
तावावशेषतां प्राप्तौ कथं मातृवियोगजम् । दुःखं तौ विसहिष्येते निरंतरसुखैधितौ ॥ ४ ॥
महौजसामुदाराणां विषमं जायते तदा । तत्र शेषेषु काऽवस्था ध्यात्वेत्यूचे गणाधिपम् ॥ ५ ॥
सर्वज्ञेन ततो दृष्टं जगत्प्रत्ययमागतम् । इन्द्रभूतिर्जगौ तस्मै चरितं लावणांकुशम् ॥ ६ ॥
अभूच्च पुरिकाकंद्यामधिपो रतिवर्द्धनः । पत्नी सुदर्शना तस्य पुत्रौ प्रियहितंकरौ ॥ ७ ॥
अमात्यः सर्वगुप्ताख्यो राज्यलक्ष्मीधुरंधरः । ज्ञेयः प्रभोः प्रतिस्पर्द्धी वधोपायपरायणः ॥ ८ ॥

अमात्यवनितारक्ता राजानं विजयावली । शनैरबोधयद्दत्वा पत्या कार्यं समीहितम् ॥ ९ ॥
बहिरप्रत्ययं राजा श्रितः प्रत्ययमान्तरम् । अभिज्ञानं ततोऽवोचदेतस्मै विजयावली ॥ १० ॥
कलहं सदसि श्वोऽसौ समुत्कोपयिता तव । परस्त्रीविरतो राजा बद्ध्वेव पुनरग्रहीत् ॥ ११ ॥
अब्रवीच्च कथं मेऽसौ परं भक्तोऽपभाषते । विजयावलि संभाव्यं कदाचिदपि नेदृशम् ॥ १२ ॥
ततोऽन्यत्र दिने चिह्नं भावं ज्ञात्वा महीपतिः । क्षमानिवारणेनैव प्रेरयद्दुरितागमम् ॥ १३ ॥
राजा क्रोशति मामेष इत्युक्त्वा प्रतिपत्तितः । सामंतानाभिनत्सर्वानमात्यः पापमानसः ॥ १४ ॥
राजवासगृहं रात्रौ ततोऽमात्यो महेंधनैः । अदीपयन्महीशस्तु प्रमादरहितः सदा ॥ १५ ॥
प्राकारपुटगुह्येन प्रदेशेन सुरंगया । भार्यां पुत्रौ पुरस्कृत्य निःससार शनैः सुधीः ॥ १६ ॥
यातश्च कशिपुं तेन काशीपुर्यां महीपतिम् । न्यायशीलं स्वसामन्तमुग्रवंशधुरंधरम् ॥ १७ ॥
राज्यस्थः सर्वगुप्तोऽथ दूतं संप्राहिणोद्यथा । कशिपो मां नमस्येति ततोऽसौ प्रत्यभाषत ॥१८॥
स्वामिघातकृतं (करो) हंता दुःखदुर्गतिभाक् खलः । एवंविधो न नाम्नाऽपि कीर्त्यते सेव्यते कथम् ॥
सयोषित्तनयो दग्धो येनेशो रतिवर्द्धनः । स्वामिस्त्रीबालघातं तं न स्मर्त्तुमपि वर्त्तते ॥ २० ॥
पापस्यास्य शिरश्छित्वा सर्वलोकस्य पश्यतः । नन्वद्यैव करिष्यामि रतिवर्द्धननिष्क्रयम् ॥२१॥

एवं तं दूतमत्यस्य दूरं वाक्यमपास्य सः । अमूढो दुर्मतं यद्वत्स्थितः कर्त्तव्यवस्तुनि ॥ २२ ॥
स्वामिभक्तिपरस्यास्य कशिपोर्बलशालिनः । अभूदक्षिप्रगंतव्यममात्यं प्रति सर्वदा ॥ २३ ॥
सर्वगुप्तो महासैन्यसमेतः सह पार्थिवैः । दूतप्रचोदितः प्राप चक्रवर्त्तीव मानवान् ॥ २४ ॥
काशिदेशं तु विस्तीर्णं प्रविष्टः सागरोपमः । संधानं कशिपुर्नैच्छद्योद्धव्यमिति निश्चितः ॥२५॥
रतिवर्द्धनराजेन प्रेषितः कशिपुं प्रति । दंडपाणिर्युवा प्राप्तः प्रविष्टश्च निशागमे ॥ २६ ॥
जगौ च वर्द्धसे दिष्ट्या देवेतो रतिवर्द्धनः । क्वासौ क्वासाविति स्फीतः तुष्टः कशिपुरभ्यधात् २७
उद्याने स्थित इत्युक्ते सुतरां प्रमदान्वितः । निर्ययावर्घपाद्येन सोऽतःपुरपुरःसरः ॥ २८ ॥
जयत्यजेयराजेन्द्रो रतिवर्द्धन इत्यभूत् । उत्सवो दर्शने तस्य कशिपोर्दानमानतः ॥ २९ ॥
संयुगे सर्वगुप्तस्य जीवतो ग्रहणं ततः । रतिवर्द्धनराजस्य काकंद्या राज्यसंगमः ॥ ३० ॥
विज्ञाय ते हि जीवन्तं स्वामिनं रतिवर्द्धनम् । सामंताः संगता मुक्ताः सर्वगुप्तं रणांतरे ॥ ३१ ॥
पुनर्जन्मोत्सवश्चक्रे रतिवर्द्धनभूभृतः । महद्भिर्दानसन्मानैर्देवतानां च पूजनैः ॥ ३२ ॥
नीतः प्रत्यंतवासित्वं मृततुल्यममात्यकः । दर्शनेनोज्झितः पापः सर्वलोकविगर्हितः ॥ ३३ ॥
कशिपुः काशिराजोऽसौ वाराणस्यां महाद्युतिः । रेमे परमया लक्ष्म्या लोकपाल इवापरः ॥३४॥

अथ भोगविनिर्विण्णः कदाचिद्रतिवर्द्धनः । श्रमणत्वं भदन्तस्य सुभानोरंविकेऽग्रहीत् ॥ ३५ ॥
आसीत्तया कृतो भेदः सर्वगुप्तेन निश्चितः । ततो विद्वेष्यतां प्राप्ता परमं तस्य भामिनी ॥ ३६ ॥
नाहं जाता नरेन्द्रस्य न पत्युरिति शोकिनी । अकामतपसा जाता राक्षसी विजयावली ॥ ३७ ॥
उपसर्गे तयोदारे क्रियमाणेतिवैरतः । सुध्याने कैवलं राज्यं संप्राप्तो रतिवर्द्धनः ॥ ३८ ॥
श्रामण्यं विमलं कृत्वा प्रियंकरहितंकरौ । ग्रैवेयकस्थितिं प्राप्तौ चतुर्थभवतः परम् ॥ ३९ ॥
शामल्यां दामदेवस्य तत्रैव पुरि नंदनौ । वसुदेवसुदेवाख्यौ गुण्यावस्थामिमौ द्विजौ ॥ ४० ॥
विश्वाप्रियंगुनामाने ज्ञेये सुवनिते तयोः । आसीद्गृहस्थभावश्च शंसनीयो मनीषिणाम् ॥ ४१ ॥
साधौ श्रीतिलकाभिख्ये दानं दत्त्वा सुभावनौ । त्रिपल्यभोगितां प्राप्तौ सत्स्त्रीकावुत्तरे कुरौ ४२
साधुसद्दानवृक्षोत्थमहाफलसमुद्भवम् । भुक्त्वा भोगं परं तत्र प्राप्तावीशानवासिताम् ॥ ४३ ॥
भुक्तभोगौ ततश्च्युत्वा बोधिलक्ष्मीसमन्वितौ । क्षीणदुर्गतिकर्माणौ जातौ प्रियहितंकरौ ॥ ४४ ॥
चतुष्कर्मभयारण्यं शुक्लध्यानेन वह्निना । निर्दह्य निर्वृतिं प्राप्तो मुनीन्द्रो रतिवर्द्धनः ॥ ४५ ॥
कथितौ यौ समासेन वीरौ प्रियहितंकरौ । ग्रैवेयकाच्च्युतावेतौ भव्यौ तौ लवणांकुशौ ॥ ४६ ॥
राजन् सुदर्शना देवी तनयात्यन्तवत्सला । भर्तृपुत्रवियोगार्त्ता स्त्रीस्वभावानुभावतः ॥ ४७ ॥

निदानशृंखलाबद्धा भ्राम्यंती दुःखसंकटम् । कृच्छ्रे स्त्रीत्वं विनिर्जित्य भुक्त्वा विविधयोनिषु ४८
अयं क्रमेण संपन्नो मनुष्यः पुण्यचोदितः । सिद्धार्थो धर्मसक्तात्मा विद्याविधिविशारदः ॥४९॥
तत्पूर्वस्नेहसंसक्तौ बालकौ लवणांकुशौ । अनेन संस्कृतौ जातौ त्रिदशैरपि दुर्जयौ ॥ ५० ॥

एवं विदित्वा सुलभौ नितान्तं जीवस्य लोके पितरौ सदैव ।
कर्त्तव्यमेतद्विदुषां प्रयत्नाद्विमुच्यते येन शरीरदुःखात् ॥ ५१ ॥
विमुच्य सर्वं भववृद्धिहेतुं कर्मोरुदुःखप्रभवं जुगुप्सम् ।
कृत्वा तपो जैनमतोपदिष्टं रविं तिरस्कृत्य शिवं प्रयात ॥ ५२ ॥

इति श्रीपद्मपुराणे रविषेणाचार्यप्रोक्ते लवणांकुशपूर्वभवाभिधानं नामाष्टोत्तरशतं पर्व ।

---

# अथ नवोत्तरशतं पर्व ।

पतिपुत्रान्परित्यज्य विष्टपख्यातचेष्टिता । निष्क्रान्ता कुरुते सीता यत्तद्वक्ष्यामि ते शृणु ॥ १ ॥
तस्मिन् विहरते ? काले श्रीमान् सकलभूषणः । दिव्यज्ञानेन यो लोकमलोकं चावबुध्यते ॥ २ ॥

अयोध्या सकला येन गृहाश्रमविधौ कृता । सुधृत्या सुस्थितिं प्राप्ता सद्धर्मप्रतिलंभिता ॥ ३ ॥
प्रजा च सकला तस्य वाक्ये भगवतः स्थिता । रेजे साम्राज्ययुक्तेन राज्ञेव कृतपालना ॥ ४ ॥
सद्धर्मोत्सवसंतानस्तत्र काले महोदयः । सुप्रबोधतमो लोकः साधुपूजनतत्परः ॥ ५ ॥
मुनिसुव्रतनाथस्य तत्तीर्थं भवनाशनम् । विराजतेतरां यद्वदरमल्लिजिनान्तरम् ॥ ६ ॥
अपि या त्रिदशस्त्रीणामतिशेते मनोज्ञताम् । तपसा शोषिता साऽभूत्सीता दग्धेव माधवी ॥ ७ ॥
महासंवेगसंपन्ना दुर्भावपरिवर्जिता । अत्यन्तनिंदितं स्त्रीत्वं चिंतयन्ती सती सदा ॥ ८ ॥
संसक्तभूरजोवस्त्रबद्धोरस्काशिरोरुहा । अस्नानस्वेदसंजातमलकंचुकधारिणी ॥ ९ ॥
अष्टमाद्धर्तुकालादिकृतशास्त्रोक्तपारणा । शीलव्रतगुणासक्ता रत्यरत्यपवर्जिता ॥ १० ॥
अध्यात्मनियतात्यन्तं शांता स्वांतवशात्मिका । तपोऽधिकुरुतेऽत्युग्रं जनांतरसुदुःसहम् ॥ ११ ॥
मांसवर्जितसर्वाङ्गा व्यक्तास्थिस्नायुपंजरा । पार्थिवद्रव्यनिर्मुक्ता पौस्तीव प्रतियातना ॥१२॥
अवलीनकगंडान्ता संबद्धा केवलं त्वचा । उत्कटभ्रूतटा शुष्का नदीव नितरामभात् ॥ १३ ॥
युगमानमहीपृष्ठन्यस्तसौम्यनिरीक्षणा । तपःकारणदेहार्थं भिक्षां चक्रे यथाविधि ॥ १४ ॥
अन्यथामिवानीता तपसा साधुचेष्टिता । नाऽऽत्मीयपरकीयेन जनेनाऽज्ञायि गोचरे ॥ १५ ॥

दृष्ट्वा तामेव कुर्वन्ति तस्या एव सदा कथाम् । न च प्रत्यभिजानंति तदा तामार्यिकां जनाः १६
एवं द्वाषष्टिवर्षाणि तपः कृत्वा समुन्नतम् । त्रयस्त्रिंशद्दिनं कृत्वा परमाराधनाविधिम् ॥ १७ ॥
उच्छिष्टं संस्तरं यद्वत्परित्यज्य शरीरकम् । आरणाच्युतमारुह्य प्रतीन्द्रत्वमुपागमत् ॥ १८ ॥
माहात्म्यं पश्यतेदृक्षं धर्मस्य जिनशासने । जंतुः स्त्रीत्वं यदुज्झित्वा पुमान् जातः सुरप्रभुः ॥१९॥
तत्र कल्पे मणिच्छायासमुद्योतितपुष्करे । कांचनादिमहाद्रव्यविचित्रपरमाद्भुते ॥ २० ॥
सुमेरुशिखराकारे विमाने परिवारिणि । परमैश्वर्यसंपन्ना संप्राप्ता त्रिदशेन्द्रताम् ॥ २१ ॥
देवीशतसहस्राणां नयनानां समाश्रयः । तारागणपरीवारः शशांक इव राजते ॥ २२ ॥
इत्यन्यानि च साधूनि चरितानि नरेश्वरः । पापघातीनि शुश्राव पुराणानि गणेश्वरात् ॥ २३ ॥
राजोचे कस्तदा नाथो देवानामारणाच्युते । बभौ यस्य प्रतिस्पर्द्धी सीतेन्द्रोऽपि तपोबलात् २४
मधुरित्याह भगवान् भ्राता यस्य स कैटभः । येन भुक्तं महैश्वर्यं द्वाविंशत्यब्धिसम्मितम् ॥२५॥
चतुः षष्टिसहस्रेषु किंचिदग्रेष्वनुक्रमात् । वर्षाणां समतीतेषु सुकृतस्यावशेषतः ॥ २६ ॥
इह प्रद्युम्नशांबौ तौ यावेतौ मधुकैटभौ । द्वारिकायां समुत्पन्नौ पुत्रौ कृष्णस्य भारते ॥ २७ ॥
षाष्टिवर्षसहस्राणि चत्वारि च ततः परम् । रामायणस्य विज्ञेयमन्तरं भारतस्य च ॥ २८ ॥

अरिष्टनेमिनाथस्य तीर्थे नाकादिह च्युतः । मधुर्बभूव रुक्मिण्यां वासुदेवस्य नंदनः ॥ २९ ॥
मगधाधिपतिः प्राह नाथ वागमृतस्य ते । अतृप्तिमुपगच्छामि धनस्येव धनेश्वरः ॥ ३० ॥
तावन्मधोः सुरेन्द्रस्य चरितं विनिगद्यताम् । भगवन् श्रोतुमिच्छामि प्रसादः क्रियतां मम ३१
कैटभस्य च तद्भातुरवधानपरायण । गणेन्द्र चरितं ब्रूहि सर्वं हि विदितं तव ॥ ३२ ।
आसीदन्यभवे तेन किं कृतं प्रकृतं भवेत् । कथं वा त्रिजगच्छ्रेष्ठा लब्धा बोधिः सुदर्लभा ॥३३॥
क्रमवृत्तिरियं वाणी तावकी धीश मामिका । उत्सुकं च परं चित्तमहो युक्तनुक्रमात् ॥ ३४ ॥
गण्याह मगधाभिख्ये देशेऽस्मिन्सर्वशस्यके । चातुर्वर्ण्यप्रमुदिते धर्मकामार्थसंयुते ॥ ३५ ॥
चारुचैत्यालयाकीर्णे पुरग्रामाकराऽऽचिते । नद्युद्यानमहारम्ये साधुसंघसमाकुले ॥ ३६ ॥
राजा नित्योदितो नाम तत्र कालेऽभवन्महान् । शालिग्रामोऽस्ति तत्रैव देशे ग्रामः पुरोपमः ॥३७॥
ब्राह्मणः सोमदेवोऽत्र भार्या तस्याग्निलेत्यभूत् । विज्ञेयौ तनयौ तस्या वाह्निमारुतभूतिकौ ॥ ३८ ॥
षट्कर्मविधिसंपन्नौ वेदशास्त्रविशारदौ । अस्मत्तः कोऽपरोऽस्तीति नित्यं पंडितमानिनौ ॥३९॥
अभिमानमहादाहसंजातोद्धतविभ्रमौ । भोग एव सदा सेव्य इति धर्मपराङ्मुखौ ॥ ४० ॥
कस्यचित्त्वथ कालस्य विहरन् पृथिवीमिमाम् । बहुभिः साधुभिर्गुप्तः संप्राप्तो नंदिवर्द्धनः ॥४१॥

मुनिः स चावधिज्ञानात्समस्तं जगदीक्षते । अध्युवास बहिर्ग्राममुद्यानं साधुसम्मतम् ॥ ४२ ॥
ततश्चागमनं श्रुत्वा श्रमणानां महात्मनाम् । शालिग्रामजनो भूत्वा सर्व एव विनिर्ययौ ॥ ४३ ॥
अपृच्छतां ततो वह्निवायुभूती विलोक्य तम् । कायं जनपदो याति सुसंकीर्णः परस्परम् ॥४४॥
ताभ्यां कथितमन्येन मुनिः प्राप्तो निरंबरः । तस्यैव वंदनां कर्त्तुमखिलः प्रस्थितो जनः ॥४५॥
अग्निभूतिस्ततः क्रुद्धः सह भ्रात्रा विनिर्गतः । विवादे श्रमणान्सर्वान् जयामीति वचोऽवदत् ४६
उपगम्य च साधूनां मुनीन्द्रं मध्यवर्त्तिनम् । अपश्यद्गृहताराणां मध्ये चन्द्रमिवोदितम् ॥ ४७ ॥
प्रधानसंयतेनैतौ प्रोक्तौ सात्यकिना ततः । एवमागच्छतां विप्रौ किंचिद्विधिनुतं गुरौ ॥ ४८ ॥
उवाच प्रहसन्नग्निर्भवद्भिः किं प्रयोजनम् । जगादागतयोरत्र दोषो नास्तीति संयतः ४९ ॥
द्विजेनैकेन च प्रोक्तमेतान् श्रमणपुंगवान् । वादे जेतुमुपायातौ दूरे किमधुना स्थितौ ॥ ५० ॥
एवमस्त्विति सामर्षौ मुनीन्द्रस्य पुरः स्थितौ । ऊचतुश्च समुन्नद्धौ किं वेत्सीति पुनः पुनः ॥५१॥
सावधिर्भगवानाह भवंतावागतौ कुतः । ऊचतुस्तौ न ते ज्ञातौ शालिग्रामात्किमागतौ ॥ ५२ ॥
मुनिराहावगच्छामि शालिग्रामादुपागतौ । अनादिजन्मकांतारे भ्रमन्तावागतौ कुतः ॥ ५३ ॥
तौ समूचतुरन्योऽपि को वेत्तीति ततो मुनिः । जगाद श्रृणुतां विप्रावधुना कथयाम्यहम् ॥५४॥

ग्रामस्यैतस्य सीमांते वनस्थल्यामुभौ समम् । अन्योन्यानुरतात्रास्तां शृगालौ विकृताननौ ॥५५॥
आसीदत्रैव च ग्रामे चिरवासः कृषीवलः । ख्यातः प्रामरको नाम गतोऽसौ क्षेत्रमन्यदा ॥५६॥
पुनरेमीति संचिंत्य भानावस्ताभिलाषिणि । त्यक्तोपकरणं क्षेत्रे संगतः क्षुधितो गृहम् ॥ ५७ ॥
तावदंजनशैलाभाः प्लावयंतो महीतलम् । अकस्मादुन्नता मेघा ववर्षुर्नक्तवासरम् ॥ ५८ ॥
प्रशांताः सत्प्ररात्रेण रात्रौ तमसि भीषणे । जंबुकौ तौ विनिष्क्रान्तौ गहनादर्दितौ क्षुधा ॥५९॥
अथोपकरणं क्लिन्नं कर्दमोपलसंगतम् । तत्ताभ्यां भक्षितं सर्वं प्राप्ता चोदरवेदनाम् ॥ ६० ॥
अकामनिर्जरायुक्तौ वर्षानिलसमाहतौ । ततः कालं गतौ जातौ सोमदेवस्य नंदनौ ॥ ६१ ॥
स च प्रामरकः प्राप्तोऽन्वेषकोऽपश्यदेतकौ । निर्जीवौ जंबुकौ तेन गृहीत्वा जनितौ दृती ॥६२॥
अचिरेण मृतश्चासौ सुतस्यैवाभवत्सुतः । जातिस्मरत्वमासाद्य मूकीभूय व्यवस्थितः ॥ ६३ ॥
पुत्रः पितुरिति ज्ञान्वेत्याह्वरामि कथं त्वहम् । स्नुषां च मातुरित्यस्माद्धेतोर्मौनमुपाश्रितः ॥६४॥
यदि न प्रत्ययः सम्यक्ततत्तिष्ठत्यसावयम् । मध्ये स्वजनवर्गस्य द्विजो मां द्रष्टुमागतः ॥ ६५ ॥
आहूय गुरुणा चोक्तः स त्वं प्रामरकस्तथा । आसीस्त्वमधुना जातस्तोकस्यैव शरीरजः ॥६६॥
संसारस्य स्वभावोऽयं रंगमध्ये यथा नटः । राजा भूत्वा भवेद्भृत्यः प्रेष्यश्च प्रभुतां व्रजेत् ॥६७॥

एवं पिताऽपि तोकत्वमेति तोकश्च तातताम् । माता पत्नीत्वमायाति पत्नी चायाति मातृताम् ॥
उद्घाटनघटीयंत्रसदृशेऽस्मिन् भवात्मनि । उपर्युपरितां यांति जीवाः कर्मवशं गताः ॥ ६९ ॥
इति ज्ञात्वा भवावस्थां नितान्तं वत्स निंदिताम् । अधुना मूकतां मुंच कुरु वाचां क्रियां सतीम् ॥
इत्युक्तः परमं हृष्ट उत्थाय विगतज्वरः । उद्भूतघनरोमांचप्रोत्फुल्लनयनाननः ॥ ७१ ॥
गृहीत इव भूतेन परिभ्रम्य प्रदक्षिणाम् । निपपातोत्तमांगेन छिन्नमूलतरुर्यथा ॥ ७२ ॥
उवाच विस्मितश्चोच्चैस्त्वं सर्वज्ञपराक्रमः । इहस्थसर्वलोकस्य सकलां पश्यसि स्थितिम् ॥ ७३ ॥
संसारसागरे घोरे कष्टमेवं निमज्जतः । सत्त्वानुकंपया बोधिस्त्वया मे नाथ दर्शिता ॥ ७४ ॥
मनोगतं मम ज्ञातं भवता दिव्यबुद्धिना । इत्युक्त्वा जगृहे दीक्षां सास्नान् संत्यज्य बांधवान् ७५
तस्य प्रामरकस्यैतच्छ्रुत्वोपाख्यानमीदृशम् । संवृत्ता बहवो लोके श्रमणाः श्रावकास्तथा ॥ ७६ ॥
गत्वा च दृती दृष्टे सर्वलोकेन तद्गृहे । ततः कलकलो जातो विस्मयश्च समंततः ॥ ७७ ॥
अथोपहसितौ राजंस्तौ जनेन द्विजातिकौ । इमौ तौ पशुमांसादौ जंबुकौ द्विजतां गतौ ॥७८॥
एताभ्यां ब्रह्मतावादविमूढाभ्यां सुखार्थिनी । प्रजेयं मुषिता सर्वा सक्ताभ्यां पशुहिंसने ॥ ७९ ॥
अमी तपोधनाः शुद्धाः श्रमणा ब्रह्मणोधिपाः । ब्राह्मणा इति विख्याता हिंसामुक्तिव्रताश्रिताः ८०

महाव्रतशिखाटोपाः क्षांतियज्ञोपवीतिनः । ध्यानाग्निहोत्रिणः शांता मुक्तिसाधनतत्पराः ॥ ८१ ॥
सर्वारंभप्रवृत्ता ये नित्यमब्रह्मचारिणः । द्विजाः स्म इति भाषंते क्रियया न पुनर्द्विजाः ॥ ८२ ॥
यथा केचिन्नरा लोके सिंहदेवाग्निनामकाः । तथामी विरतेर्भ्रष्टाः ब्राह्मणा नामधारकाः ॥८३॥
अमी सुश्रमणा धन्या ब्राह्मणाः परमार्थतः । ऋषयः संयता धीराः क्षांता दांता जितेंद्रियाः ८४
भदंतास्त्यक्तसंदेहा भगवंतः सतापसाः । मुनयो यतयो वीरा लोकोत्तरगुणस्थिताः ॥ ८५ ॥
परिव्रजंति ये मुक्ति भवहेतौ परिग्रहे । ते परिव्राजका ज्ञेया निर्ग्रंथा एव निस्तमाः ॥ ८६ ॥
तपसा क्षपयंति स्वं क्षीणरागाः क्षमान्विताः । क्षिण्वंति च यतः पापं क्षपणास्तेन कीर्त्तिताः॥८७॥
यमिनो वीतरागाश्च निर्मुक्तांगा निरंबराः। योगिनो ध्यानिनो वंद्या ज्ञानिनो निःस्पृहा बुधाः ८८
निर्वाणं साधयंतीति साधवः परिकीर्त्तिताः । आचार्या यत्सदाचारं चरंत्याचारयंति च ॥८९ ॥
अनगारगुणोपेता भिक्षवः शुद्धभिक्षया । श्रमणाः सितकर्माणः परमश्रमवर्त्तिनः ॥ ९० ॥
इति साधुस्तुतिं श्रुत्वा तथा निंदनमात्मनः । रहःस्थितौ विलक्षौ च विमानौ विगतप्रभौ ॥९१॥
गते च सवितर्यस्तं प्रकाशनसुदुःखितौ । अन्विष्यन्तौ गतौ स्थानं यत्रासौ भगवान् स्थितः ९२

निःसंगः संघमुत्सृज्य वनैकान्तेऽतिगह्वरे । करंकैः संकटेऽत्यन्तं विचित्रचितिकाचिते ॥ ९३ ॥
क्रव्यश्वापदनादाढ्ये पिशाचभुजगाकुले । सूचीभेदतमश्छन्ने महाबीभत्सदर्शने ॥ ९४ ॥
एवंविधे श्मशानेऽसौ निर्जन्तुनि शिलातले । पादाभ्यामीक्षितस्ताभ्यां प्रतिमास्थानमास्थितः ९५
आकृष्टखड्गहस्तौ च क्रुद्धौ जगदतुः समम् । जीवं रक्षतु ते लोकः क यासि श्रमणाधुना ॥ ९६ ॥
पृथिव्यां ब्राह्मणाः श्रेष्ठा वयं प्रत्यक्षदेवताः । निर्लज्जस्त्वं महादोषो जंबुका इति भाषसे ॥९७॥
ततोऽत्यन्तप्रचंडौ तौ दुष्टौ रक्तकलोचनौ । जालमौ कृपाविनिर्मुक्तौ सुयक्षेण निरीक्षितौ ॥ ९८ ॥
सुमनाश्चिंतयामास पश्य निर्दोषमीदृशम् । हंतुमभ्युद्यतौ साधुं मुक्तांगं ध्यानतत्परम् ॥ ९९ ॥
ततः संस्थानमास्थाय तौ चोदगिरतामसी । यक्षेण च तदग्रेण स्तंभितौ निश्चलौ स्थितौ १००
विकर्म कर्तुमिच्छन्तावुपसर्गं महामुनेः । प्रतीहाराविव क्रूरौ तस्थतुः पार्श्वयोरिमौ ॥ १०१ ॥
ततः सुविमले काले जाते जाताब्जबांधवे । संहृत्य सन्मुनिर्योगं निःसृत्यैकांततः स्थितः ॥१०२॥
संगश्चतुर्विधः सर्वः शालिग्रामजनस्तथा । प्राप्तः परमयोगीशमिति विस्मयवान् जगौ ॥ १०३ ॥
कावेतावीदृशौ पापौ धिकष्टं कर्तुमीहितौ । अग्निवायुदुराचारावेतौ तावाततायिनौ ॥ १०४ ॥
तौ चाचिंतयतामुच्चैः प्रभावोऽयं महामुनेः । आवां येन बलोद्वृत्तौ स्तंभितौ स्थावरीकृतौ १०५

अनयाऽवस्थया मुक्तौ जीविष्यामो वयं यदा । तदा संप्रतिपत्स्यामो दर्शनं मुनिसत्तमम् ॥१०६॥
अत्रांतरे परिप्राप्तः सोमदेवः ससंभ्रमः । भार्ययाऽग्निलया साकं प्रसादयति तं मुनिम् ॥१०७॥
भूयोभूयः प्रणामेन बहुभिश्च प्रियोदितैः । दंपती चक्रतुश्चाटुं पादमर्दनतत्परौ ॥ १०८ ॥
जीवतां देव दुःपुत्रावेतौ नः कोपमुत्सृज । संप्रेष्य बांधवा नाथ वयमाज्ञाकरास्तव ॥ १०९ ॥
संयतो वक्ति कः कोपः साधूनां यद्ब्रवीष्यदः । वयं सर्वस्य सदयाः सममित्रारिबांधवाः ॥११०॥
प्राह यक्षोऽतिरक्ताक्षो बृहद्गंभीरनिस्वनः । माऽभ्याख्यानं गुरोरस्य जनमध्ये प्रदातकम् ॥१११॥
साधून्वीक्ष्य जुगुप्सन्ते सद्योऽनर्थं प्रयांति ते । न पश्यन्त्यात्मनो दौष्टयं दोषं कुर्वन्ति साधुषु ११२
यथाऽऽदर्शतले कश्चिदात्मानमवलोकयन् । यादृशं कुरुते वक्त्रं तादृशं पश्यति ध्रुवम् ॥ ११३ ॥
तद्वत्साधुं समालोक्य प्रस्थानादिक्रियोद्यतः । यादृशं कुरुते भावं तादृक्षं लभते फलम् ॥११४॥
प्ररोदनं प्रहासेन कलहं परुषोक्तितः । वधेन मरणं प्रोक्तं विद्वेषेण च पातकम् ॥ ११५ ॥
इति साधोर्नियुक्तेन परिनिंद्येन वस्तुना । फलेन तादृशेनैव कर्त्ता योगमुपाश्नुते ॥ ११६ ॥
एतौ स्वोपचितैर्दोषैः प्रेर्यमाणौ स्वकर्मभिः । तव पुत्रौ मया विप्र स्तंभितौ न हि साधुना ॥११७॥
वेदाभिमाननिर्दग्धावेतौ छद्मवनीपकौ । म्रियेतां धिक्क्रियाचारौ संयतस्याततायिनौ ॥ ११८ ॥

इति जल्पन्तमत्युग्रं यक्षं प्रतिघभीषणम् । प्रसादयति साधुं च विप्रः प्रांजलिमस्तकः ॥ ११९ ॥
उर्द्ध्वबाहुः परिक्रोशन्निंदयन्ताडयन्नुरः । सममग्निलया विप्रो विप्रकीर्णात्मकोऽभवत् ॥ १२० ॥
गुरुराह ततः कांत हे यक्ष कमलेक्षण । मृष्यतामनयोर्दोषो मोहप्रजडचित्तयोः ॥ १२१ ॥
जिनशासनवात्सल्यं कृतं सुकृतिना त्वया । नैतं प्राणिवधं भद्रं मदर्थे कर्त्तुमर्हसि ॥ १२२ ॥
यथाऽऽज्ञापयसीत्युक्त्वा गुह्यकेन विसर्जितौ । आश्वस्योपसृतौ भक्त्या पादमूलं गुरोस्ततः १२३
नम्रौ प्रदक्षिणां कृत्वा शिरःस्थकरकुड्मलौ । साधवीयां महाचर्यां ग्रहीतुं शक्तिवर्जितौ॥ १२४ ॥
अणुव्रतानि गृण्हीतां सम्यग्दर्शनभूषितौ । अमूढौ श्रावकौ जातौ गृहधर्मसुखे रतौ ॥ १२५ ॥
पितरावनयोः सम्यक्श्रद्धया परिकीर्त्तितौ । कालं गतौ विना धर्माद्भ्रमतो भवसागरे ॥ १२६ ॥
तौ तु संत्यक्तसंदेहौ जिनशासनभावितौ । हिंसाद्यं लौकिकं कार्यं वर्जयन्तौ विषं यथा ॥१२७॥
कालं कृत्वा समुत्पन्नौ सौधर्मे त्रिबुधोत्तमौ । सर्वेन्द्रियमनोह्लादं यत्र दिव्यं महत्सुखम् ॥१२८॥
एत्यायोध्यां समुद्रस्य धारण्याः कुक्षिसंभवौ । नंदनौ नयनानंदौ श्रेष्ठिनस्तौ बभूवतुः ॥ १२९ ॥
पूर्णकांचनभद्राख्यौ भ्रातरावेव तौ सुखम् । पुनः श्रावकधर्मेण गतौ सौधर्मदेवताम् ॥ १३० ॥
अयोध्यानगरीन्द्रस्य हेमनाभस्य भामिनी । नाम्नाऽमरावती तस्यां समुत्पन्नौ दिवश्च्युतौ ॥१३१॥

जगतीह प्रविख्यातौ संज्ञया मधुकैटभौ । अजय्यौ भ्रातरौ चारु–कृतांतसमविभ्रमौ ॥ १३२ ॥
ताभ्यामियं समाक्रान्ता मही सामंतसंकटा । स्थापिता स्ववशे राजन् प्रज्ञाभर्या शेमुषी यथा १३३
नेच्छत्याज्ञां नरेन्द्रैको भीमो नाम महाबलः । शैलान्तःपुरमाश्रित्य चमरो नन्दनं यथा ॥१३४॥
वीरसेनेन लेखश्च प्रेषितस्तस्य भूपतेः । उद्वासितानि धामानि पृथिव्यां भीमवह्निना ॥ १३५ ॥
ततो मधुः क्षणं क्रुद्धो भीमकस्योपरि द्रुतम् । ययौ सर्वबलौघेन युक्तो योधैः समंततः ॥१३६॥
क्रमान्मार्गवशात्प्राप्तो न्यग्रोधनगरं च तत् । वीरसेनो नृपो यत्र प्रीतियुक्तो विवेश च ॥ १३७ ॥
चंद्राभा चंद्रकांतास्या वीरसेनस्य भामिनी । देवी निरीक्षिता तेन मधुना जगदिंदुना ॥ १३८ ॥
अनया सह संवासो वरं विंध्यवनान्तरे । चन्द्राभया विना भूतं न राज्यं सार्वभूमिकम् ॥ १३९ ॥
इति संचिन्तयन्राजा भीमं निर्जित्य संयुगे । आस्थापयद्वशे शत्रूनन्यांश्च तत्कृताशयः ॥ १४० ॥
अयोध्यां पुनरागत्य सपत्नीकान्नराधिपान् । आहूय विपुलैर्दानैर्विसर्जयति मानितान् ॥ १४१ ॥
आहूतो वीरसेनोऽपि सह पत्न्या ययौ द्रुतम् । अयोध्याबहिरुद्याने मध्येऽस्थात्सरयूतटे ॥१४२॥
देव्या सह समाहूतः प्रविष्टो भवनं मधोः । उदारदारसन्मानो वीरसेनो विसर्जितः ॥ १४३ ॥
अद्यापि मन्यते नेयमिति रुद्धा मनोहरा । चन्द्राभा नरचन्द्रेण प्रेषितान्तःपुरं ततः ॥ १४४ ॥

महादेव्यभिषेकेण प्रापिता चाभिषेचनम् । आरूढा सर्वदेवीनामुपरिस्थितमास्पदम् ॥ १४५ ॥
श्रियेव स तया सार्कं निमग्नः सुखसागरे । स्वं सुरेन्द्रसमं मेने भोगांधीकृतमानसः ॥ १४६ ॥
वीरसेननृपः सोऽयं विज्ञाय विहृतां प्रियाम् । उन्मत्तत्वं परिप्राप्तो रतिं क्वापि न विन्दते ॥१४७॥
मंडवस्याभवच्छिष्यस्तापसोऽसौ जलप्रियः । मूढं विस्मापयंल्लोकं तपः पंचाग्निकं श्रितः ॥१४८॥
अन्यदा मधुराजेन्द्रो धर्मासनमुपागतः । करोति मंत्रिभिः सार्द्धं व्यवहारविचारणम् ॥ १४९ ॥
भूपालाचारसंपन्नं सत्यं संमदसंगतम् । प्रविष्टोऽतःपुरं धीरस्तपनेऽस्ताभिलाषुके ॥ १५० ॥
खिन्ना तं प्राह चंद्राभा किमित्यद्य चिरायितम् । वयं क्षुदर्दिता नाथ दुःखं वेलामिमां स्थिताः ॥
सोऽवोचद्व्यवहारोऽयमरालः पारदारिकः । छेत्तुं न शक्यते यस्मात्तस्मादद्य चिरायितम् ॥१५२॥
विहस्योवाच चंद्राभा को दोषोऽन्यप्रियारतौ । परभार्या प्रिया यस्य तं पूजय यथेप्सितम् १५३
तस्यास्तद्वचनं श्रुत्वा क्रुद्धो मधुविभुर्जगौ । ये पारदारिका दुष्टा निग्राह्यास्ते न संशयः ॥१५४॥
दंड्याः पंचकदंडेन निर्वास्याः पुरुषाधमाः । स्पृशन्तोऽप्यबलामन्यां भाषयन्तोऽपि दुर्मताः॥१५५॥
सन्मूढाः परदारेषु ये पापादनवर्त्तिनः । अधः प्रयतनं येषां ते पूज्याः कथमीदृशाः ॥ १५६ ॥
देवी पुनरुवाचेदं सहसा कमलेक्षणा । अहो धर्मपरो जातु भवान् भूपालनोद्यतः ॥ १५७ ॥

महान् यद्येष दोषोऽस्ति परदारैषिणां नृणाम् । एतं निग्रहमुर्वीश न करोषि किमात्मनः ॥१५८॥
प्रथमस्तु भवानेव परदाराभिगामिनाम् । कोऽन्येषां क्रियते दोषो यथा राजा तथा प्रजाः ॥१५९॥
स्वयमेव नृपो यत्र नृशंसः पारदारिकः । तत्र किं व्यवहारेण कारणं स्वस्थतां व्रज ॥ १६० ॥
येन बीजाः प्ररोहंति जगतो यच्च जीवनम् । जातस्ततो जलाद्वह्निः किमिहापरमुच्यताम् ॥१६१॥
उपलभ्येदृशं वाक्यं प्रतिरुद्धोऽभवन्मधुः । एवमेवेति तां देवीं पुनः पुनरभाषत ॥ १६२ ॥
तथाप्यैश्वर्यपाशेन वेष्टितो दुःसुखोदधेः । भोगसंवर्त्तनी येन कर्मणा नावमुच्यते ॥ १६३ ॥
द्राघीयसि गते काले सुप्रबोधसुखान्विते । सिंहपादाह्वयः साधुः प्राप्तोऽयोध्यां महागुणः ॥१६४॥
सहस्राम्रवने कान्ते मुनीन्द्रं समवस्थितम् । श्रुत्वा मधुः समायासीत्सपत्नीकः सहानुगः ॥१६५॥
गुरुं प्रणम्य विधिना संविश्य धरणीतले । धर्मं संश्रुत्य जैनेन्द्रं भोगेभ्यो विरतोऽभवत् ॥१६६॥
राजपुत्री महागोत्रा रूपेणाप्रतिमा भुवि । अत्याक्षीदधिराज्यं च ज्ञात्वा दुर्गतिवेदनाम् ॥१६७॥
विदित्वैश्वर्यमानाद्यं मुनीभूतः स कैटभः । महाचर्यासमाक्लिष्टो विजहार महीं मधुः ॥ १६८ ॥
ररक्ष माधवीं क्षोणीं राज्यं च कुलवर्द्धनः । सर्वस्य नयनानंदः स्वजनस्य परस्य च ॥ १६९ ॥
मधुः सुघोरं परमं तपश्चरन्महामनाः वर्षशतानि भूरिशः ।

विधाय कालं विधिनाऽऽरणाच्युते जगाम देवेन्द्रपदं रणच्युतिः ॥ १७० ॥
अयं प्रभावो जिनशासनस्य यदिन्द्रतापीदृशपूर्ववृत्तैः ।
को विस्मयो वा त्रिदशेश्वरत्वे प्रयान्ति यन्मोक्षपुरं प्रयत्नात् ॥ १७१ ॥
मधोरिन्द्रस्य संभूतिरेषा ते कथिता मया । सीता यस्य प्रतिस्पर्द्धी संभूतः पाकशासनः ॥१७२॥
अतः परं चित्तहरं मनीषिणां कुमारवीराष्टकचेष्टितं परम् ।
वदामि पापस्य विनाशकारणं कुरु श्रुतौ श्रेणिक भूभृतां रवे ॥ १७३ ॥

इति श्रीपद्मपुराणे श्रीरविषेणाचार्यप्रोक्ते मधूपाख्यानं नाम नवोत्तरशतं पर्व ॥ १०९ ॥

---

# अथ दशाधिकशतं पर्व ।

कांचनस्थाननाथस्य तनये रूपगर्विते । द्वे कांचनरथस्याऽऽस्तां ययोर्माता शतहृदा ॥ १ ॥
तयोः स्वयंवरार्थेन समस्तान् भूनभश्चरान् । आह्वाययत्पिता प्रीत्या लेखवाहैर्महाजवैः ॥ २ ॥
दत्तो विज्ञापितो लेखो विनीतापतये तथा । स्वयंवरविधानं मे दुहितुश्चिन्त्यतामिति ॥ ३ ॥

ततस्तौ रामलक्ष्मीशौ समुत्पन्नकुतूहलौ । ऋद्धया परमया युक्तान् सर्वान् प्राहिणुतां सुतान् ॥४॥
ततः कुमारधीरास्ते कृत्वाऽग्रे लवणांकुशौ । प्रययुः कांचनस्थानं सुप्रेमाणः परस्परम् ॥ ५ ॥
विमानशतमारूढा विद्याधरगणावृताः । श्रिया देवकुमाराभा वियन्मार्गं समागताः ॥ ६ ॥
आपूर्यमाणसत्सैन्याः पश्यन्तो दूरगां महीम् । कांचनस्यंदनस्याऽऽयुः पुटभेदनमुत्तमम् ॥ ७ ॥
यथार्हं द्वे अपि श्रेण्यौ निविष्टे तत्र रेजतुः । सदसीव सुधर्मायां नानालंकारभूषिते ॥ ८ ॥
समस्तविभवोपेता नरेन्द्रास्तत्र रेजिरे । विचित्रकृतसंचेष्टास्त्रिदशा इव नंदने ॥ ९ ॥
तत्र कन्ये दिनेऽन्यस्मिन्प्रशस्ते कृतमंगले । निर्जग्मतुर्निजावासाच्छ्रीलक्ष्म्याविव सद्गुणे ॥१०॥
देशतः कुलतो वित्ताच्चेष्टितान्नामधेयतः । ताभ्यामकथयत्सर्वान् कंचुकी जगतीपतीन् ॥ ११ ॥
प्लवंगहरिशार्दूलवृषनागादिकेतनान् । विद्याधरान् सुकन्ये ते आलोकेतां शनैः क्रमात् ॥ १२ ॥
दृष्ट्वा निश्चित्य ते प्राप्ता वैलक्ष्यं विहितत्विषः । दृश्यमानाः समारूढास्तुलां संदेहविग्रहाम् ॥१३॥
द्रक्ष्यन्ते ये तु ते स्वस्य सज्जयन्तो विभूषणम् । नाज्ञासिषुः क्रियाकृत्यास्तिष्ठाम इति चंचला १४
प्रवरिष्यति कं त्वेषा रूपगर्वज्वराकुला । मन्येऽस्माकमिति प्राप्ताश्चिन्तां ते चलमानसाः ॥ १५ ॥
गृहीते किं विजित्यैते सुरासुरजगद्वयम् । पताके कामदेवेन लोकोन्मादनकारणे ॥ १६ ॥

अथोत्तमकुमार्यौ ते निरीक्ष्य लवणांकुशौ । विद्धे मन्मथबाणेन निश्चलत्वमुपागते ॥ १७ ॥
महादृष्टयाऽनुरागेण बद्धयातिमनोहरः । अनंगलवणोऽग्राहि मंदाकिन्याऽग्रकन्यया ॥ १८ ॥
शशांकवक्त्रया चारुभाग्यया वरकन्यया । शशांकभाग्यया युक्तो जगृहे मदनांकुशः ॥ १९ ॥
ततोहलहलारावस्तस्मिन् सैन्ये समुत्थितः । जयोत्कृष्टहरिस्वानसहितः परमाकुलः ॥ २० ॥
मन्ये व्यपाटयन् व्योम हरितो वा समन्ततः । उड्डीयमानैर्लोकस्य मनोभिः परमत्रपैः ॥ २१ ॥
अहो सदृशसंबंधो दृष्टोऽस्माभिरयं परः । गृहीतो यत्सुकन्याभ्यामेता पद्माभनंदनौ ॥ २२ ॥
गंभीरं भुवनं ख्यातमुदारं लवणं गता । मंदाकिनी यदेतं हि नापूर्णं कृतमेतया ॥ २३ ॥
जेतुं सर्वजगत्कान्ति चन्द्रभाग्या समुद्यता । अकरोत्साधु यद्योग्यं मदनांकुशमग्रहीत् ॥ २४ ॥
इति तत्र विनिश्चेरुः सज्जनानां गिरः पराः । सतां हि साधुसंबंधात् चित्तमानन्दमीयते ॥२५॥
विशल्यादिमहादेवीनंदनाश्चारुचेतसः । अष्टौ कुमारवीरास्ते प्रख्याता वासवो यथा ॥ २६ ॥
शनैरर्द्धतृतीयैर्वा भ्रातॄणां प्रीतिमानसैः । युक्तास्तारागणान्तस्था ग्रहा इव विरेजिरे ॥ २७ ॥
बलवंतः समुद्वृत्तास्तेऽन्ये लक्ष्मणनंदनाः । क्रोधादुत्पतितुं शक्ता वैदेहीनंदनौ यतः ॥ २८ ॥
ततोऽष्टाभिः सुकन्याभिः तद्भ्रातृबलमुद्धतम् । मंत्रैरिव शमं नीतं भुजंगमकुलं चलम् ॥ २९ ॥

प्रशान्ति भ्रातरो यातास्तद्भ्रातृभ्यां समं ननु । किमाभ्यां क्रियते कार्यं कन्याभ्यामधुना समम् ॥
स्वभावाद्वनिता जिह्वा विशेषादन्यचेतसः । ततः सुहृदयस्तासामर्थे को विकृतिं भजेत् ॥ ३१ ॥
अपि निर्जितदेवीभ्या मेतभ्यां नास्ति कारणम् । अस्माकं चेत्प्रियं कर्तुं विवर्त्तध्वमितो मनः ३२
एवमष्टकुमाराणांवचनैः प्रग्रहैरपि । तुरंगचंचलं वृन्दं भ्रातॄणां स्थापितं वशे ॥ ३३ ॥
वृतौ यत्तु सुकन्याभ्यां वैदेहीतनुसंभवौ । प्रदेशे तत्र संवृत्तस्तुमुलस्तूर्यनिस्वनः ॥ ३४ ॥
वंशाः सकाहलाः शंखा भंभाभेर्यः सझर्झराः । मनःश्रोत्रहरं नेदुर्व्याप्तदूरदिगंतराः ॥ ३५ ॥
स्वायंवरीं समालोक्य विभूतिं लक्ष्मणात्मजाः । शुश्रुवुर्वीक्ष्य देवेंद्रीमिव क्षुद्रर्धयः सुराः ॥ ३६ ॥
नारायणस्य पुत्राः स्मो द्युतिकान्तिपरिच्छदाः । नवयौवनसंपन्नाः सुसहाया बलोत्कटाः ॥३७॥
गुणेन केन हीनाः स्म यदेकमपि नो जनम् । परित्यज्य वृतावेतौ कन्याभ्यां जानकीसुतौ ॥३८॥
अथवा विस्मयः कोऽत्र किमपीदं जगद्गतम् । कर्मवैचित्र्ययोगेन विचित्रं यच्चराचरम् ॥ ३९ ॥
प्रागेव यदवाप्तव्यं येन यत्र यथा यतः । तत्परिप्राप्यतेऽवश्यं तेन तत्र तथा ततः ॥ ४० ॥
एवं लक्ष्मणपुत्राणां वृन्दे प्रारब्धशोचने । ऊचे रूपवतीपुत्रः प्रहस्य गतविस्मयः ॥ ४१ ॥
स्त्रीमात्रस्य कृते कस्मादेवं शोचत सन्नराः । चेष्टितादिति वो हास्यं परमं समजायत ॥ ४२ ॥

किमाभ्यां निर्वृते दूती लब्धा जैनेश्वरी द्युतिः । अबुधा इव यद्वयर्थं संशोचत पुनः पुनः ॥४३॥
रंभास्तंभसमानानां निःसाराणां हतात्मनाम् । कामानां वशगाः शोकं हास्यं नो कर्त्तुमर्हथ ॥४४॥
सर्वे शरीरिणः कर्मवशे वृत्तिमुपाश्रिताः । न तत्कुरुथ किं येन तत्कर्म परिणस्यति ॥ ४५ ॥
गहने भवकान्तारे प्रणष्टाः प्राणधारिणः । ईदृशि यानि दुःखानि निरस्यत ततस्तकम् ॥ ४६ ॥
भ्रातरः कर्मभूरेषा जनकस्य प्रसादतः । द्यौरिहावधृतास्माभिर्मोहवेष्टितबुद्धिभिः ॥ ४७ ॥
अंकस्थेन पितुर्बाल्ये वाच्यमानं पुरा मया । पुस्तके श्रुतमत्यन्तं सुस्वरं वस्तु सुंदरम् ॥ ४८ ॥
भवानां किल सर्वेषां दुर्लभो मानुषो भवः । प्राप्य तं स्वहितं यो न कुरुते स तु वंचितः ॥४९॥
ऐश्वर्यं पात्रदानेन तपसा लभते दिवम् । ज्ञानेन च शिवं जीवो दुःखदां गतिमंहसा ॥ ५० ॥
पुनर्जन्म ध्रुवं ज्ञात्वा तपः कुर्मो न चेद्वयम् । अवाप्स्याम ततो भूयो दुर्गतिर्दुःखसंकटा ॥५१॥
एवं कुमारवीरास्ते प्रतिबोधमुपागताः । संसारसागराऽसातावेदनाऽऽवर्तभीतिगाः ॥ ५२ ॥
त्वरितं पितरं गत्वा प्रणम्य विनयस्थिताः । प्राहुर्मधुरमत्यर्थं रचिताञ्जलिकुड्मलाः ॥ ५३ ॥
तात नः शृणु विज्ञातं न विघ्नं कर्त्तुमर्हसि । दीक्षामुपेतुमिच्छामो व्रज तत्राऽनुकूलताम् ॥ ५४ ॥
विद्युदाकालिकं ह्येतज्जगत्सारविवर्जितम् । विलोक्योदीयतेऽस्माकमत्यन्तं परमं लयम् ॥ ५५ ॥

कथंचिदधुना प्राप्ता बोधिरस्माभिरुत्तमा । यया नौभूतया पारं प्रयास्यामो भवोदधेः ॥ ५६ ॥
आशीविषफणान् भीमान् कामान् शंकासुकानलम् । हेतून् परमदुःखस्य वांछामो दूरमुज्झितुम् ५७
नास्य माता पिता भ्राता बांधवाः सुहृदोऽपि वा । सहायाः कर्मतंत्रस्य परित्राणं शरीरिणः ॥५८॥
तात विद्मस्तथाऽस्मासु वात्सल्यमुपमोज्झितम् । मातॄणां च परं ह्येतद्बंधनं भववासिनाम् ॥ ५९ ॥
किं तर्हि सुचिरं सौख्यं भवद्वात्सल्यसंभवम् । भुक्त्वाऽपि विरहोऽवश्यं प्राप्यः क्रकचदारुणः ६०
अतृप्त एव भोगेषु जीवो दुर्मित्रविभ्रमः । इमं विमोक्ष्यते देहं किं प्राप्तं जायते तदा ॥ ६१ ॥
ततो लक्ष्मीधरोऽवोचत्परमस्नेहविह्वलः । आघ्राय मस्तके पुत्रानभीक्ष्य च पुनः पुनः ॥ ६२ ॥
एते कैलासशिखरप्रतिमाहेमरत्नजाः । प्रासादाः कनकस्तंभसहस्रपरिशोभिताः ॥ ६३ ॥
नानाकुट्टिमभूभागाश्चारुनिर्व्यूहसंगताः । सुसेव्या विमलाः कान्ताः सर्वोपकरणान्विताः ॥६४॥
मलयाचलसद्गंधमारुताकृष्टषट्पदाः । स्नानादिविधिसंपत्तियोग्यनिर्मलभूमयः ॥ ६५ ॥
शरच्चन्द्रप्रभा गौराः सुरस्त्रीसमयोषितः । गुणैः समाहिताः सर्वे कल्पप्रासादसंनिभाः ॥ ६६ ॥
वीणावेणुमृदंगादिसंगीतकमनोहराः । जिनेन्द्रचरितासक्तकथात्यन्तपवित्रिताः ॥ ६७ ॥
उज्झित्वा सुखमेतेषु रमणीयेषु वत्सकाः । प्रतिपद्य कथं दीक्षां वत्स्यथान्तर्वनाचलम् ॥ ६८ ॥

संचक्ष्य स्नेहनिघ्नं मां शोकतप्तां च मातरम् । न युक्तं वत्सका गंतुं सेव्यतां तावदीशिता ॥ ६९ ॥
स्नेहावासनचित्तास्ते संविमृश्य क्षणं धिया । भवभीतहृषीकाऽऽप्यसौख्यैकान्तपराङ्मुखाः ॥७०॥
उदारवीरतादत्तमहावष्टंभशालिनः । ऊचुः कुमारवृषभास्तत्त्वविन्यस्तचेतसः ॥ ७१ ॥
मातरः पितरोऽन्ये च संसारेऽनंतशो गताः । स्नेहबंधनमेतद्धि चारकं नारकं गृहम् ॥ ७२ ॥
पापस्य परमारंभं नानादुःखाभिवर्द्धनम् । गृहपंजरकं मूढाः सेवन्ते न प्रबोधिनः ॥ ७३ ॥
शारीरं मानसं दुःखं मा भूद्भूयोऽपि नो यथा । तथा सुनिश्चिताः कुर्मः किं वयं स्वस्य वैरिणः ७४
निर्दोषोऽहं न मे पापमस्तीत्यपि विचिन्तयन् । मलिनत्वं गृही याति शुक्लांशुकमिव स्थितम् ७५
उत्थायोत्थाय यन्नॄणां गृहाश्रमनिवासिनाम् । पापे रतिस्ततस्त्यक्तो गृहिधर्मो महात्मभिः ७६
भुज्यतां तावदैश्वर्यमिति यत्प्रोक्तवानसि । तदंधकारकूपे नः क्षिपसि ज्ञानवानपि ॥ ७७ ॥
पिबंतं मृगकं यद्वद्व्याधो हंति तृषा जलम् । तथैव पुरुषं मृत्युर्हन्ति भोगैरतृप्तकम् ॥ ७८ ॥
विषयप्राप्तिसंसक्तमस्वतंत्रमिदं जगत् । कामैराशीविषैः साकं क्रीडत्यज्ञमनौषधम् ॥ ७९ ॥
विषयामिषसंसक्ता मग्ना गृहजलाशये । रुजा वडिशयोगेन नरमीना व्रजंत्यमुम् ॥ ८० ॥
अत एव नृलोकेशो जगत्त्रितयवंदितः । जगत्स्वकर्मणां वश्यं जगाद भगवानृषिः ॥ ८१ ॥

दुरंतैस्तदलं तात प्रियसंगमलोभनैः । विचक्षणजनद्विष्टैस्तडिद्दंडचलाचलैः ॥ ८२ ॥
ध्रुवं यदा समासाद्यो विरहो बंधुभिः समम् । असमंजसरूपेऽस्मिन्संसारे का रतिस्तदा ॥ ८३ ॥
अयं मे प्रिय इत्याऽऽस्थाव्यामोहोपनिबंधनः । एक एव यतो जंतुर्गत्यागमनदुःखभाक् ॥ ८४ ॥
वितथागमकुद्वीपे मोहसंगतपंकके । शोकसंतापफेनाढ्ये भवाऽऽवर्त्तव्रजाकुले ॥ ८५ ॥
व्याधिमृत्यूर्मिकल्लोले मोहपातालगह्वरे । क्रोधादिमकरक्रूरनक्रसंघातघट्टिते ॥ ८६ ॥
कुहेतुसमयोद्भूतनिर्ह्रादात्यंतभैरवे । मिथ्यात्वमारुतोद्धूते दुर्गतिक्षारवारिणि ॥ ८७ ॥
नितान्तदुःसहोदारवियोगवडवानले । सुचिरे तात खिन्नाः स्मो घोरे संसारसागरे ॥ ८८ ॥
नानायोनिषु संभ्रम्य कृच्छ्रात्प्राप्ता मनुष्यताम् । कुर्मस्तथा यथा भूयो मज्जामो नाऽत्र सागरे ८९
ततः परिजनाकीर्णावापृच्छ्य पितरौ क्रमात् । अष्टौ कुमारवीरास्ते निर्जग्मुर्गृहचारकात् ॥ ९० ॥
आसीन्निःक्रामतां तेषामीश्वरत्वे तथाविधे । बुद्धिर्जीर्णतृणे यद्वत्संसाराचारवेदिनाम् ॥ ९१ ॥
ते महेन्द्रोदयोद्यानं गत्वा संवेगकं ततः । महाबलमुनेःपार्श्वे जगृहुर्निरगारताम् ॥ ९२ ॥

सर्वारंभविरहिता विहरंति नित्यं निरंबरा विधियुक्तम् ।
क्षान्ता दान्ता मुक्ता निरपेक्षाः परमयोगिनो ध्यानरताः ॥ ९३ ॥

सम्यक्तपोभिः प्रविधूय पापमध्यात्मयोगैः परिरुध्य पुण्यम् ।
ते क्षीणनिःशेषभवप्रपंचा प्रापुः पदं जैनमनंतसौख्यम् ॥ ९४ ॥
एतत्कुमाराष्टकमंगलं यः पठेद्विनीतः शृणुयाच्च भक्त्या ।
तस्य क्षयं याति समस्तपापं रविप्रभस्योदयते च चन्द्रः ॥ ९५ ॥

इति श्रीपद्मपुराणे श्रीरविषेणाचार्यप्रणीते कुमाराष्टकनिष्क्रमणाभिधानं नाम दशोत्तरशतं पर्व ॥ ११० ॥

---

# अथैकादशोत्तरशतं पर्व ।

गणी वीरजिनेन्द्रस्य प्रथमः प्रथमः सताम् । अवेदयन्मनो यातं प्रभामंडलचेष्टितम् ॥ १ ॥
विद्याधरी महाकांतकामिनी वीरुदुद्भवे । सौख्यपुष्पासवे सक्तः प्रभामंडलषट्पदः ॥ २ ॥
अचिंतयद्दं दीक्षां यद्युपैम्यपत्रासससाम् । तदैतदंगनाप्रेमखंडं पत्रत्यसंशयम् ॥ ३ ॥
एतासां मत्समासक्तचेतसां विरहे मम । वियोगो भविताऽवश्यं प्राणैः सुखमपालितैः ॥ ४ ॥
दुस्त्यजानि दुरापानि कामसौख्यान्यवारितम् । भुक्त्वा श्रेयस्करं पश्चात्करिष्यामि ततः परम् ५

भोगैरुपार्जितं पापमत्यन्तमपि पुष्कलम् । सुध्यानवह्निनाऽवश्यं धक्ष्यामि क्षणमात्रतः ॥ ६ ॥
अत्र सेनां समावेश्य विमानक्रीडनं भजे । उद्वासयामि शत्रूणां नगराणि समंततः ॥ ७ ॥
मानशृंगोन्नतेभंगं करोमि रिपुखङ्गनाम् । स्थापयाम्युभयश्रेण्योर्वशे शासनकारिते ॥ ८ ॥
मेरोर्मरकतादीनां रत्नानां विमलेष्वलम् । शिलातलेषु रम्येषु क्रीडामि ललनान्वितः ॥ ९ ॥
एवमादीनि वस्तूनि ध्यायतस्तस्य जानकेः । समतीयुर्मुहूर्त्तानि संवत्सरशतान्यलम् ॥ १० ॥
कृतमेतत्करोमीदं करिष्यामीदमित्यसौ । चिंतयन्नात्मनोऽवेदी चायुः संहारमागतम् ॥ ११ ॥
अन्यदा सप्तकस्कंधप्रासादस्याधितिष्ठतः । अपप्तदशनिर्मूर्ध्नि तस्य कालं ततो गतः ॥ १२ ॥
अशेषतो निजं वेत्ति जन्मांतरविचेष्टितम् । दीर्घसूत्रस्तथाऽऽप्यात्मसमुद्धारे स नो स्थितः ॥१३॥
तृष्णाविषादहंतॄणां क्षणमप्यस्ति नो शमः । मूर्ध्नोपकंठदत्तांघ्रिर्मृत्युः कालमुदीक्षते ॥ १४ ॥
अस्य दग्धशरीरस्य कृते क्षणविनाशिनः । हताशः कुरुते किं न जीवो विषयवासकः ॥ १५ ॥
ज्ञात्वा जीवितमानाद्यं त्यक्त्वा सर्वपरिग्रहम् । स्वहिते वर्त्तते यो न स नश्यत्यकृतार्थकः ॥१६॥
सहस्रेणापि शास्त्राणां किं येनात्मा न शाम्यते । तृप्तमेकपदेनाऽपि येनाऽऽत्मा शममश्नुते ॥१७॥
कर्त्तुमिच्छति सद्धर्मं न करोति तमप्ययम् । दिवं यियासुर्विच्छिन्नपक्षः काक इव श्रमम् ॥ १८ ॥

विमुक्तो व्यवसायेन लभते चेत्समीहितम् । न लोके विरही कश्चिद्भवेदद्रविणोऽपि वा ॥ १९ ॥
अतिथिं द्वार्गतं साधुं गुरुवाक्यं प्रतिक्रियाम् । प्रतीक्ष्य सुकृतं चाशु नावसीदति मानवः ॥२०॥
नानाव्यापारशतैराकुलहृदयस्य दुःखिनः प्रतिदिवसम् ।
रत्नमिव करतलस्थं भ्रश्यत्यायुः प्रमादतः प्राणभृतः ॥ २१ ॥

इति श्रीपद्मपुराणे श्रीरविषेणाऽऽचार्यप्रोक्ते प्रभामंडलपरलोकाभिगमनं नामैकादशोत्तरशतं पर्व ।. १११ ॥

# अथ द्वादशोत्तरशतं पर्व ।

अथ याति शनैः कालः पद्मचक्रांकराजयोः । परस्परमहास्नेहबद्धयोस्त्रिविधः सुखम् ॥ १ ॥
परमैश्वर्यतासानोराजीववनवर्त्तिनौ । यथा नंदनदत्तौ तौ मोदेते नरकुंजरौ ॥ २ ॥
शुष्यन्ति सरितो यस्मिन् काले दावाग्निसंकुले । तिष्ठन्त्यभिमुखा भानोः श्रमणाः प्रतिमागताः ३
तत्र तावति रम्येषु जलयंत्रेषु पद्मसु । उद्यानेषु च निःशेषप्रियसाधनशालिषु ॥ ४ ॥
चन्दनार्दमहामोदशीतशीकरवर्षिभिः । चामरैरुपवीज्यंतौ तालवृन्तैश्च सत्तमैः ॥ ५ ॥

स्वच्छस्फटिकपद्मस्थौ चंदनद्रवचार्चितौ । जलार्द्रनलिनीपुष्पदलमूलौघसंस्तरौ ॥ ६ ॥
एलालवङ्गकर्पूरक्षोदःसंसर्गशीतलम् । विमलं सलिलं स्वादु सेवमानौ मनोहरम् ॥ ७ ॥
विचित्रसंकथादक्षवनिताजनसेवितौ । शीतकालमित्राऽऽनीतं बलाद्धारयतः शुचौ ॥ ८ ॥
योगिनः समये यत्र तरुमूलव्यवस्थिताः । क्षपयंत्यशुभं कर्म धारानिर्धूतमूर्त्तयः ॥ ९ ॥
विलसद्विद्युदुद्योते तत्र मेघांधकारिते । बृहद्घर्घरनीरौघे कूलमुद्गतसिंधुके ॥ १० ॥
मेरुशृंगसमाकारवर्त्तिनौ वरवाससौ । कुंकुमद्रवदिग्धांगावुपयुक्तामितागुरू ॥ ११ ॥
महाविलासिनीनेत्रभृंगौघकमलाकरौ । तिष्ठतः सुंदरीक्रीडौ यक्षेन्द्राविव तौ सुखम् ॥ १२ ॥
प्रालेयपटसंवीता धर्मध्यानस्थचेतसः । तिष्ठन्ति योगिनो यत्र निशि स्थंडिलपृष्ठगाः ॥ १३ ॥
तत्र काले महाचंडशीतवाताहतद्रुमे । पद्माकरसमुत्सादे दापितोष्णकरोद्गमे ॥ १४ ॥
प्रासादावनिकुक्षिस्थौ तिष्ठतस्तौ यथेप्सितम् । श्रीमद्युवतिवक्षोजक्रीडालंबनवक्षसौ ॥ १५ ॥
वीणामृदंगवंशादिसंभूतं मधुरस्वरम् । कुर्वाणौ मनसि स्वेच्छं परं श्रोत्ररसायनम् ॥ १६ ॥
वाणीनिर्जितवीणाभिरनुकूलाभिरादरात् । सेव्यमानौ वरस्त्रीभिरमरीभिरिवामरौ ॥ १७ ॥
नक्तं दिनं परिस्फीतभोगसंपत्समन्वितौ । सुखं तौ नयतः कालं सर्वपुण्यानुभावतः ॥ १८ ॥

एवं तौ तावदासेते पुरुषौ जगदुत्कटौ । अथ श्रीशैलवीरस्य वृत्तान्तं शृणु पार्थिव ॥ १९ ॥
सेवते परमैश्वर्यं नगरे कर्णकुंडले । पूर्वपुण्यानुभावेन स्वर्गीवानिलनंदनः ॥ २० ॥
विद्याधरसहस्रेण सहितः परमक्रियः । स्त्रीसहस्रपरीवारः स्वेच्छयाऽटति मेदिनीम् ॥ २१ ॥
वरं विमानमारूढाः परमर्द्धिसमन्वितः । सत्काननादिषु श्रीमाँस्तदा क्रीडति देववत् ॥ २२ ॥
अन्यदा जगदुन्मादहेतौ कुसुमहासिनि । वसन्तसमये प्रेमप्रियामोदनभस्वति ॥ २३ ॥
जिनेन्द्रभक्तिसंवीतमानसः पवनात्मजः । हृष्टः संप्रस्थितो मेरुमन्तःपुरसमन्वितः ॥ २४ ॥
नानाकुसुमरम्याणि सेवितानि त्रुवासिभिः । कुलपर्वतसानूनि प्रस्थितः सोऽवतिष्ठते ॥ २५ ॥
मत्तभृंगान्यपुष्टौघा नादयन्ति मनोहरैः । सरोभिर्दर्शनीयानि स वनानि च भूरिशः ॥ २६ ॥
मिथुनैरुपभोग्यानि पत्रपुष्पफलैस्तथा । काननानि विचित्राणि रत्नोद्योतितपर्वताः ॥ २७ ॥
सरितो विशदद्वीपा नितान्तविमलांभसः । वापीः प्रवरसोपानास्तटस्थोत्तुगपादपाः ॥ २८ ॥
नानाजलजकिंजल्ककिर्मीरसलिलानि च । सरांसि मधुरस्वानैः सेवितानि पतत्रिभिः ॥ २९ ॥
महातरंगसंगोत्थफेनमालाट्टहासिनीः । महायादोगणाकीर्णा बहुचित्रा महानदीः ॥ ३० ॥
विलसद्वनमालाभिर्युक्तान्युपवनैर्वरैः । मनोहरणदक्षाणि चित्राण्यायतनानि च ॥ ३१ ॥

जिनेन्द्रनरकूटानि नानारत्नमयानि च । कल्मषक्षोददक्षाणि युक्तमानान्यनेकशः ॥ ३२ ॥
एवमादीनि वस्तूनि वीक्षमाणः शनैः शनैः । सेव्यमानश्च कान्ताभिर्यात्यसौ परमोदयः ॥ ३३ ॥
नभःशिरःसमारूढो विमानशिखरस्थितः । दर्शयन्याति तद्वस्तु समुद्धृतनूरुहः ॥ ३४ ॥
पश्य पश्य प्रिये धामान्यतिरम्याणि मंदरे । स्नपनानि जिनेंद्राणाममूनि शिखरांतिके ॥ ३५ ॥
नानारत्नशरीराणि भास्करप्रतिमानि च । शिखराणि मनोज्ञानि तुंगानि विपुलानि च ॥ ३६ ॥
गुहा मनोहरद्वारा गंभीरा रत्नदीपिताः । परस्परसमाकीर्णा दीधितीरतिदूरगाः ॥ ३७ ॥
इदं महीतले रम्यं भद्रशालाह्वयं वनम् । मेखलायामिदं तच्च नंदनं प्रथितं भुवि ॥ ३८ ॥
इदं वक्षः प्रदेशस्य कल्पद्रुमलतांतकम् । नानारत्नशिलाशोभि वनं सौमनसं स्थितम् ॥ ३९ ॥
जिनागारं सहस्राढ्यं त्रिदशक्रीडनोचितम् । पांडुकाख्यं वनं भाति शिखरे सुमनोहरम् ॥ ४० ॥
अच्छिन्नोत्सवसंतानमहमिन्द्रजगत्समम् । यक्षकिंनरगंधर्वसंगीतपरिनादितम् ॥ ४१ ॥
सुरकन्यासमाकीर्णमप्सरोगणसंकुलम् । विचित्रगणसंपूर्णं दिव्यपुष्पसमन्वितम् ॥ ४२ ॥
सुमेरोः शिखरे रम्ये स्वभावसमवस्थिते । इदमालोक्यते जैनं भवनं परमाद्भुतम् ॥ ४३ ॥
ज्वलज्ज्वलनसंध्याक्तमेघवृन्दसमप्रभम् । जांबूनदमयं भानुकूटप्रतिममुन्नतम् ॥ ४४ ॥

अशेषोत्तमरत्नौघभूषितं परमाकृतिम् । मुक्तादामसहस्राढ्यं बुद्बुदादर्शशोभितम् ॥ ४५ ॥
किंकिणीपटलंबूषप्रकीर्णकविराजितम् । प्राकारतोरणोत्तुंगगोपुरैः परमैर्युतम् ॥ ४६ ॥
नानावर्णचलत्केतुकांचनस्तंभभासुरम् । गंभीरं चारुनिर्व्यूहमशक्याशेषवर्णनम् ॥ ४७ ॥
पंचाशद्योजनायामं षट्त्रिंशन्मानमुत्तमम् । इदं जिनगृहं कान्ते सुमेरोर्मुकुटायते ॥ ४८ ॥
इति शंसन्महादेव्यै समीपत्वमुपागतः । अवतीर्य विमानाग्राच्चक्रे हृष्टः प्रदक्षिणाम् ॥ ४९ ॥
तत्र सर्वातिशेषत्वं महैश्वर्यसमन्वितम् । नक्षत्रग्रहताराणां शशांकमिव मध्यगम् ॥ ५० ॥
केशर्यासनमूर्द्धस्थं स्फुरत्स्फारस्वतेजसम् । शुभ्राभ्रशिखरस्याग्रे शरदीव दिवाकरम् ॥ ५१ ॥
प्रतिबिंबं जिनेन्द्रस्य सर्वलक्षणसंगतम् । सान्तःपुरो नमश्चक्रे रचितांजलिमस्तकः ॥ ५२ ॥
जिनेन्द्रदर्शनोद्भूतमहासम्मदसंपदाम् । विद्याधरवरस्त्रीणां धृतिरासीदलं परा ॥ ५३ ॥
उत्पन्नघनरोमांचा विपुलाऽऽयतलोचनाः । भक्त्या परमया युक्ताः सर्वोपकरणान्विताः ॥ ५४ ॥
महाकुलप्रसूतास्ताः स्त्रियः परमचेष्टिताः । चक्रुः पूजां जिनेंद्राणां त्रिदशप्रमदा इव ॥ ५५ ॥
जांबूनदमयैः पद्मैः पद्मरागमयैस्तथा । चन्द्रकान्तमयैश्चापि स्वभावकुसुमैरिति ॥ ५६ ॥
सौरभाक्रान्तदिक्चक्रैर्गंधैश्च परमोज्ज्वलैः । पवित्रद्रव्यसंभूतैर्धूपैश्चाकुलकोटिभिः ॥ ५७ ॥

भक्तिकल्पितसांनिध्यै रत्नदीपैर्महाशिखैः । चित्रवल्ल्युपहारैश्च जिनानानर्च मारुतिः ॥ ५८ ॥
ततश्चंदनदिग्धांगः कुंकुमस्थासकाचितः । सूत्रपत्रोर्णसंवीतशेषो विगतकल्मषः ॥ ५९ ॥
वानरांकस्फुरज्ज्योतिश्चक्रमौलिर्महामनाः । प्रमोदपरमस्फीतनेत्रांशुनिचिताननः ॥ ६० ॥
ध्यात्वा जिनेश्वरं स्तुत्वा स्तोत्रैरघविनाशनैः । सुरासुरगुरोर्बिम्बं जिनस्य परमं मुहुः ॥ ६१ ॥
ततः सद्विभ्रमस्थाभिरप्सरोभिरभीक्षितः । विधाय वल्लकीमंके गेयामृतमुदाहरत् ॥ ६२ ॥
जिनचन्द्रार्चनन्यस्तविकासिनयना जनाः । नियमावहितात्मानः शिवं निदधते करे ॥ ६३ ॥
न तेषां दुर्लभं किंचित्कल्याणं शुद्धचेतसाम् । ये जिनेन्द्रार्चनासक्ता जना मंगलदर्शनाः ॥ ६४ ॥
श्रावकान्वयसंभूतिर्भक्तिर्जिनवरे दृढा । समाधिनाऽवसानं च पर्याप्तं जन्मनः फलम् ॥ ६५ ॥
उपवीण्येति सुचिरं भूयः स्तुत्वा समर्च्य च । विधाय वंदनां भक्तिमादधानो नवां नवाम् ॥६६॥
अप्रयच्छज्जिनेन्द्राणां पृष्ठं स्पष्टसुचेतसाम् । अनिच्छन्निव विश्रब्धो निर्ययावर्हदालयात् ॥६७॥
ततो विमानमारुह्य स्त्रीसहस्रसमन्वितः । मेरोः प्रदक्षिणं चक्रे ज्योतिर्देव इवोत्तमः ॥ ६८ ॥
शैलराज इव प्रीत्या श्रीशैलः सुंदरक्रियः । करोति स्म तदा मेरोरापृच्छामिव पश्चिमाम् ॥ ६९ ॥
प्रकीर्य वरपुष्पाणि सर्वेषु जिनवेश्मसु । जगाम मंथरं व्योम्नि भरतक्षेत्रसम्मुखः ॥ ७० ॥

ततः परमरागाक्ता संध्याऽऽश्लिष्य दिवाकरम् । अस्ताक्षितिभृदावासं भेजे खेदनिनीषया ॥ ७१ ॥
कृष्णपक्षे तदा रात्रिस्तारा बंधुभिरावृता । रहिता चन्द्रनाथेन नितान्तं न विराजते ॥ ७२ ॥
अवतीर्य ततस्तेन सुरदुंदुभिनामनि । शैलपादे परं रम्ये सैन्यमावासितं शनैः ॥ ७३ ॥
तत्र पद्मोत्पलामोदवाहिमंथरमारुताः । सुखं जिनकथाऽऽसक्ता यथास्वं सैनिकाः स्थिताः ॥७४॥
अथोपरि विमानस्य निषण्णः शिखरांतिके । प्राग्भारचंद्रशालायाः कैलासाधित्यकोपमे ॥७५॥
ज्योतिष्पथात्समुत्तुंगात्पतत्प्रस्फुरितप्रभम् । ज्योतिर्बिंबं मरुत्सूनुरालोकत तमोऽभवत् ॥ ७६ ॥
अचिंतयच्च हा कष्टं संसारे नास्ति तत्पदम् । यत्र न क्रीडति स्वेच्छं मृत्युः सुरगणेष्वपि ॥७७॥
तडिदुल्कातरंगातिभंगुरं जन्म सर्वतः । देवानामपि यत्र स्यात्प्राणिनां तत्र का कथा ॥ ७८ ॥
अनंतशो न भुक्तं यत्संसारे चेतनावता । न तदस्ति सुखं नाम दुःखं वा भुवनत्रये ॥ ७९ ॥
अहो मोहस्य माहात्म्यं परमेतद्बलान्वितम् । एतावन्तं यतः कालं दुःखपर्यटितं भवेत् ॥ ८० ॥
उत्सर्पिण्यवसर्पिण्यौ भ्रांत्वा कृच्छ्रात्सहस्रशः । अवाप्यते मनुष्यत्वं कष्टं नष्टमनाप्तवत् ॥ ८१ ॥
विनश्वरसुखासक्ताः सौहित्यपरिवर्जिताः । परिणामं प्रपद्यन्ते प्राणिनस्तापसंकटम् ॥ ८२ ॥
चलान्युत्पथवृत्तानि दुःखदानि पराणि च । इंद्रियाणि न शाम्यन्ति विना जिनपथाश्रयात् ॥८३॥

अनाप्यैनं यथा दीना बध्यन्ते मृगपक्षिणः । तथा विषयजालेन बध्यन्ते मोहिनो जनाः ॥८४॥
आशीविषसमानैर्यो रमते विषयैः समम् । परिणामे स मूढात्मा दह्यते दुःखवह्निना ॥ ८५ ॥
को ह्येकदिवसं राज्यं वर्षमन्विष्य यातनाम् । प्रार्थयेत विमूढात्मा तद्वद्विषयसौख्यभाक् ॥ ८६ ॥
कदाचिद्बुध्यमानोऽपि मोहतस्करवंचितः । न करोति जनः स्वार्थं किमतः कष्टमुत्तमम् ॥ ८७ ॥
भुक्त्वा त्रिविष्टपे धर्मं मनुष्यभवसंचितम् । पश्चान्मुषितवद्दीनो दुःखी भवति चेतनः ॥ ८८ ॥
भुक्त्वापि त्रिदशान् भोगान्सुकृते क्षयमागते। शेषकर्मसहायः सन् चेतनः क्वापि गच्छसि ॥८९॥
एतदेवं प्रतीक्षेण त्रिजगत्पतिनोदितम् । यथा जंतोर्निजं कर्म बांधवः शत्रुरेव वा ॥ ९० ॥
तदलं निंदितैरेभिर्भोगैः परमदारुणैः । विप्रयोगः सहामीभिरवश्यं येन जायते ॥ ९१ ॥
प्रियं जनमिमं त्यक्त्वा करोमि न तपो यदि । तदा सुभूमचक्रीव मरिष्याम्यवितृप्तकः ॥ ९२ ॥
श्रीमत्यो हरिणीनेत्रा योषिद्गुणसमन्विताः । अत्यन्तदुस्त्यजा मुग्धा मदाहितमनोरथाः ॥९३॥
कथमेतास्त्यजामीति संचिंत्य विमनाः क्षणम् । आश्राणयदुपालंभं हृदयस्य प्रबुद्धधीः ॥ ९४ ॥

दीर्घं कालं रंत्वा नाके गुणयुवतीभिः समनुभूतिभिः ।
मर्त्यक्षेत्रेऽप्यसमं भूयः प्रमदवरवनिताजनैः परिलालितः ॥ ९५ ॥

को वा यातस्तृप्तिं जंतुर्विविधविषयसुखरतिभिर्नदीभिरिवोदधिः ।
नानाजन्मभ्रान्त श्रान्त व्रज हृदय शममपि विमाकुलितं भवेत् ॥ ९६ ॥
किं न श्रुता नरकभीमविरोधरौद्रास्तीव्रासिपत्रवनसंकटदुर्गमार्गाः ।
रागोद्भवेन जनितं घनकर्मपंकं यन्नेच्छसि क्षपयितुं तपसा समस्तम् ॥ ९७ ॥
आसीन्निरर्थकतमो धिगतीतकालो दीर्घः सुखार्णवजले पतितस्य निंद्यः ।
आत्मानमद्य भवपंजरसंविरुद्धं मोक्ष्यामि लब्ध शुभमार्गमतिप्रकाशः ॥ ९८ ॥
इति कृतनिश्चयचेताः परिदृष्टयथार्थजीवलोकविवेकः ।
रविरिव गतघनसंगस्तेजस्वी गंतुमुद्यतोऽहं मार्गम् ॥ ९९ ॥

इति पद्मपुराणे श्रीरविषेणाचार्यप्रणीते हनुमन्निर्वेदं नाम द्वादशोत्तरशतं पर्व ॥११२॥

# अथ त्रयोदशोत्तरशतं पर्व ।

अथ रात्रावतीतायां तपनीयनिभो रविः । जगदुद्योतयामास दीप्त्या साधुर्यथा गिरा ॥ १ ॥
नक्षत्रगणमुत्सार्य बोधिता नलिनाकराः । रविणा जिननाथेन भव्यानां निचया इव ॥ २ ॥

आपृच्छत सखीं वातिर्महासंवेगसंगतः । निःस्पृहात्मा यथापूर्वं भरतोऽयं तपोवनम् ॥ ३ ॥
ततः कृपणलोभाक्षाः परमोद्वेगवाहिताः । नाथं विज्ञापयंति स्म सचिवाः प्रेमनिर्भराः ॥ ४ ॥
अनाथान् देव नो कर्त्तुमस्मानर्हसि सद्गुण । प्रभो प्रसीद भक्तेषु क्रियतामनुपालनम् ॥ ५ ॥
जगाद मारुतिर्यूयं परमप्यनुवर्त्तिनः । अनर्थबांधवा एव मम नो हितहेतवः ॥ ६ ॥
उत्तरन्तं भवांभोधिं तत्रैव प्रक्षिपंति ये । हितास्ते कथमुच्यंते वैरिणः परमार्थतः ॥ ७ ॥
माता पिता सुहृद्भ्राता न तदाऽगात्सहायताम् । यदा नरकवासेषु प्राप्तं दुःखमनुत्तमम् ॥ ८ ॥
मानुष्यं दुर्लभं प्राप्य बोधिं च जिनशासने । प्रमादो नोचितः कर्त्तुं निमेषमपि धीमतः ॥ ९ ॥
सम्प्रुष्यापि परं प्रीतैर्भवाद्भिः सह भोगवत् । अवश्यं भावुकस्तीव्रो विरहः कर्मनिर्मितः ॥ १० ॥
देवासुरमनुष्येन्द्रा स्वकर्मवशवर्त्तिनः । कालदावानलालीढाः के वा न प्रलयं गताः ॥ ११ ॥
पल्योपमसहस्राणि त्रिदिवेऽनेकशो मया । भुक्ता भोगा न वाऽतृप्यं वह्निः शुष्केंधनैरिव ॥१२॥
गताऽऽगमविधेर्दातृ मत्तोऽपि सुमहाबलं । अपरं नाम कर्माऽस्ति जाता तनुर्ममाऽक्षमा ॥ १३ ॥
देहिनो यत्र मुह्यन्ति दुर्गतं भवसंकटम् । विलंघ्य गंतुमिच्छामि पदं गर्भविवर्तिनम् ॥ १४ ॥
वज्रसारतनौ तस्मिन्नेवं कृतविचेष्टिते । अभूदंतःपुरस्त्रीणां महानाक्रंदितध्वनिः ॥ १५ ॥

समाश्वास्य विषादार्त्तं प्रमदाजनमाकुलम् । वचोभिर्बोधने शक्तैर्नानावृत्तांतशंसिभिः ॥ १६ ॥
तनयाँश्च समाधाय राजधर्मे यथाक्रमम् । सर्वान्नियोगकुशलः शुभावस्थितमानसः ॥ १७ ॥
सुहृदां चक्रवालेन महता परितो वृतः । विमानभवनाद्राजा निर्ययौ वायुनंदनः ॥ १८ ॥
नरयानं समारुह्य रत्नकांचनभासुरम् । बुद्बुदादर्शलंबूषचित्रचामरसुन्दरम् ॥ १९ ॥
द्युपुंडरीकसंकाशं बहुभक्तिविराजितम् । चैत्योद्यानं यतः श्रीमान्प्रस्थितः परमोदयः ॥ २० ॥
विलसत्केतुमालाढ्यं तस्य यानमुदीक्ष्य तत् । ययौ हर्षविषादं च जनः सक्ताश्रलोचनः ॥ २१ ॥
तत्र चैत्यमहोद्याने विचित्रद्रुममंडिते । सारिकाचंचरीकान्यपुष्टकोलाहलाकुले ॥ २२ ॥
नानाकुसुमकिंजल्कसुगंधिसततायने । संयतो धर्मरत्नाख्यस्तदा तिष्ठति कीर्त्तिमान् ॥ २३ ॥
धर्मरत्नमहाराशिमत्यन्तोत्तमयोगिनम् । यथा बाहुबली पूर्वं भावप्लाविनमानसः ॥ २४ ॥
नरयानात्समुत्तीर्य हनूमानाससाद तम् । भगवन्तं नभोयानं चारणार्षिगणावृतम् ॥ २५ ॥
प्रणम्य भक्तिसंपन्नः कृत्वा गुरुमहं परम् । जगाद शिरसि न्यस्य करराजीवकुड्मलम् ॥ २६ ॥
उपेत्य भवतो दीक्षां निर्मुक्तांगो महामुने । अहं विहर्त्तुमिच्छामि प्रसादः क्रियतामिति ॥ २७ ॥
यतिराहोत्तमं युक्तमेवमस्तु सुमानसः । जगन्निःसारमालोक्य क्रियतां स्वहितं परम् ॥ २८ ॥

अशाश्वतेन देहेन विहर्तुं शाश्वतं परम् । परमं तव कल्याणी मतिरेषा समुद्गता ॥ २९ ॥
इत्यनुज्ञां मुनेः प्राप्य संवेगरभसान्वितः । कृतप्रणमनस्तुष्टः पर्यङ्कासनमाश्रितः ॥ ३० ॥
मुकुटं कुंडले हारमवशिष्टं विभूषणम् । समुत्ससर्ज वस्त्रं च मानसं च परिग्रहम् ॥ ३१ ॥
दयितानिगडं भित्त्वा दग्ध्वा जालं ममत्वजम् । छित्त्वा स्नेहमयं पाशं त्यक्त्वा सौख्यं विषोपमम् ॥
वैराग्यदीपशिखया मोहध्वान्तं निरस्य च । कमप्यपकरं दृष्ट्वा शरीरमतिभंगुरम् ॥ ३३ ॥
स्वयं सुसुकुमाराभिर्जितपद्माभिरुत्तमम् । उत्तमांगरुहो नीत्वा करशाखाभिरुत्तमः ॥ ३४ ॥
निःशेषसंगनिर्मुक्तो मुक्तिलक्ष्मीं समाश्रितः । महाव्रतधरः श्रीमाञ्छ्रीशैलः शुशुभेतराम् ॥ ३५ ॥
निर्वेदप्रभुरागाभ्यां प्रेरितानि महात्मनाम् । शतानि सप्त साग्राणि पंचाशद्भिः सुचेतसाम् ॥३६॥
विद्याधरनरेन्द्राणां महासंवेगवर्त्तिनाम् । स्वपुत्रेषु पदं दत्त्वा प्रतिपन्नानि योगिताम् ॥ ३७ ॥
विद्युद्गत्यादिनामानः परमप्रीतमानसाः । मुक्तसर्वकलंकास्ते श्रिताः श्रीशैलविभ्रमम् ॥ ३८ ॥
कृत्वा परमकारुण्यं विप्रलापं महाशुचम् । वियोगानलसंतप्ताः परं निर्वेदमागताः ॥ ३९ ॥
प्रथितां बंधुमत्याख्यामुपगम्य महत्तराम् । प्रयुज्य विनयं भक्त्या विधाय महमुत्तमम् ॥ ४० ॥
श्रीमत्यो भवतो भीता धीमत्यो नृपयोषितः । महद्भूषणनिर्मुक्ताः शीलभूषाः प्रवव्रजुः ॥४१॥

बभूव विभवस्तासां तदा जीर्णतृणोपमः । महामहाजनः प्रायो रतिवद्विरतो भृशम् ॥ ४२ ॥
व्रतगुप्तिसमित्युच्चैः शैलः श्रीशैलपुंगवः । महातपोधनो धीमान गुणशीलविभूषणः ॥ ४३ ॥
धरणीधरैः प्रहृष्टैरुपगीतो वंदितोऽप्सरोभिश्च । अमलं समयविधानं सर्वज्ञोक्तं समाचर्य ॥ ४४ ॥
निर्दग्धमोहानिचयो जैनेंद्रं प्राप्य पुष्कलं ज्ञानविधिम् ।
निर्वाणगिरावसिधच्छ्रीशैलः श्रमणसत्तमः पुरुषरविः ॥ ४५ ॥

इति श्रीपद्मचरिते श्रीरविषणाचार्यप्रोक्ते हनुमन्निर्वाणाभिधानं नाम त्रयोदशोत्तरशतं पर्व॥ १०७ ॥

---

# अथ चतुर्दशोत्तरशतं पर्व ।

प्रव्रज्यामष्टवीराणां ज्ञात्वा वायुसुतस्य च । रामो जहास किं भोगो भुक्तस्तै कातरैरिति ॥ १ ॥
सन्तं संत्यज्य ये भोगं प्रव्रजन्त्यायतेक्षणाः । नूनं ग्रहगृहीतास्ते वायुना वा वशीकृताः ॥ २ ॥
नूनं तेषां न विद्यन्ते कुशला वैद्यवातिकाः । यतो मनोहरान् कामान्परित्यज्य व्यवस्थिताः ॥३॥

एवं भोगमहत्संगसौख्यसागरसेविनः । आसीत्तस्य जडा बुद्धिः कर्मणा वशमीयुषः ॥ ४ ॥
भुज्यमानाऽल्पसौख्येन संसारपदमीयुषः प्रायो विस्मयते सौख्यं श्रुतमप्यतिसंस्तुतिः ॥ ५ ॥
एवं तयोर्महाभोगमग्नयोः प्रेमबद्धयोः । पद्मवैकुंठयोः कालो धर्मकुंठो विवर्त्तते ॥ ६ ॥
अथान्यदा समायातः सौधर्मेन्द्रो महाद्युतिः । ऋद्धया परमया युक्तो धैर्यगांभीर्यसंस्थितः ॥७॥
सेवितः सचिवैः सर्वैर्नानालंकारधारिभिः । कार्त्तस्वरमहाशैल इव गंडमहीधरैः ॥ ८ ॥
सुखं तेजः परिच्छन्ने निषण्णः सिंहविष्टरे । सुमेरुशिखरस्थस्य चैत्यस्य श्रियमुद्वहन् ॥ ९ ॥
चंद्रादित्योत्तमोद्योतरत्नालंकृतविग्रहः । मनोहरेण रूपेण जुष्टो नेत्रसमुत्सवः ॥ १० ॥
बिभ्राणो विमलं हारं तरंगितमहाप्रभः । प्रवाहमिव सेतोदं श्रीमान्निषधभूधरः ॥ ११ ॥
हारकुंडलकेयूरप्रभृत्युत्तमभूषणैः । समंतादावृतो देवैर्नक्षत्रैरिव चन्द्रमाः ॥ १२ ॥
चन्द्रनक्षत्रसादृश्यं चारु मानुषगोचरम् । उक्तं यतोऽन्यथाकल्पं ज्योतिषामन्तरं महत् ॥ १३ ॥
महाप्रभावसंपन्नो दिशो दश निजौजसा । भासयन्परमामोदात्तरुजैनेश्वरो यथा ॥ १४ ॥
अशक्यवर्णनो भूरि संवत्सरशतैरपि । अप्यशेषैर्जनैर्जिह्वासहस्रैरपि सर्वदा ॥ १५ ॥
लोकपालप्रधानानां सुराणां चारुचेतसाम् । यथाऽऽसनं निषण्णानां पुराणमिदमभ्यधात् ॥१६॥

येनैषोऽत्यन्तदुःसाध्यः संसारः परमासुरः। निहतो ज्ञानचक्रेण महारिः सुखसूदनः ॥ १७ ॥
अर्हन्तं तं परं भक्त्या भावपुष्पैरनंतरम्। नाथमर्चयताऽशेषदोषकक्षविभावसुम् ॥ १८ ॥
कषायोग्रतरंगाढ्यात्कामग्राहसमाकुलात्। यः संसारार्णवाद्भव्यान्समुत्तारयितुं क्षमः ॥ १९ ॥
यस्य प्रजातमात्रस्य मंदरे त्रिदशेश्वराः। अभिषेकं निषेवन्ते परं क्षीरोदवारिणा ॥ २० ॥
अर्चयन्ति च भक्त्याढ्यास्तदेकाग्रानुवर्त्तिनः। पुरुषार्थाऽऽहितस्वान्ताः परिवर्गसमन्विताः॥२१॥
वंध्यकैलाशवक्षोजां पारावारोर्मिमेखलाम्। यावत्तस्थौ महीं त्यक्त्वा गृहीत्वा सिद्धियोषिताम् २२
महामोहतमश्छन्नं धर्महीनमपार्थिवम्। येनेदमेत्य नाकाग्रादालोकं प्रापितं जगत् ॥ २३ ॥
अत्यन्ताद्भुतवीर्येण येनाष्टौ कर्मशत्रवः। क्षपिताः क्षणमात्रेण हरिणेवेह दंतिनः ॥ २४ ॥
जिनेन्द्रो भगवानर्हन् स्वयंभूः शंभुरूर्जितः। स्वयंप्रभो महादेवः स्थाणुः कालंजरः शिवः ॥२५॥
महाहिरण्यगर्भश्च देवदेवो महेश्वरः। सद्धर्मचक्रवर्त्ती च विभुस्तीर्थकरः कृती ॥ २६ ॥
संसारसूदनः सूरिर्ज्ञानचक्षुर्भवांतकः। एवमादिर्यथार्थाख्यो गीयते यो मनीषिभिः ॥ २७ ॥
निगूढः प्रकटः स्वार्थैरभिधानैः सुनिर्मलैः। स्तूयते स मनुष्येन्द्रैः सुरेन्द्रैश्च सुभक्तिभिः ॥२८॥
प्रसादाद्यस्य नाथस्य कर्ममुक्ताः शरीरिणः। त्रैलोक्याग्रेऽवतिष्ठन्ते यथावत्प्रकृतिस्थिताः ॥२९॥

इत्यादि यस्य माहात्म्यं स्मृतमाप्यघनाशनम् । पुराणं परमं दिव्यं सम्मदोद्भवकारणम् ॥ ३० ॥
महाकल्याणमूलस्य स्वार्थकांक्षणतत्पराः । तस्य देवाधिदेवस्य भक्ता भवत संततम् ॥ ३१ ॥
अनादिनिधनो जंतुः प्रेर्यमाणः स्वकर्मभिः । दुर्लभं प्राप्य मानुष्यं धिक्कश्चिदपि मुह्यति ॥३२॥
चतुर्गतिमहावर्त्ते महासंसारमंडले । पुनर्बोधिः कुतस्तेषां ये द्विपन्त्यर्हदक्षरम् ॥ ३३ ॥
कृच्छ्रान्मानुषमासाद्य यः स्याद्बोधिविवर्जितः । पुनर्भ्राम्यत्यपुण्यात्मा सः स्वयंरथचक्रवत् ॥३४॥
अहो धिङ्मानुषे लोके गतानुगतिकैर्जनैः । जिनेन्द्रो नादृतः कैश्चित्संसारारिनिषूदनः ॥ ३५ ॥
मिथ्यातपः समाचर्य भूत्वा देवो बलर्द्धिकः । च्युत्वा मनुष्यतां प्राप्य कष्टं द्रुह्यति जीवकः ॥३६॥
कुधर्माशयसक्तोऽसौ महामोहवशीकृतः । न जिनेन्द्रं महेन्द्राणामपीन्द्रं प्रतिपद्यन्ते ॥ ३७ ॥
विषयामिषलुब्धात्मा जन्तुर्मनुजतां गतः । मुह्यते मोहनीयेन कर्मणा कष्टमुत्तमम् ॥ ३८ ॥
अपि दुर्दृष्टयोगाद्यैः स्वर्गं प्राप्य कुतापसः । स्वहीनतां परिज्ञाय दह्यते चिंतयाऽऽतुरः ॥ ३९ ॥
रत्नद्वीपोपमे रम्ये तदा धिङ्मंदबुद्धिना । मयार्हच्छासने किं नु श्रेयो न कृतमात्मनः ॥ ४० ॥
हा धिक्कुशास्त्रनिर्वहस्तैश्च वाक्पटुभिः खलैः । पापैर्मानिभिरुन्मार्गे पातितः पतितैः कथम् ॥४१॥
एवं मानुष्यमासाद्य जैनेन्द्रमतमुत्तमम् । दुर्विज्ञेयमधन्यानां जन्तूनां दुःखभागिनाम् ॥ ४२ ॥

महर्धिकस्य देवस्य च्युतस्य स्वर्गतो भवेत् । आर्हती दुर्लभा बोधिर्देहिनोऽन्यस्य किं पुनः ४३
धन्यः सोऽनुगृहीतश्च मानुषत्वे भवोत्तमे । यः करोत्यात्मानः श्रेयो बोधिमासाद्य नैष्ठिकीम् ४४
तत्रैवात्मगतं प्राह सुरश्रेष्ठो विभावसुः । कदा नु खलु मानुष्यं प्राप्स्यामि स्थितिसंक्षये ॥ ४५ ॥
विषयारिं परित्यज्य स्थापयित्वा वशे मनः । नीत्वा कर्म प्रयास्यामि तपसा गतिमार्हतीम् ॥४६॥
तत्रैको विबुधः प्राह स्वर्गस्थस्येदृशी मतिः । अस्माकमपि सर्वेषां नृत्वं प्राप्य विमुह्यति ॥ ४७ ॥
यदि प्रत्ययसे नैतत् ब्रह्मलोकात्परिच्युतम् । मानुष्यैश्वर्यसंयुक्तं पद्माभं किं न पश्यसि ॥ ४८ ॥
अत्रोवाच महातेजाः शचीपतिरसौ स्वयम् । सर्वेषां बंधनानां तु स्नेहबंधो महादृढः ॥ ४९ ॥
हस्तपादांगबद्धस्य मोक्षः स्यादसुधारिणः । स्नेहबंधनबद्धस्य कुतो मुक्तिर्विधीयते ॥ ५० ॥
योजनानां सहस्राणि निगडैः पूरितो व्रजेत् । शक्तो नांगुलमप्येकं बद्धः स्नेहेन मानवः ॥५१॥
अस्य लांगलिनो नित्यमनुरक्तो गदायुधः । अतृप्तो दर्शने कृत्यं जीवितेनाऽपि वांछति ॥ ५२ ॥
निमेषमपि नो यस्य विकलं हलिनो मनः । स तं लक्ष्मीधरं त्यक्तुं शक्नोति सुकृतं कथम् ॥५३॥

कर्मणामिदमीदृशमीहितं बुद्धिमानपि यदेति विमूढताम् ।
अन्यथा श्रुतसर्वनिजायतिः कः करोति न हितं सचेतनः ॥ ५४ ॥

एवमेतदहो त्रिदशाः स्थितं देहिनामपरमत्र किमुच्यताम् ।
कृत्यमत्र भवारिविनाशनं यत्नमेत्य परमं सुचेतसा ॥ ५५ ॥
इति सुरपतिमार्गं तत्त्वमार्गानुरक्तं जिनवरगुणसंगात्यन्तपूतं मनोज्ञम् ।
रविशशिमरुदाद्याः प्राप्य चेतोविशुद्धा भवभयमभिजग्मुर्मानवत्वाभिकांक्षाः ॥५६॥

इति श्रीपद्मचरिते रविषेणाचार्यप्रणीते शक्रसुरसंकथाभिधानं नाम चतुर्दशोत्तरशतं पर्व ॥ ११४ ॥

---

# अथ पंचदशोत्तरशतं पर्व ।

अथाऽऽसनं विमुंचन्तं शक्रं नत्वा सुरासुराः । यथायथं ययुश्चित्रं वहन्तो भावमुत्कटम् ॥ १ ॥
कुतूहलतया द्वौ तु विबुधौ कृतनिश्चयौ । पद्मनारायणस्नेहमीहमानौ परीक्षितुम् ॥ २ ॥
क्रीडैकरसिकात्मानावन्योन्यप्रेमसंगतौ । पश्यावः प्रीतिमनयोरित्यागातां प्रधारणाम् ॥ ३ ॥
दिवसं विश्वसत्येकमप्यस्यादर्शनं न यः । मरणे पूर्वजस्यासौ हरिः किन्नु विचेष्टते ॥ ४ ॥
शोकविह्वलितस्यास्य वीक्षमाणौ विचेष्टितम् । परिहासं क्षणं कुर्वो गच्छावः कोशलां पुरीम् ॥५॥

शोकाकुलं मुखं विष्णोर्जायते कीदृशं तु तत् । कस्मै कुप्यति याति क्व करोति किमु भाषणम् ॥६॥
कृत्वा प्रधारणामेतां रत्नचूलो दुरीहितः । नामतो मृगचूलश्च विनीतां नगरीं गतौ ॥ ७ ॥
तत्रत्यं कुरुतां पद्मभवने क्रंदितध्वनिम् । समस्तान्तःपुरस्त्रीणां दिव्यमायासमुद्भवम् ॥ ८ ॥
प्रतीहारसुहृन्मंत्रिपुरोहितपुरोगमाः । अधोमुखा ययुर्विष्णुं जगुश्च बलपंचताम् ॥ ९ ॥
मृतो राघव इत्येतद्वाक्यं श्रुत्वा गदायुधः । मंदप्रभंजनाधूतनीलोत्पलनिभेक्षणः ॥ १० ॥
हा किन्त्विदं समुद्भूतमित्यर्द्धकृतजल्पनः । मनोवितानतां प्राप्तः सहसाऽश्रूनमुंचत ॥ ११ ॥
ताडितोऽशनिनेवाऽसौ कांचनस्तंभसंश्रितः । सिंहासनगतः पुस्तकर्मन्यस्त इव स्थितः ॥ १२ ॥
अनिमीलितनेत्रोऽसौ तथाऽवस्थितविग्रहः । दधार जीवतो रूपं क्वापि प्रहितचेतसः ॥ १३ ॥
वीक्ष्य निर्गतजीवं तं भ्रातृमृत्यवनलाहतम् । त्रिदशौ व्याकुलीभूतौ जीवितुं दातुमक्षमौ ॥ १४ ॥
नूनमस्येदृशो मृत्युर्विधिनेति कृताशयौ । विषादविस्मयाऽऽपूर्णौ सौधर्ममरुची गतौ ॥ १५ ॥
पश्चात्तापाऽनलज्वालाकर्मापालीढमानसौ । न तत्र तौ धृतिं जातौ संप्राप्तौ निंदितात्मकौ ॥१६॥
अप्रेक्ष्यकारिणां पापमानसानां हतात्मनाम् । अनुष्ठितं स्वयं कर्म जायते तापकारणम् ॥ १७ ॥
दिव्यमायाकृतं कर्म तदा ज्ञात्वा तथाविधम् । प्रसादयितुमुद्युक्ताः सौमित्रिं प्रवराः स्त्रियः ॥१८॥

कयाऽकृतज्ञया नाथ मूढयाऽस्यपमानितः । सौभाग्यगर्ववाहिन्या परमं दुर्विदग्धया ॥ १९ ॥
प्रसीद मुच्यतां कोपो देव दुःखासिकापि वा । ननु यत्र जने कोपः क्रियतां तत्र यन्मनः ॥२०॥
इत्युक्त्वा काश्चिदालिंग्य परमप्रेमभूमिकाः । निपेतुः पादयोर्नानाचाटुजल्पिततत्पराः ॥ २१ ॥
काश्चिद्वीणां विधायांके तद्गुणग्रामसंगतम् । जगुर्मधुरमत्यन्तं प्रसादनकृताशयाः ॥ २२ ॥
काश्चिदाननमालोक्य कृतप्रियशतोद्यताः । समाभाषयितुं यत्नं सर्वसंदोहतोऽभवत् (?) ॥ २३ ॥
स्तनोपपीडमाश्लिष्य काश्चिद्विमलविभ्रमाः । कान्तस्य कान्तमाजिघ्रन् गंडं कुंडलमंडितम् ॥ २४ ॥
ईषत्पादं समुद्धृत्य काश्चिन्मधुरभाषिताः । चक्रुः शिरसि संफुल्लकमलोदरसन्निभम् ॥ २५ ॥
काश्चिदर्भकसारंगीलोचनाः कर्त्तुमुद्यताः । सोन्मादविभ्रमक्षिप्तकटाक्षोत्पलशेखरम् ॥ २६ ॥
जंभज्जृंभायताः काश्चित्तदाननकृतेक्षणाः । मंदं बभंजुरंगानि स्वनंत्यखिलसंधिषु ॥ २७ ॥
एवं विचेष्टमानानां तासामुत्तमयोषिताम् । यत्नोऽनर्थकतः प्राप तत्र चैतन्यवर्जिते ॥ २८ ॥
तानि सप्तदश स्त्रीणां सहस्राणि हरेर्वधुः । मंदमारुतनिर्धूतचित्रांबुजवनाश्रियाम् ॥ २९ ॥
तस्मिन्तथाविधे नाथे स्थिते कृच्छ्रसमागताः । व्याकुले मनसि स्त्रीणां निदधे संशयः पदम् ३०
सुदुश्चित्तं च दुर्भाष्यं भावं दुःश्रममेव च । कृत्वा मनसि मुग्धाक्ष्यः पस्पृशुर्मोहसंगताः ॥ ३१ ॥

सुरेन्द्रवनिताचक्रसमचेष्टिततेजसाम् । तदा शोकाभितप्तानां नैतासां चारुताऽभवत् ॥ ३२ ॥
श्रुत्वाऽन्तश्चरवक्त्रेभ्यस्तं वृत्तान्तं तथाविधम् । स संभ्रमं परिप्राप्तः पद्माभः सचिवैर्वृतः ॥ ३३ ॥
अन्तःपुरं प्रविष्टश्च परमाप्तजनावृतः । ससंभ्रमैर्जनैर्दृष्टो विक्षिप्तविरलक्रमः ॥ ३४ ॥
ततोऽपश्यदतिक्रान्तकान्तद्युतिसमुद्भवम् । वदनं धरणीन्द्रस्य प्रभातशशिपांडुरम् ॥ ३५ ॥
न सुश्लिष्टमिवात्यन्तं परिभ्रष्टं स्वभावतः । तत्कालतरुमूलांबुरुहसाम्यमुपागतम् ॥ ३६ ॥
अचिंतयच्च किं नाम कारणं येन मे स्वयम् । आस्ते रुष्टो विषादी च किंचिद्विनतमस्तकः ॥३७॥
उपसृत्य च सस्नेहं मुहुराघ्राय मूर्द्धनि । हिमाऽऽहतनगाकारं पद्मस्तं परिषस्वजे ॥ ३८ ॥
चिह्नानि जीवमुक्तस्य पश्यन्नपि समंततः । अमृतं लक्ष्मणं मेने काकुत्स्थः स्नेहनिर्भरः ॥ ३९ ॥
नतांगयष्टिरावक्रग्रीवादोः परिघौ श्लथौ । प्राणानाकुंचनोन्मेषप्रभृतीहोज्झिता तनुः ॥ ४० ॥
ईदृशं लक्ष्मणं वीक्ष्य विमुक्तं स्वशरीरिणा । उद्वेगोरुभयाक्रान्तः प्रसिष्वेदापराजितः ॥ ४१ ॥
अथाऽसौ दीनदीनास्यो मूर्च्छमानो मुहुर्मुहुः । बाष्पाकुलेक्षणोऽपश्यदस्यांगानि समंततः ॥४२॥
न क्षतं नखरेखाया अपि तुल्यमिहेष्यते । अवस्था कीदृशी केन भवेदयमुपागतः ॥ ४३ ॥
इति ध्यायन् समुद्भूतवेपथुस्तद्विदं जनम् । आह्वाययद्विषण्णात्मा तूर्णं विद्वानपि स्वयम् ॥ ४४ ॥

यदा वैद्यगणैः सर्वैर्मंत्रौषधिविशारदैः । प्रतिशिष्टः कलापारैः परीक्ष्य धरणीधरः ॥ ४५ ॥
तदाहताशतां प्राप्तो रामो मूर्च्छां समागतः । पर्याप्तो वसुधापृष्ठे छिन्नमूलस्तरुर्यथा ॥ ४६ ॥
हारैश्चंदननीरैश्च तालवृंतानिलैर्निभैः । कृच्छ्रेण त्याजितो मोहं विललापि सुविह्वलः ॥ ४७ ॥
समं शोकविषादाभ्यामसौ पीडनमाश्रितः । उत्ससर्ज यदश्रूणां प्रवाहं विहिताननम् ॥ ४८ ॥
वाष्पेण विहितं वक्त्रं रामदेवस्य लक्षितम् । विरलांभोदसंवीतचन्द्रमंडलसंनिभम् ॥ ४९ ॥
अत्यन्तविक्लवीभूतं तमालोक्य तथाविधम् । वितानतां परिप्रापदन्तःपुरमहार्णवः ॥ ५० ॥
दुःखसागरनिर्मग्नाः शुष्यदंगा वरस्त्रियः । भृशं व्यानशिरे वाष्पाऽऽक्रंदाभ्यां रोदसी समम् ॥५१॥
हा नाथ भुवनानंद सर्वसुंदरजीवित । प्रयच्छ दयितां वाचं क्वासि यातः किमर्थकम् ॥ ५२ ॥
अपराधादृते कस्मादस्मानेवं विमुंचसि । नन्वाऽऽगः सत्यमप्यास्ते जने तिष्ठसि नो चिरम् ॥५३॥
एतस्मिन्नंतरे श्रुत्वा तद्वस्तु लवणांकुशौ । विषादं परमं प्राप्ताविति चिन्तामुपागतौ ॥ ५४ ॥
धिगसारं मनुष्यत्वं नाऽतोऽस्त्यन्यन्महाधमम् । मृत्युर्यच्छत्यवस्कन्दं यदज्ञातो निमेषतः ॥५५॥
यो न निर्व्यूहितुं शक्यः सुरविद्याधरैरपि । नारायणोऽप्यसौ नीतः कालपाशेन पश्यताम् ॥५६॥
आनाय्येण शरीरेण किमनेन धनेन च । अवधार्येति संबोधं वैदेहीजावुपेयतुः ॥ ५७ ॥

पुनर्गर्भाशयाद्भीतौ नत्वा तातक्रमद्वयम् । महेन्द्रोदयमुद्यानं शिविकाऽवस्थितौ गतौ ॥ ५८ ॥
तत्रामृतस्वराभिख्यं शरणीकृत्य संयतम् । बभूवतुर्महाभागौ श्रमणौ लवणांकुशौ ॥ ५९ ॥
गृह्णतोरनयोर्दीक्षां तदा सत्तमचेतसोः । पृथिव्यामभवद्बुद्धिर्मृत्तिकागोलकाहिता ॥ ६० ॥
एकतः पुत्रविरहो भ्रातृमृत्युवशमन्यतः । इति शोकमहावर्त्ते परावर्त्तत राघवः ॥ ६१ ॥
राज्यतः पुत्रतश्चापि स्वभूताज्जीवितादपि । तथाऽपि दयितातोऽस्य परं लक्ष्मीधरः प्रियः ॥६२॥

कर्मनियोगेनैवं प्राप्तेऽवस्थामशोभनामाप्तजने ।
स ( निः ) शोकं वैराग्यं प्रतिपद्यन्ते विचित्रचित्ताः पुरुषाः ॥ ६३ ॥
कालं प्राप्य जनानां किंचिच्च निमित्तमात्रकं परभावम् ।
संबोधरविरुदेति स्वकृतविपाकेऽन्तरङ्गहेतौ जाते ॥ ६४ ॥

इति श्रीपद्मपुराणे श्रीरविषेणाचार्यप्रोक्ते लवणांकुशतपोऽभिधानं नाम पंचदशोत्तरशतं पर्व ॥ ११५ ॥

# अथ षोडशोत्तरशतं पर्व ।

कालधर्मे परिप्राप्ते राजन् लक्ष्मणपुंगवे । त्यक्तं युगप्रधानेन रामेण व्याकुलं जगत् ॥ १ ॥
स्वरूपं मृदु सद्गंधं स्वभावेन हरेर्वपुः । जीवेनाऽपि परित्यक्तं न पद्माभस्तदाऽत्यजत् ॥ २ ॥
आलिंगति निधायांके मार्ष्टि जिघ्रति निक्षति । निषीदति समाधाय सस्पृहं भुजपंजरे ॥ ३ ॥
अवाप्नोति न विश्वासं क्षणमप्यस्य मोचने । बालोऽमृतफलं यद्वत्स तं मेने महाप्रियम् ॥ ४ ॥
विललाप च हा भ्रातः किमिदं युक्तमीदृशम् । यत्परित्यज्य मां गन्तुं मतिरेकाकिना कृता ॥५॥
ननु नाऽहं किमु ज्ञातस्तव त्वद्विरहासहः । यन्मां निक्षिप्य दुःखाग्रावकस्मादिदमीहसे ॥ ६ ॥
हा तात किमिदं क्रूरं परं व्यवसितं त्वया । यदसंवाद्य मे लोकमन्यं दत्तं प्रयाणकम् ॥ ७ ॥
प्रयच्छ सकृदप्याशु वत्स प्रतिवचोऽमृतम् । दोषाद्विनाऽसि किं क्रुद्धो ममापि सुविनीतकः ॥८॥
कृतवानसि नो जातु मानं मयि मनोहर । अन्य एवाऽसि किं जातो वद वा किं मया कृतम् ॥९॥
दूरादेवान्यदा दृष्ट्वा दत्त्वाऽभ्युत्थानमादृतः । रामं सिंहासने कृत्वा महीपृष्ठं निषेवय ॥ १० ॥
अधुना मे सरस्यस्मिन्निन्दुकांतनखावलौ । पादेऽपि लक्ष्मण न्यस्ते ऋषे ( रुषो ) मृष्येति नो कथम् ॥

देव त्वरितमुत्तिष्ठ मम पुत्रौ वनं गतौ । दूरं न गच्छतो यावत्तावत्तावानयामहे ॥ १२ ॥
त्वया विरहिता एताः कृतार्तकुररीरवाः । भवद्गुणग्रहग्रस्ता विलोलंति महीतले ॥ १३ ॥
भ्रष्टहारशिरोरत्नमेखलाकुंडलादिकम् । आक्रन्दन्तं प्रियालोकं वारयस्याकुलं न किम् ॥ १४ ॥
किं करोमि क गच्छामि त्वया विरहितोऽधुना । स्थानं तन्नानुपश्यामि जायते यत्र निर्वृतिः १५
आसेचनकमेतत्ते पश्याम्यद्यापि चक्रकम् । अनुरक्तात्मकं तत्किं त्यक्तुं समुचितं तव ॥ १६ ॥
मरणव्यसने भ्रातुरपूर्वोऽयं मर्मागकम् । दग्धुं शोकानलः शक्तः किं करोमि विपुण्यकः ॥ १७ ॥
न कृशानुर्दहत्येवं नैवं शोषयते विषम् । उपमानविनिर्मुक्तं यथा भ्रातुः परायणम् ॥ १८ ॥
अहो लक्ष्मीधर क्रोधधैर्यं संहर सांप्रतम् । वेलाऽतीताऽनगाराणां महर्षीणामियं हि सा ॥ १९ ॥
अयं रविरुपैत्यस्तं वीक्षस्वैतानि सांप्रतम् । पद्मानि त्वत्सनिद्राक्षिसमानि सरसां जले ॥ २० ॥
शय्यां व्यरचयत्क्षिप्रं कृत्वा विष्णुं भुजान्तरे । व्यापारान्तरनिर्मुक्तः स्वप्तुं रामः प्रचक्रमे ॥२१॥
श्रवणे देवसद्भावं ममैकस्य निवेदय । केनासि कारणेनैतामवस्थामीदृशीमितः ॥ २२ ॥
प्रसन्नचंद्रकान्तं ते वक्त्रमासीन्मनोहरम् । अधुना विगतच्छायं कस्मादीदृगिदं स्थितम् ॥ २३ ॥
मृदुप्रभंजनाऽऽधूतकरपल्लवसन्निभे । आस्तां निरीक्षणे कस्मादधुना म्लानिमागते ॥ २४ ॥

ब्रूहि ब्रूहि किमिष्टं ते सर्वं संपादयाम्यहम् । एवं न शोभसे विष्णो सव्यापारं मुखं कुरु ॥ २५ ॥
देवी सीता स्मृता किन्ते समदुःखसहायिनी । परलोकं गता साध्वी विषण्णासि भवेत्ततः ॥२६॥
विषादं मुंच लक्ष्मीश विरुद्धा खगसंहतिः । अवस्कन्दागता सेयं साकेतामवगाहते ॥ २७ ॥
क्रुद्धास्यापीदृशं वक्त्रं मनोहर न जातुचित् । तवाऽऽसीदधुना वत्स मुंच मुंच विचेष्टितम् ॥२८॥
प्रसीदैष तवानृत्तपूर्वं पादौ नमाम्यहम् । ननु ख्यातोऽखिले लोके मम त्वमनुकूलने ॥ २९ ॥
असमानप्रकाशस्त्वं जगद्दीपः समुन्नतः । चलिताऽकालवातेन प्रायो निर्वापितोऽभवत् ॥ ३० ॥
राजराजत्वमासाद्य नीत्वा लोकं महोत्सवम् । अनाथीकृत्य तं कस्मद्भवितं गमनं तव ॥३१॥
चक्रेण द्विषतां चक्रं जित्वा सकलमूर्जितम् । कथं नु सहसेऽद्य त्वं कालचक्रपराभवम् ॥ ३२ ॥
राजश्रिया तवाराजद्यदिदं सुंदरं वपुः । तदद्यापि तथैवेदं शोभते जीवितोज्झितम् ॥ ३३ ॥
निद्रां राजेन्द्र मुंचस्व समतीता विभावरी । निवेदयति संध्येयं परिप्राप्तं दिवाकरम् ॥ ३४ ॥
सुप्रभातं जिनेन्द्राणां लोकालोकावलोकिनाम् । अन्येषां भव्यपद्मानां शरणं मुनिसुव्रतः ॥ ३५ ॥
प्रभातमपि जानामि ध्वान्तमेतदहं परम् । वदनं यन्नरेन्द्रस्य पश्यामि गतविभ्रमम् ॥ ३६ ॥
उत्तिष्ठ मा चिरं स्वाप्सीर्मुंच निद्रां विचक्षण । आश्रयामः सभास्थानं तिष्ठ सामंतदर्शने ॥ ३७ ॥

प्राप्तो विनिद्रतामेष सशोकः कमलाकरः । कस्मादभ्युदितत्वं तु निंदितं सेवते भवान् ॥ ३८ ॥
विपरीतमिदं जातु त्वया नैवमनुष्ठितम् । उत्तिष्ठ राजकृत्येषु भवावहितमानसः ॥ ३९ ॥
भ्रातस्त्वयि चिरं सुप्ते जिनवेश्मसु नोचिताः । क्रियन्ते चारुसंगीता भेरीमंगलनिःस्वना ॥ ४० ॥
श्लथप्रभातकर्तव्याः करुणासक्तचेतसः । उद्वेगं परमं प्राप्ता यतयोऽपि त्वयीदृशे ॥ ४१ ॥
वीणावेणुमृदंगादिनिस्वानपरिवर्जिता । त्वद्वियोगाकुलीभूता नगरीयं न राजते ॥ ४२ ॥
पूर्वोपचितमशुद्धं नूनं मे कर्म पाकमायातम् । भ्रातृवियोगव्यसनं प्राप्तोऽस्मि यदीदृशं कष्टम् ४३
युद्ध इव शोकभाजश्चैतन्यसमागममानन्दम् । उत्तिष्ठ मानवरवे कुरु सकृदत्यन्तखिन्नस्य ॥ ४४ ॥

इति श्रीपद्मपुराणे श्रीरविषेणाचार्यप्रोक्ते रामदेवविप्रलापं नाम षोडशोत्तरशतं पर्व ॥ ११६ ॥

---

# अथ सप्तदशोत्तरशतं पर्व ।

ततो विदितवृत्तान्ताः सर्वे विद्याधराधिपाः । सह स्त्रीभिः समायातास्त्वरिताः कोशलां पुरीम् १
विभीषणः समं पुत्रैश्चन्द्रोदरनृपात्मजः । समेतः परिवर्गेण सुग्रीवः शशिवर्द्धनः ॥ २ ॥

वाष्पविप्लुतनेत्रास्ते संभ्रान्तमनसोऽविशन् । भवनं पद्मनाभस्य भरितांजलयो नताः ॥ ३ ॥
विषादिनो विधिं कृत्वा पुरस्तात्ते महीतले । उपविश्य क्षणं स्थित्वा मंदं व्यज्ञापयन्निदम् ॥ ४ ॥
देव यद्यपि दुर्मोचः शोकोऽयं परमात्मजः । ज्ञातज्ञेयस्तथापि त्वमेनं संत्यक्तुमर्हसि ॥ ५ ॥
एवमुक्त्वा स्थितेष्वेषु वचः प्रोचे विभीषणः । परमार्थस्वभावस्य लोकतत्त्वविचक्षणः ॥ ६ ॥
अनादिनिधना राजन् स्थितिरेषा व्यवस्थिता । अधुना नेयमस्यैव प्रवृत्ता भुवनोदरे ॥ ७ ॥
जातेनाऽवश्यमर्त्तव्यमत्रसंसारपंजरे । प्रतिक्रियाऽस्ति नो मृत्योरुपायैर्विविधैरपि ॥ ८ ॥
अनाप्ये नियतं देहे शोकस्यालंबनं मुधा । उपायैर्हि प्रवर्त्तन्ते स्वार्थस्य कृतबुद्धयः ॥ ९ ॥
आक्रन्दितेन नो कश्चित्परलोकगतो गिरम् । प्रयच्छति ततः शोकं न राजन् कर्त्तुमर्हसि ॥१०॥
नारीपुरुषसंयोगाच्छरीराणि शरीरिणाम् । उत्पद्यन्ते व्ययन्ते च प्राप्तसाम्यानि बुद्बुदैः ॥ ११ ॥
लोकपालसमेतानामिन्द्राणामपि नाकतः । नष्टयोनिजवेदानां प्रच्युतिः पुण्यसंक्षये ॥ १२ ॥
गर्भक्लिष्टे रुजाकीर्णे तृणबिन्दुचलाचले । क्लेदकैकससंघाते काऽऽस्था मर्त्यशरीरके ॥ १३ ॥
अजरामरणंमन्यः किं शोचति जनो मृतम् । मृत्युदंष्ट्रान्तरक्लिष्टमात्मानं किं न शोचति ॥ १४ ॥
यदा निधनमस्यैव केवलस्य तदा सति । उच्चैराक्रन्दितुं युक्तं न सामान्ये पराभवे ॥ १५ ॥

यदैव हि जनो जातो मृत्युनाधिष्ठितस्तदा । तत्र साधारणे धर्मे ध्रुवे किमिति शोच्यते ॥ १६ ॥
अभीष्टसंगमाकांक्षी मुधा शुष्यति शोकवान् । शबरार्त्त इवारण्ये चमरः केशलोभतः ॥ १७ ॥
सर्वैरेभिर्यदास्माभिरितो गम्यं वियोगतः । तदा किं क्रियते शोकः प्रथमं तत्र निर्गते ॥ १८ ॥
लोकस्य साहसं पश्य निर्भीस्तिष्ठति यत्पुरः । मृत्योर्वज्राग्रदंडस्य सिंहस्येव कुरंगकः ॥ १९ ॥
लोकनाथं विमुच्यैकं कश्चिदन्यः श्रुतस्त्वया । पाताले भूतले वा यो न जातो मृत्युनाऽर्दितः ॥२०॥
संसारमंडलापन्नं दह्यमानं सुगंधिना । सदा च विंध्यदावाभं भुवनं किं न वीक्षसे ॥ २१ ॥
पर्यट्य भवकांतारं प्राप्य कामभुजिष्यताम् । मत्तद्विपा इवाऽऽयांति कालपाशस्य वश्यताम् ॥२२॥
धर्ममार्गं समासाद्य गतोऽपि त्रिदशालयम् । अशाश्वततया नद्याः पात्यते तटवृक्षवत् ॥ २३ ॥
सुरमानवनाथानां चयाः शतसहस्रशः । निधनं समुपानीताः कालमेघेन वह्नयः ॥ २४ ॥
दूरमंबरमुल्लंघ्य समापत्य रसातलम् । स्थानं तत्र प्रपश्यामि यत्र मृत्योरगोचरः ॥ २५ ॥
षष्ठकालक्षये सर्वं क्षीयते भारतं जगत् । धराधरा विशीर्यन्ते मर्त्यकाये तु का कथा ॥ २६ ॥
वज्रर्षभवपुर्बद्धा अप्यवंध्याः सुरासुरैः । नन्वनित्यतया लब्धा रंभागर्भोपमैस्तु किम् ॥ २७ ॥
जनन्यापि समाश्लिष्टं मृत्युर्हरति देहिनम् । पातालान्तर्गतं यद्वत्काद्रवेयं द्विजोत्तमः ॥ २८ ॥

हा भ्रातर्दयिते पुत्रेत्येवं क्रन्दन् सुदुःखिताः । कालाहिना जगद्व्यंगो ग्रासतामुपनीयते ॥२९॥
करोम्येतत्करिष्यामि वदत्येवमनिष्टधीः । जनो विशति कालास्यं भीमं पोत इवार्णवम् ॥ ३० ॥
जनं भवान्तरं प्राप्तमनुगच्छेज्जनो यदि । द्विष्टैरिष्टैश्च नो जातु जायेत विरहस्ततः ॥ ३१ ॥
परे स्वजनमानी यः कुरुते स्नेहसम्मतिम् । विशति क्लेशवह्निं स मनुष्यकलभो ध्रुवम् ॥ ३२ ॥
स्वजनौघाः परिप्राप्ताः संसारे येऽसुधारिणाम् । सिंधुसैकतसंघाता अपि संति न तत्समाः ॥३३॥
य एव लालितोऽन्यत्र विविधप्रियकारिणा । स एव रिपुतां प्राप्तो हन्यते तु महारुषा ॥ ३४ ॥
पीतौ पयोधरौ यस्य जीवस्य जननांतरे । त्रस्ताहतस्य तस्यैव खाद्यते मांसमत्र धिक् ॥ ३५ ॥
स्वामीति पूजितः पूर्वं यः शिरोनमनादिभिः । स एव दासतां प्राप्तो हन्यते पादताडनैः ॥३६॥
विभोः पश्यत मोहस्य शक्तिर्येन वशीकृतः । जनोऽन्विष्यति संयोगं हस्तेनेव महोरगम् ॥ ३७ ॥
प्रदेशस्तिलमात्रोऽपि विष्टपे न स विद्यते । यत्र जीवः परिप्राप्तो न मृत्युं जन्म एव वा ॥ ३८ ॥
ताम्रादिकलिलं पीतं जीवेन नरकेषु यत् । स्वयंभूरमणो तावत् सलिलं न हि विद्यते ॥ ३९ ॥
वराहभवयुक्तेन यो नीहारोऽशनीकृतः । मन्ये विंध्यसहस्रेभ्यो बहुशोऽस्त्यन्तदूरतः ॥ ४० ॥
परस्परस्वनाशेन कृता या मूर्द्धसंहतिः । ज्योतिषां मार्गमुल्लंघ्य यायात्सा यदि रुध्यते ॥ ४१ ॥

शर्कराधरणीयातैर्दुःखं प्राप्तमनुत्तमम् । श्रुत्वा तत्कस्य रोचेत मोहेन सह मित्रता ॥ ४२ ॥

यस्य कृतेऽपि निमिषं दुःखानि विषयसुखसंसक्तः ।
पर्यटति च संसारे ग्रस्तो मोहग्रहेण मत्तवदात्मा ॥ ४३ ॥

एतद्दग्धशरीरं युक्तं त्यक्तुं कषायचितायासम् ।
अन्यस्मादन्यतरं पुनरीदृग्विधं कलेवरभारम् ॥ ४४ ॥

इत्युक्तोऽपि विविक्तं खेचररविणा विपश्चिता रामः ।
नोज्झति लक्ष्मणमूर्तिं गुरोरिवाऽऽज्ञां विनीतात्मा ॥ ४५ ॥

इति श्रीपद्मपुराणे श्रीरविषेणाचार्यप्रोक्ते लक्ष्मणवियोगविभीषणसंसारस्थितिवर्णनं नाम सप्तदशोत्तरशतं पर्व ॥ ११७ ॥

# अथाष्टादशोत्तरशतं पर्व ।

सुग्रीवाद्यैस्ततो भूपैर्विज्ञप्तं देव सांप्रतम् । चितां कुर्मो नरेन्द्रस्य देहं संस्कारमापय ॥ १ ॥

कलुषात्मा जगादासौ मातृभिः पितृभिः समम् । चितायामाशु दह्यन्तां भवन्तः सपितामहाः ॥२॥

यः कश्चिद्ध्रियते बंधुर्युष्माकं पापचेतसाम् । भवन्त एव तेनाऽमा व्रजन्तु निधनं द्रुतम् ॥ ३ ॥
उत्तिष्ठोत्तिष्ठ गच्छामः प्रदेशं लक्ष्मणाऽपरम् । शृणुमो नेदृशं यत्र खलानां कटुकं वचः ॥ ४ ॥
एवमुक्त्वा तनुं भ्रातुर्जिघृक्षोरस्य सत्वरम् । पृष्ठस्कंधादि राजानो ददुःसंभ्रमवर्त्तिनः ॥ ५ ॥
अविश्वसन् स तेभ्यस्तु स्वयमादाय लक्ष्मणम् । प्रदेशमपरं यातः शिशुर्विषफलं यथा ॥ ६ ॥
जगौ वाष्पपरीताक्षो भ्रातः किं सुप्यते चिरम् । उत्तिष्ठ वर्त्तते वेला स्नानभूमिर्निषेव्यताम् ॥७॥
इत्युक्त्वा तं मृतं कृत्वा साश्रये स्नानविष्टरे । अभ्यषिंचन्महामोहो हेमकुंभांभसा चिरम् ॥ ८ ॥
अलंकृत्य च निःशेषभूषणैर्मुकुटादिभिः । सदाज्ञोऽज्ञापयत् क्षिप्रं भुक्तिभूसत्कृतानिति ॥ ९ ॥
नानारत्नशरीराणि जांबूनदमयानि च । भाजनानि विधीयंतां अन्नं चाऽऽनीयतां परम् ॥१०॥
समुपाह्रियतामच्छा बाढं कादंबरी वरा । विचित्रमुपदंशं च रसबोधनकारणम् ॥ ११ ॥
एवमाज्ञां समासाद्य परिवर्गेण सादरम् । तथाविधं कृतं सर्वं नाथ बुद्ध्यनुवर्त्तिना ॥ १२ ॥
लक्ष्मणस्यान्तरास्यस्य राघवः पिंडमादधे । न त्वविक्षज्जिनेन्द्रोक्तमभव्यश्रवणे यथा ॥ १३ ॥
ततोऽगदद्यदि क्रोधो मयि देव कृतस्त्वया । ततोऽस्यात्र किमायातममृतस्वादिनोंधसः ॥ १४ ॥
इयं श्रीधर ते नित्यं दयिता मदिरोत्तमा । इमां तावत्पिब न्यस्तां चषके विकचोत्पले ॥ १५ ॥

इत्युक्त्वा तां मुखे न्यस्य चकार सुमहादरः । कथं विशतु सा तत्र चार्वी संक्रान्तचेतने ॥१६॥
इत्यशेषं क्रियाजातं जीवतीव सलक्ष्मणे । चकार स्नेहमूढात्मा मोघं निर्वेदवर्जितः ॥ १७ ॥
गीतैः स चारुभिर्वेणुवीणानिस्वनसंगतैः । परासुरपि रामाज्ञां प्राप्तामापच्च लक्ष्मणः ॥ १८ ॥
चंदनार्चितदेहं तं दोर्भ्यामुद्यम्य सस्पृहः । कृत्वांऽके मस्तकेऽचुंबत्पुनर्गंडे पुनः करे ॥ १९ ॥
अपि लक्ष्मण किन्ते स्यादिदं संजातमीदृशम् । न येन मुंचसे निद्रां सकृदेव निवेदय ॥ २० ॥
इति स्नेहग्रहाविष्टो यावदेष विचेष्टते । महामोहकृतासंगे कर्मण्युदयमागते ॥ २१ ॥
तावद्विदितवृत्तान्ता रिपवः क्षोभमागता । परे तेजसि कालास्ते गर्जन्तो विषदा इव ॥ २२ ॥
विरोधिताशया दूरं सामर्षा सुंदनंदनम् । चारुरत्नाख्यमाजग्मुरसौ कुलिशमालिनम् ॥ २३ ॥
ऊचे च मद्गुरौ येन नीत्वा सोदरकारकौ । पातालनगरे चासौ राज्येऽस्थापि विराधितः ॥२४॥
वानरध्वजिनीचन्द्रं सुग्रीवं प्राप्य बांधवम् । उदन्तोऽलंभि कान्ताया रामेणाऽऽर्त्तिमता ततः ॥२५॥
उदन्वतं समुल्लंघ्य नभोगैर्यानवाहनैः । द्वीपा विध्वंसितास्तेन लंकां जेतुं युयुत्सुना ॥ २६ ॥
सिंहताक्ष्यमहाविद्ये रामलक्ष्मणयोस्तयोः । उत्पन्ने बंदितां नीतास्ताभ्यामिन्द्रजितादयः ॥२७॥
चक्ररत्नं समासाद्य येनाऽघाति दशाननः । अधुना कालचक्रेण लक्ष्मणोऽसौ निपातितः ॥२८॥

आसंस्तस्य भुजच्छायां श्रित्वा मत्ता प्लवंगमाः। सांप्रतं लूनपक्षास्ते परमास्कन्धतां गताः ॥२९॥
अद्यास्ति द्वादशः पक्षो राघवस्येयुषः शुचम् । प्रेतांगं वहमानस्य व्यामोहः कोऽपरोऽस्त्वतः ३०
यद्यप्यप्रतिमल्लोऽसौ हलरत्नादिमर्दनः । तथापि लंघितुं शक्यः शोकपंकगतोऽभवत् ॥ ३१ ॥
तस्यैव विभिमस्त्वस्य न जात्वन्यस्य कस्यचित् । यस्यानुजेन विध्वस्ता सर्वास्मद्वंशसंगतिः ३२
अथेन्द्रजितिराकर्ण्य व्यसनं स्वोरुगोत्रजम् । प्रतिद्यासितमार्गेण जज्वाल क्षुब्धमानसः ॥ ३३ ॥
आज्ञाप्य सचिवान् सर्वान् भेर्या संयति राजितान् । प्रययौ प्रति साकेतं सुन्दतोकसमन्वितः ३४
सैन्याकूपारगुप्तौ तौ सुग्रीवं प्रति कोपिनौ । पद्मनाभमयाशिष्टां प्रकोपयितुमुद्यतौ ॥ ३५ ॥
वज्रमालिनमायातं श्रुत्वा सौंदिसमन्वितम् । सर्वे विद्याधराधीशा रघुचन्द्रमशिश्रियन् ॥ ३६ ॥
वितानतां परिप्राप्ता क्षुब्धाऽयोध्या समन्ततः । लवणांकुशयोर्यद्वदागमे भीतिवेपिता ॥ ३७ ॥
अरातिसैन्यमभ्यर्णमालोक्य रघुभास्करः । कृत्वांके लक्ष्मणं सत्त्वं वहमानस्तथाविधम् ॥ ३८ ॥
उपनीतं समं बाणैर्वज्रावर्त्तमहाधनुः । आलोकत स्वभावस्थं कृतान्तभ्रूलतोपमम् ॥ ३९ ॥
एतस्मिन्नंतरे नाके जातो विष्टरवेपथुः । कृतान्तवक्त्रदेवस्य जटायुस्त्रिदशस्य च ॥ ४० ॥
विमाने यत्र संभूतो जटायुस्त्रिदशोत्तमः । तस्मिन्नेव कृतान्तोऽपि तस्यैव विभुतां गतः ॥ ४१ ॥

कृतान्तत्रिदशोऽवोचद्यो गीर्वाणपते कुतः । इमं यातोऽसि संरंभं सोऽगदद्योजितावधिः ॥ ४२ ॥
यदाऽहमभवं गृध्रस्तदा येनेष्टपुत्रवत् । लालितः शोकतप्तं तमेति शत्रुबलं महत् ॥ ४३ ॥
ततः कृतान्तदेवोऽपि प्रयुज्यावधिलोचनम् । अधोभूयिष्ठदुःखार्त्तो बभाषे चातिभासुरः ॥ ४४ ॥
सखे सत्यं ममाप्येष प्रभुरासीत्सुवत्सलः । प्रसादादस्य भूपृष्ठे कृतं दुर्ललितं मया ॥ ४५ ॥
भाषितश्चाहमेतेन गहनात्परमोचनम् । तदिदं जातमेतस्य तदेवेनमिमो लघु ॥ ४६ ॥
इत्युक्त्वा प्रचलन्नीलकेशकुंतलसंहरी । स्फुरत्किरीटभाचक्रौ विलसन्मणिकुंडलौ ॥ ४७ ॥
माहेन्द्रकल्पतो देवौ श्रीमन्तौ प्रति कोसलाम् । जग्मतुः परमोद्योगौ प्रतिपक्षविचक्षणौ ॥ ४८ ॥
सामानिकं कृतान्तोऽगादृव्रज त्वं द्विषतां बलम् । विमोहय रघुश्रेष्ठं रक्षैतं तु व्रजाम्यहम् ॥ ४९ ॥
ततो जटायुर्गीर्वाणः कामरूपविवर्त्तकृत् । सुधीरुदारमत्यन्तं परसैन्यममोहयत् ॥ ५० ॥
आगच्छतामरातीनामयोध्यामीक्षितां पुरः । पुनः प्रदर्शयामास पर्वतं पृष्ठतः पुनः ॥ ५१ ॥
निरस्याऽऽरादधीयांस्तां शत्रुखेचरवाहिनीम् । आरेभे रोदसी व्याप्तुमयोध्याभिरनंतरम् ॥ ५२ ॥
अयोध्यैष विनीतेयमियं सा कोशला पुरी । अहो सर्वमिदं जातं नगरी गहनात्मकम् ॥ ५३ ॥
इति वीक्ष्य महीपृष्ठं खं चायोध्यासमाकुलम् । मानोन्नत्या वियुक्तं तद्वीक्ष्यापन्नमभूद्बलम् ॥५४॥

बभणुश्चाधुना केन प्रकारेण स्वजीवितम् । धारयामः परा यत्र काऽप्येषा रामदेवता ॥ ५५ ॥
ईदृशी विक्रिया शक्तिः कुतो विद्याधरर्द्धिषु । किमिदं कृतमस्माभिरनालोचितकारिभिः ॥५६॥
विरुद्धा अपि हंसस्य खद्योताः किं नु कुर्वते । यस्यामीषुसहस्राप्तं परिजाज्वल्यते जगत् ॥ ५७ ॥
प्रपलायितुकामानामपि नः सांप्रतं सखे । नास्ति मार्गः सुभीमेऽस्मिन्बले स्तृणति विष्टपम् ॥५८॥
महान्नु मरणेऽप्यस्ति गुणो जीवन् हि मानवः । कदाचिदेति कल्याणं स्वकर्मपरिपाकतः ॥५९॥
बुद्बुदा इव यद्यस्मिन्नमीभिः सैनिकोर्मिभिः । आनीताः स्म प्रविध्वंसं किं भवेदर्जितं ततः ६०
इत्यन्योन्यकृताऽऽलापमुद्भूतपृथुवेपथुः । विद्याधरबलं सर्वं जातमत्यन्तविह्वलम् ॥ ६१ ॥
विक्रियाक्रीडनं कृत्वा जटायुरिति पार्थिव । पलायनपथं तेषां दक्षिणं कृपया ददौ ॥ ६२ ॥
प्रस्पन्दमानचित्तास्ते कंपमानशरीरकाः । भृशं ते खेचरा नेशुः श्येनत्रस्ता द्विजा इव ॥ ६३ ॥
तस्मै विभीषणायाग्रे दास्यामो नु किमुत्तरम् । का वा शोभाऽधुनाऽस्माकमत्यन्तोपहतात्मनाम् ६४
छायया दर्शयिष्यामः कया वक्त्रं स्वदेहिनाम् । कुतो वा धृतिरस्माकं का वा जीवितशेमुषी ॥६५॥
अवधार्येति सव्रीडस्तस्मिन्निन्द्रजितात्मजः । प्राप्तो विरागमैश्वर्ये विभूतिं वीक्ष्य दैविकीम् ॥६६॥
समेतश्चारुरत्नेन स्निग्धकैश्च सभूमिभिः । रतिवेगमुनेः पार्श्वे विरोषः श्रमणोऽभवत् ॥ ६७ ॥

दृष्ट्वाऽनंतरदेहांस्तान्निर्मुक्तकलुषान्नृपान् । विद्युत्प्रहरणं देवः समहार्षीत्प्रभीषणः ॥ ६८ ॥
दध्यावुद्विग्नचित्तः सः कृतावधिनियोजनः । अहोऽमी प्रीतिबोधाढ्याः संवृत्ताः परमर्षयः ॥ ६९ ॥
दोषांस्तदास्मिन्दापित्वा साधूनां विमलात्मनाम् । महादुःखं परिप्राप्तं तिर्यक्षु नरकेषु च ॥७०॥
यस्यानुबंधमद्यापि मोहशत्रोर्दुरात्मनः । येन स्तोकेन न भ्रान्तः पुनर्दीर्घं भवार्णवम् ॥ ७१ ॥
इति संचिन्त्य शांतात्मा स्वं निवेद्य यथाविधि । प्रणम्य भक्तिसंपन्नः सुधीः साधूनमर्षयत् ॥७२॥
तथा कृत्वा च साकेतामगाद्यत्र विमोहितः । भ्रातृशोकेन काकुत्स्थः शिशुवत्परिचेष्टते ॥ ७३ ॥
आकल्पांतरमापन्नं सिंचन्तं शुष्कपादपम् । पद्मनाभप्रबोधार्थं कृतान्तं वीक्ष्य सादरम् ॥ ७४ ॥
जटायुः शीरमासाद्य गोकलेवरयुग्मके । बीजं शिलातले वप्तुमुद्यतः प्राजनं दधत् ॥ ७५ ॥
कुमीढपूरितां कुंभीं कृतान्तस्तत्पुरोऽमथत् । जटायुश्चक्रमारोप्य सिकतां पर्यपीडयत् ॥ ७६ ॥
अन्यानि चार्थहीनानि कार्याणि त्रिदशाविमौ। चक्रतुः स ततो गत्वा पप्रच्छेति क्रमान्वितम् ७७
परेतं सिंचसे मूढ कस्मादेनमनोकहम् । कलेवरं हलं ग्राव्णि बीजं हारयसे कुतः ॥ ७८ ॥
नीरनिर्मथने लब्धिर्नवनीतस्य किं कृता । वालुकापीडनाद्वाल स्नेहः संजायतेऽथ किम् ॥ ७९ ॥
केवलं श्रम एवात्र फलं नाण्वपि कांक्षितम् । लभ्यते किमिदं व्यर्थं समारब्धं विचेष्टितम्॥८०॥

ऊचतुस्तौ क्रमेणैतं पृच्छावशापि सत्यतः । जीवेन रहितामेतां तनुं वहसि किं वृथा ॥ ८१ ॥
लक्ष्मणांगं ततो दोर्भ्यामालिङ्ग्य वरलक्षणम् । इदं जगाद भूदेवः कलुषीभूतमानसः ॥ ८२ ॥
भो भो कुत्सयते कस्मात्सौमित्रिं पुरुषोत्तमम् । अमंगलाभिधानस्य किं ते दोषो न विद्यते ॥८३॥
कृतान्तेन समं यावद्विवादोऽस्येति वर्त्तते । जटायुस्तावदायातो वहन्नरकलेवरम् ॥ ८४ ॥
तं दृष्ट्वाऽभिमुखं रामो बभाषे केन हेतुना । कलेवरमिदं स्कन्धे वहसे मोहसंगतः ॥ ८५ ॥
तेनोक्तमनुयुंक्षे मां कस्मान्न त्वं विचक्षणः । यतः प्राणनिमेषादिमुक्तं वहसि विग्रहम् ॥ ८६ ॥
बालाग्रमात्रकं दोषं परस्य क्षिप्रमीक्षसे । मेरुकूटप्रमाणान् स्वान् कथं दोषान्न पश्यसि ॥ ८७ ॥
दृष्ट्वा भवन्तमस्माकं परमा प्रीतिरुद्गता । सदृशः सदृशेष्वेव रज्यन्तीति सुभाषितम् ॥ ८८ ॥
सर्वेषामस्मदादीनां यथेप्सितविधायिनाम् । भवान् पूर्वं पिशाचानां त्वं राजा परमेप्सितः ॥८९॥
उन्मत्तेन्द्रध्वजं दत्त्वा भ्रमामः सकलां महीम् । उन्मत्तां प्रवर्णीकुर्मः समस्तां प्रत्यवस्थिताम् ९०
एवमुक्तमनुश्रित्य मोहे शिथिलतां गते । गुरुवाक्यभवं चाऽन्यत् स्मृत्वा श्रीमानभून्नृपः ॥९१॥
मुक्तमोहघनव्रातः प्रतिबोधमरीचिभिः । नृपदाक्षायणी भर्त्ता राजते परमं तदा ॥ ९२ ॥
धनपंकाविनिर्मुक्तमिव शारदमंबरम् । विमलं तस्य संजातं मानसं सत्त्वसंगतम् ॥ ९३ ॥

स्मृतैरमृतसंपन्नैर्हृतशोको गुरूदितैः । पुरेव नंदनस्वास्थ्यं दधानः शुशुभेतराम् ॥ ९४ ॥
अवलंवितधीरत्वस्तैरेव पुरुषोत्तमः । छायां प्राप यथा मेरुर्जिनाभिषववारिभिः ॥ ९५ ॥
प्रालेयवाससंपर्कविमुक्तांभोजखंडवत् । प्रजह्लादे विशुद्धात्मा विमुक्तकलुषाशयः ॥ ९६ ॥
महान्तध्वान्तसंमूढो भानोः प्राप्त इवोदयम् । महाक्षुदर्दितो लेभे परमान्नमिवेप्सितम् ॥ ९७ ॥
तृषा परमया ग्रस्तो महासर इवागमत् । महौषधमिव प्रापदत्यन्तव्याधिपीडितः ॥ ९८ ॥
यानपात्रमिवासादतनुकामो महार्णवम् । उत्पथप्रतिपन्नः सन्मार्गं प्राप्येव नागरः ॥ ९९ ॥
गंतुमिच्छन्निजं देशं महासार्थमिव श्रितः । निर्गन्तुं चारकादिच्छोर्भग्नेव सुदृढार्गला ॥१००॥
जिनमार्गस्मृतिं प्राप्य पद्मनाभः प्रमोदवान् । अधारयत्परां कान्तिं प्रबुद्धकमलेक्षणः ॥ १०१ ॥
मन्यमानः स्वमुत्तीर्णमन्धकूपोदरादिव । भवान्तरमिव प्राप्तो मनसीदं समादधे ॥ १०२ ॥
अहो तृणाग्रसंसक्तजलबिन्दुचलाचलम् । मनुष्यजीवितं यद्वत्क्षणान्नाशमुपागतम् ॥ १०३ ॥
भ्रमताऽत्यन्तकृच्छ्रेण चतुर्गतिभवान्तरे । नृशरीरं मया प्राप्तं कथं मूढोऽस्म्यनर्थकः ॥ १०४ ॥
कस्येष्टानि कलत्राणि कस्यार्थाः कस्य बांधवाः । संसारे सुलभं ह्येतद्बोधिरेका सुदुर्लभा ॥१०५॥
इति ज्ञात्वा प्रबुद्धं तं मायां संहृत्य तौ सुरौ । चक्रतुस्त्रैदशीमृद्धिं लोकविस्मयकारिणीम् ॥१०६॥

अपूर्वः प्रववौ वायुः सुखस्पर्शः सुसौरभः । नभो यानैर्विमानैश्च व्याप्तमत्यन्तसुन्दरैः ॥१०७॥
गीयमानं सुरस्त्रीभिर्वीणानिःस्वनसंगतम् । आत्मीयं चरितं रामः शृणोति स्म क्रमस्थितम् १०८
एतस्मिन्नंतरे देवः कृतान्तोऽमा जटायुषा । रामं पप्रच्छ किं नाथ प्रेरिताः दिवसाः सुखम् ॥१०९॥
एवमुक्तो जगौ राजा पृच्छथः किं शिवं मम । तेषां सर्वसुखान्येव ये श्रामण्यमुपागताः ॥११०॥
भवन्तावस्मि पृच्छामि कौ युवां सौम्यदर्शनौ । केन वा कारणेनेदं कृतमीदृग्विचेष्टितम् ॥१११॥
ततो जटायुर्देवोऽगादिति जानासि भूपते । गृध्रोऽरण्ये यदाशिष्ये शमिष्यामि मुनीक्षणात् ॥११२॥
लालयिष्ये च यत्तत्र भ्रात्रा देव्या सह त्वया । सीता हृता हनिष्ये च रावणेनाऽभियोगकृत् ११३
यच्च कर्णे जपः शोकविह्वलेन त्वया प्रभो । दापिष्यते नमस्कारः पंचसत्पूरुषाश्रितः ॥ ११४ ॥
सोऽहं भवत्प्रसादेन समारोहं त्रिविष्टपम् । तथाविधं परित्यज्य दुःखं तिर्यग्भवोद्भवम् ॥ ११५ ॥
सुरसौख्यैर्मदोदारैर्मोहितेन मया गुरो । ज्ञानेनाऽवधिना ज्ञात्वाऽसाताऽऽगतेदृशी ॥ ११६ ॥
अवसानेऽधुना देव त्वत्कर्मकृतचेतनः । किंचित्किल प्रतीकारं समनुष्ठातुमागतः ॥ ११७ ॥
ऊचे कृतान्तदेवोऽपि गत्वा किंचित्सुवेशताम् । सोऽहं नाथ कृतांताख्यः सेनानीरभवन्तव ॥११८॥
स्मर्त्तव्योऽसि त्वया कृच्छ्रे इति बुद्धोदितं त्वया । विधातुं तदहं स्वामिन् भवदंतिकमागतः ॥११९॥

विलोक्य वैबुधीमृद्धिं भूतभोगचरा जना । परमं विस्मयं प्राप्ता बभूवुर्विमलाशयाः ॥ १२० ॥
रामो जगाद सेनान्यमप्रमेयं सुरेशिनाम् । उदसीसरतां भद्रौ प्रत्यनीकस्थितात्मनाम् ॥ १२१ ॥
तौ युवामागतौ नाकान्मां प्रबोधयितुं सुरौ । महाप्रभावसंपन्नावत्यन्तशुद्धमानसौ ॥ १२२ ॥
इति संभाष्य तौ रामो निष्क्रान्तः शोकसंकटात् । सरयूरोधसंवृत्या लक्ष्मणं समिधीकरत् ॥१२३॥
परं विबुद्धभावश्च विषादपरिवर्जितः । जगाद धर्ममर्यादापालनार्थमिदं वचः ॥ १२४ ॥

शत्रुघ्न राज्यं कुरु मर्त्यलोके तपोवनं संप्रविशाम्यहन्तु ।
सर्वस्पृहादूरितमानसात्मा पदं समाराधयितुं जिनानाम् ॥ १२५ ॥
रागादहं नो खलु भोगलुब्धः मनस्तु निःसंगसमाधिराज्ये ।
समाश्रयिष्यामि तदेव देव त्वया समं नास्ति गतिर्ममान्या ॥ १२६ ॥
कामोपभोगेषु मनोहरेषु सुहृत्सु संबंधिषु बांधवेषु ।
वस्तुष्वभीष्टेषु च जीवितेषु कस्यास्ति तृप्तिर्नृभवेऽस्मिन् ॥ १२७ ॥

इति पद्मपुराणे श्रीरविषेणाचार्यप्रणीते लक्ष्मणसंस्कारकरणं कल्याणमित्रदेवाभि-
गमाभिधानं नामाष्टादशोत्तरशतं पर्व ॥ ११८ ॥

# अथैकोनविंशोत्तरशतं पर्व ।

तत्तस्य वचनं श्रुत्वा हितमन्यन्तनिश्चितम् । मनसा क्षणमालोच्य सर्वकर्तव्यदक्षिणम् ॥ १ ॥
विलोक्याऽऽसीनमासन्नमनंगलवणात्मजम् । क्षितीश्वरपदं तस्मै ददौ स परमार्द्धिकम् ॥ २ ॥
अनंगलवणः सोऽपि पितृतुल्यगुणक्रियः । प्रणताऽखिलसामन्तो जातः कुलधुरावहः ॥ ३ ॥
परं प्रतिष्ठितः सोऽयमनुरागप्रतापवान् । धरणीमंडले सर्वे सावर्थं विजयो यथा ॥ ४ ॥
सुभूषणाय पुत्राय लंकाराज्यं विभीषणः । सुग्रीवोऽपि निजं राज्यमंगदांगभवे ददौ ॥ ५ ॥
ततो दाशरथी रामः सविषान्नमिवोक्षितम् । कलत्रमिव चागस्वि राज्यं भरतवज्जहौ ॥ ६ ॥
एकं निःश्रेयसस्यांगं देवासुरनमस्कृतम् । साधकैर्मुनिभिर्जुष्टं सममानगुणोदितम् ॥ ७ ॥
जन्ममृत्युपरित्रस्तः श्लथकर्मकलंकभृत् । विधिमार्गं वृणोति स्म मुनिसुव्रतदेशितम् ॥ ८ ॥
बोधिं संप्राप्य काकुत्स्थः क्लेशभावनिनिर्गतः । अदीपिष्टाधिकं मेघव्रजनिःसृतभानुवत् ॥ ९ ॥
अथार्हद्दासनामानं श्रेष्ठिनं द्रष्टुमागतम् । कुशलं सर्वसंघस्य पप्रच्छेह सदःस्थितम् ॥ १० ॥
उवाच स महाराज व्यसनेन तवाऽमुना । व्यथनं परमं प्राप्ता यतयोऽपि महीतले ॥ ११ ॥

अवबुध्य विबंधात्मा किल व्योमचरो मुनिः । सुव्रतो भगवान्प्राप मुनिसुव्रतवंशभृत् ॥ १२ ॥
इति श्रुत्वा महामोदप्रजातपुलकोद्गमः । विस्तारिलोचनः श्रीमान् संप्रतस्थेऽतिकं यतेः ॥ १३ ॥
भूखेचरमहाराजैः सेव्यमानो महोदयः । विजयः स्वर्णकुंभं वा सुभक्तिसुतमागमत् ॥ १४ ॥
गुणप्रवरनिर्ग्रन्थसहस्रकृतपूजनम् । प्रणनामोपसृत्यैव शिरसा रचितांजलिः ॥ १५ ॥
दृष्ट्वा स तं महात्मानं मुक्तिकारणमुत्तमम् । जज्ञे निमग्नमात्मानममृतस्येव सागरे ॥ १६ ॥
अविधं महिमानं च परं श्रद्धातिपूरितः । पूर्वं यथा महापद्मः सुव्रतस्यैव योगिनः ॥ १७ ॥
सर्वदारार्थितात्मानो विहायश्वरणा अपि । ध्वजतोरणवृत्तार्थसंगीताः विध्धुः परम् ॥ १८ ॥
त्रियामायामतीयां भास्करेऽभिनिवेदिते । प्रणम्य राघवः साधून् वव्रे निर्ग्रन्थदीक्षणम् ॥ १९ ॥
निर्धूतकल्मषस्त्यक्तरागद्वेषो यथाविधि । प्रसादात्तव योगीन्द्र विहर्तुमहमुन्मनाः ॥ २० ॥
अवोचत गणाधीशः परमं नृप सांप्रतम् । किमनेन समस्तेन विनाशित्वनिषादिना ? ॥ २१ ॥
सनातननिराबाधपरातिशयसौख्यदम् । मनीषितं परं युक्तं जिनधर्मावगाहितुम् ( हनम् ) ॥२२॥
एवं प्रभाषिते साधौ विरागी भववस्तुनि । दक्षं प्रदक्षिणं चक्रे मुनिर्मेरौ यथा रविः ॥ २३ ॥
समुत्पन्नमहाबोधिः महासंवेगकंकटः । बद्धकक्षो महाधृत्या कर्माणि क्षपणोद्यतः ॥ २४ ॥

आशापाशं समुच्छिद्य निर्दह्य स्नेहपंजरम् । भित्त्वा कलत्रहिंजीरं मोहदर्पं निहत्य च ॥ २५ ॥
आहारं कुंडलं मौलिमपनीयांबरं तथा । परमार्थार्पितस्वान्तस्तनुलग्नमलावलिः ॥ २६ ॥
श्वेताब्जसुकुमाराभिरंगुलीभिः शिरोरुहान् । निराचकार काकुत्स्थः पर्यंकासनमास्थितः ॥ २७ ॥
रराज सुतरां रामस्त्यक्ताशेषपरिग्रहः । सैंहिकैयविनिर्मुक्तो हंसमंडलविभ्रमः ॥ २८ ॥
शीलतानिलयीभूतो गुप्तो गुप्त्याऽभिरूपया । पंचकं समितेः प्राप्तः पंचसर्वव्रतं श्रितः ॥ २९ ॥
षड्जीवकायरक्षस्थो दंडत्रितयसूदनः । सप्तभीतिविनिर्मुक्तः षोडशार्द्धमदार्दनः ॥ ३० ॥
श्रीवत्सभूषितोरस्को गुणभूषणमानसः । जातः सुश्रमणः पद्मो मुक्तितत्त्वविधौ दृढः ॥ ३१ ॥
अदृष्टविग्रहैर्देवैराजघ्ने सुरदुंदुभिः । दिव्यप्रसूनवृष्टिश्च विविक्तैर्भक्तितत्परैः ॥ ३२ ॥
निष्क्रामति तदा रामे गृहिभावोरुकल्मषात् । चक्रे कल्याणमित्राभ्यां देवाभ्यां परमोत्सवः ॥ ३३ ॥
भूदेवे तत्र निष्क्रान्ते सनृपा भूवियच्चराः । चिन्तान्तरमिदं जग्मुर्विस्मयव्याप्तमानसाः ॥ ३४ ॥
विभूतिरत्नमीदृक्षं यत्र त्यक्त्वाऽतिदुस्त्यजम् । देवैरपि कृतस्वार्थैं रामदेवोऽभवन्मुनिः ॥ ३५ ॥
तत्रास्माकं परित्याज्यं किमिवास्ति प्रलोभकम् । तिष्ठामः केवलं येन व्रतेच्छाविकलात्मकाः ३६
एवमादि परिध्याय कृत्वान्तः परिदेवनम् । संवेगिनो निराक्रान्ता बहवो गृहबंधनात् ॥ ३७ ॥

छित्वा रागमयं पाशं निहत्य द्वेषवैरिणम् । सर्वसंगाविनिर्मुक्तः शत्रुघ्नः श्रमणोऽभवत् ॥ ३८ ॥
विभीषणोऽथ सुग्रीवो नीलश्चन्द्रनखो नलः । क्रव्यो विराधिताद्याश्च निरीयुः खेचरेश्वराः ॥३९॥
विद्याभृतां परित्यज्य विद्यां श्रामण्यमीयुषाम् । केषांचिच्चारणी लब्धिर्भूयो जन्माऽभवत्पुनः ॥४०॥
एवं श्रीमति निष्क्रान्ते रामे जातानि षोडश । श्रमणानां सहस्राणि साधिकानि महीपते ॥४१॥
सप्तविंशत्सहस्राणि प्रधानवरयोषिताम् । श्रीमतीश्रमणीपार्श्वे बभूवुः परमार्यिकाः ॥ ४२ ॥
अथ पद्माभनिर्ग्रन्थो गुरोः प्राप्यानुमोदनम् । एकाकी विहतद्वन्द्वो विहारं प्रतिपन्नवान् ॥ ४३ ॥
गिरिगह्वरदेशेषु भीमेषु क्षुब्धचेतसाम् । क्रूरश्वापदशब्देषु रात्रौ वासमसेवत ॥ ४४ ॥
गृहीतोत्तमयोगस्य विधिसद्भावसंगिनः । तस्यामेवास्य शर्वर्यामवधिज्ञानमुद्गतम् ॥ ४५ ॥
आलोकत यथाऽवस्थं रूपि येनाखिलं जगत् । यथा पाणितलन्यस्तं विमलं स्फटिकोपलम् ॥ ४६ ॥
ततो विदितमेतेनापरतो लक्ष्मणो यथा । विक्रियां तु मनो नास्य गतं विच्छिन्नबंधनम् ॥ ४७॥
समा शतं कुमारत्वे मंडलित्वे शतत्रयम् । चत्वारिंशच्च विजये यस्य संवत्सरा मताः ॥ ४८ ॥
एकादशसहस्राणि तथा पंचशतानि च । अब्दानां षष्टिरन्या च साम्राज्यं येन सेवितम् ॥४९॥
यौऽसौ वर्षसहस्राणि प्राप्य द्वादश योगिताम् । ऊनानि पंचविंशत्या वितृप्तिरवरं गतः ॥ ५० ॥

देवयोस्तत्र नो द्वेषः सर्वाकारेण विद्यते । तथा हि प्राप्तकालोऽयं भ्रातृमृत्युव्यपदेशतः ॥ ५१ ॥
अनेकं मम तस्यापि विविधं जन्म तद्गतम् । वसुदत्तादिकं मोहपरायत्तितचेतसः ॥ ५२ ॥
एवं सर्वमतिक्रान्तमज्ञासीत्पद्मसंयतः । धैर्यमत्युत्तमं बिभ्रद्व्रतशीलधराधरः ॥ ५३ ॥
परया लेश्यया युक्तो गंभीरो गुणसागरः । बभूव स महाचेताः सिद्धिलक्ष्मीपरायणः ॥ ५४ ॥
युष्मानपि वदाम्यस्मिन् सर्वानिह समागतान् । रमध्व तत्र सन्मार्गे रतो यत्र रघूत्तमः ॥ ५५ ॥
जैने शक्त्या च भक्त्या च शासने संगतत्पराः । जना बिभ्रति लभ्यार्थं जन्म मुक्तिपदान्तिकम् ॥
जिनाक्षग्महारत्ननिधानं प्राप्य भो जनाः । कुलिंगसमयं सर्वं परित्यजत दुःखदम् ॥ ५७ ॥
कुग्रन्थैर्मोहितात्मानः सदंभकलुषक्रियाः । जात्यंधा इव गच्छन्ति त्यक्त्वा कल्याणमन्यतः ५८
नानोपकरणं दृष्ट्वा साधनं शक्तिवर्जिताः । निर्दोषमिति भाषित्वा गृह्णते मुखराः परे ॥ ५९ ॥
व्यर्थमेव कुलिंगास्ते मूढैरन्यैः पुरस्कृताः । प्रखिन्नतनवो भारं वहन्ति मृतका इव ॥ ६० ॥

ऋषयस्ते खलु येषां परिग्रहे नास्ति याचने वा बुद्धिः ।
तस्मात्ते निर्ग्रन्थाः साधुगुणैरन्विता बुधैः संसेव्याः ॥ ६१ ॥

श्रुत्वा बलदेवस्य त्यक्त्वा भोगं परं विमुक्तिग्रहणम् ।
भवत भवभावशिथिला व्यसनरवेस्तापमाप्नुत न पुनर्यस्मात् ॥ ६२ ॥

इति श्रीपद्मपुराणे श्रीरविषेणाऽऽचार्यप्रणीते बलदेवनिष्क्रमणाभिधानं नाम एकोनविंशोत्तरशतं पर्व ११९

---

# अथ विंशोत्तरशतं पर्व ।

एवमादीन् गुणान् राजन् बलदेवस्य योगिनः । धरणोऽप्यक्षमो वक्तुं जिह्वाकोटिविकारगः ॥१॥
उपोष्य द्वादशं सोऽथ धीरो विधिसमन्वितः । नंदस्थलीं पुरीं भेजे पारणार्थं महातपाः ॥ २ ॥
तरुणं तरणिर्दीप्त्या द्वितीयमिव भूधरम् । अन्यं दाक्षायणीनाथमगम्यमिव भास्वतः ॥ ३ ॥
वीध्रस्फटिकसंशुद्धहृदयं पुरुषोत्तमम् । मूर्त्यैव संगतं धर्ममनुरागं त्रिलोकगम् ॥ ४ ॥
आनंदमिव सर्वेषां गत्त्वैकत्त्वमिव स्थितम् । महाकांतिप्रवाहेण प्लावयन्तमिव क्षितिम् ॥ ५ ॥
धवलांभोजखंडानां पूरयन्तमिवांबरम् । तं वीक्ष्य नगरीलोकः समस्तः क्षोभमागतः ॥ ६ ॥
अहो चित्रमहो चित्रं भो भो पश्यत पश्यत । अदृष्टपरमीदृक्षमाकारं भुवनातिगम् ॥ ७ ॥

अयं कोऽपि महोक्षे ( हाख्ये ) ति आयातीह सुसुंदरः । प्रलंबदोर्युगः श्रीमानपूर्वनरमंदरः ॥८॥
अहो धैर्यमहो सत्त्वमहो रूपमहो द्युतिः । अहो कान्तिरहो शान्तिरहो मुक्तिरहो गतिः ॥ ९ ॥
कोऽयमीदृक्कुतः कस्मिन् समभ्येति मनोहरः । युगान्तरास्थिरन्यस्तशान्तदृष्टिः समाहितः ॥१०॥
उदारपुण्यमेतेन कतरन्मंडितं कुलम् । कुर्यादनुग्रहं कस्य गृह्णाणोऽन्नं सुकर्मणः ॥ ११ ॥
सुरेन्द्रसदृशं रूपं कुतोऽत्र भुवने परम् । अक्षोभ्यसत्त्वशैलोऽयं रामः पुरुषसत्तमः ॥ १२ ॥
एतैत चेतसो दृष्टेर्जन्मनः कर्मणो मते । कुरुध्वं चरितार्थत्वं देहस्य चरितस्य च ॥ १३ ॥
इतिदर्शनसक्तानां पौराणां पुरुविस्मयः । समाकुलः समुत्तस्थौ रमणीयः परं ध्वनिः ॥ १४ ॥
प्रविष्टे नगरीं रामे यथासमयचेष्टितैः । नारीपुरुषसंघातै रथ्याः मार्गाः प्रपूरिताः ॥ १५ ॥
विचित्रभक्ष्यसंपूर्णपात्रहस्ताः समुत्सुकाः । प्रवराः प्रमदास्तस्थुः गृहीतकरकांभसः ॥ १६ ॥
दृढं परिकरं बद्धा मनोज्ञजलपूरितम् । आदाय कलशं पूर्णमाजग्मुर्बहवो नराः ॥ १७ ॥
इतः स्वामिन्नितः स्वामिन् स्थीयतामिह सन्मुने । प्रासादाद्भूयतामत्र विचेरुरिति सद्गिरः १८
अमाति हृदये हर्षे हृष्टदेहरुहोऽपरे । उत्क्रुष्टक्ष्वेडितास्फोटसिंहनादानजीवनन् ॥ १९ ॥
मुनीन्द्र जय वर्द्धस्व नन्द पुन्यमहीधर । एवं च पुनरुक्ताभिर्वाग्भिरापूरितं नभः ॥ २० ॥

अमत्रमानय क्षिप्रं स्थालमालोकय द्रुतम् । जांबूनदमयीं पात्रीमवलंबितमाहर ॥ २१ ॥
क्षीरमानीयतामिक्षुः सन्निधीक्रियतां दधि । राजते भाजने भव्ये लघु स्थापय पायसम् ॥ २२ ॥
शर्करां कर्करां कर्कामरं कुरु करंडके । कर्पूरपूरितां क्षिप्रं पूरकापटलं नय ॥ २३ ॥
रमालां कलशे सारां तरमा विधिवद्धिते । मोदकां परमोदारां प्रमोदाद्देहि दक्षिणे ॥ २४ ॥
एवमादिभिरालापैराकुलैः कुलयोषिताम् । पुरुषाणां च तन्मध्ये पुरमासीत्तदात्मकम् ॥ २५ ॥
अतिपात्यपि नो कार्यं मन्यते, नार्भका अपि—आलोक्यंते तदा तत्र सुमहासंभ्रमैर्जनैः ॥ २६ ॥
वेगिभिः पुरुषैः कैश्चिदागच्छद्भिः सुसंकटे । पात्यन्ते विशिखामार्गे जना भाजनपाणयः ॥२७॥
एवमत्युन्नतस्वान्तं कृतसंभ्रान्तचेष्टितम् । उन्मत्तमिव संवृत्तं नगरं तत्समंततः ॥ २८ ॥
कोलाहलेन लोकस्य यतस्तेन च तेजसा । आलानविपुलस्तंभान् बभंजुः कुंजरा अपि ॥ २९ ॥
तेषां कपोलपालीषु पालिता विपुलाश्चिरम् । प्लावयन्तः पयःपूरा गंडश्रोत्रविनिर्गताः ॥ ३० ॥
उत्कर्णनेत्रमध्यस्थतारकाः कवलत्यजः । उद्ग्रीवा वाजिनस्तस्थुः कृतगंभीरहेषिताः ॥ ३१ ॥
आकुलाध्यक्षलोकेन कृतातुरा गताः परे । चक्रुरत्याकुलं लोकं त्रस्तास्त्रुटितबंधनाः ॥ ३२ ॥
एवंविधो जनो यावदभवद्दानतत्परः । परस्परमहाक्षोभपरिपूरणचंचलः ॥ ३३ ॥

तावच्छ्रुत्वा घनं घोरं क्षुब्धसागरसम्मितम् । प्रासादान्तर्गतो राजा प्रतिनंदीत्यनंदितः ॥ ३४ ॥
सहसा क्षोभमापन्नः किमेतदिति सत्वरम् । हर्म्यमूर्द्धानमारुक्षत्परिच्छदसमन्वितः ॥ ३५ ॥
ततः प्रधानसाधुं तं वीक्ष्य लोकविशेषकम् । कलंकपंकनिर्मुक्तशशांकधवलच्छविम् ॥ ३६ ॥
आज्ञापयद्बहून् वीरान् यथैनं मुनिसत्तमम् । व्यतिपत्य द्रुतं प्रीत्या परिप्रापयतात्र मे ॥ ३७ ॥
यदाज्ञापयति स्वामीत्युक्त्वा प्रव्रजितास्ततः । राजमानवसिंहास्ते समुत्सारितजन्तवः ॥ ३८ ॥
गत्वा व्यज्ञापयन्नेवं मस्तकन्यस्तपाणयः । मुनिं मधुरवाणीकास्तत्कान्तिहृतचेतसः ॥ ३९ ॥
भगवन्नीक्षितं वस्तु गृहाणेत्यस्मदीश्वरः । विज्ञापयति भक्त्या त्वां सदनं तस्य गम्यताम् ॥४०॥
अपथ्येन विवर्णेन विरसेन रसेन च । पृथग्जनप्रणीतेन किमनेन तवांधसा ॥ ४१ ॥
एह्यागच्छ महासाधो प्रसादं कुरु याचितः । अन्नं यथेप्सितं स्वैरमुपभुङ्क्ष्व निराकुलम् ॥४२॥
इत्युक्त्वा दातुमुद्युक्ता भिक्षां प्रवरयोषितः । विषण्णचेतसो राजपुरुषैरपसारिताः ॥ ४३ ॥
उपचारप्रकारेण जातं ज्ञात्वान्तरायकम् । राजपौरान्नतः साधुः सर्वतोऽभूत्पराङ्मुखः ॥ ४४ ॥
नगर्यास्तत्र निर्याति यतावतियतात्मनि । पूर्वस्मादपि संजातः संक्षोभः परमो जने ॥ ४५ ॥
उत्कंठाकुलहृदयं कृत्वा लोकं समस्तं समुखम् ( समस्त सुखसंगः ) ।

गत्वा श्रमणोऽरण्यं गहनं नक्तं समाचचार प्रतिमाम् ॥ ४६ ॥
दृष्ट्वा तथाविधं तं पुरुषरविं चारुचेष्टितं नयनहरम् ।
जाते पुनर्वियोगे तिर्यञ्चोऽप्युत्तमामधृतिमाजग्मुः ॥ ४७ ॥

इति पद्मपुराणे श्रीरविषेणाचार्यप्रोक्ते पुरसंक्षोभाभिधानं नाम विंशोत्तरशतं पर्व ॥ १२० ॥

---

# अथैकविंशोत्तरशतं पर्व ।

अथ द्वादशमादाय द्वितीयं मुनिपुंगवः । सहिष्णुरितरागम्यं चकार समवग्रहम् ॥ १ ॥
अस्मिन्मृगकुलाकीर्णे वने या मम जायते । भिक्षा तामेव गृह्णामि संनिवेशं विशामि न ॥ २ ॥
इति तत्र समारूढे मुनौ घोरमुपग्रहे । दुष्टाश्वेन हृतो राजा प्रतिनंदी प्रभृतिना ॥ ३ ॥
अन्विष्यन्ती जनौघेभ्यो हृतिमार्गं समाकुला । स्थूरीपृष्टसमारूढा महिषी प्रभवाह्वया ॥ ४ ॥
किं भवेदिति भूयिष्ठं चिन्तयन्ती त्वरावती । प्रातिष्ठतानुमार्गेण भटचक्रसमन्विता ॥ ५ ॥
ह्रियमाणस्य भूपस्य सरः संवृत्तमन्तरे । तत्र पंके ययुर्मग्नः कलत्र इव गेहिकः ॥ ६ ॥

ततः प्राप्ता वरारोहा वीक्ष्य पद्मादिमत्सरः । किंचित्स्मिताननाऽवोचत्साध्वेवाश्वो नृपाविधत् ॥७॥
अपाहरिष्यथा नो चेद्दक्ष्यत ततः कुतः । सरो नंदनपुण्याक्षमभिकांक्षितदर्शनम् ॥ ८ ॥
सफलोद्यानयात्राऽथो याता यत्सुमनोहरम् । वनान्तरमिदं दृष्टमासेचनकदर्शनम् ॥ ९ ॥
इति नर्मपरं कृत्वा जल्पितं प्रियसंगता । सखीजनावृता तस्थौ सरसस्तस्य रोधिता ॥ १० ॥
प्रक्रीड्य विमले तोये विधाय कुसुमोच्चयम् । परस्परमलंकृत्य दंपती भोजने स्थितौ ॥ ११ ॥
एतस्मिन्नन्तरे साधुरुपवासविधिं गतः । तयोः सन्निधिमासीदत्क्रियामार्गविशारदः ॥ १२ ॥
तं समीक्ष्य समुद्भूतप्रमदः पुलकान्वितः । अभ्युत्तस्थौ सपत्नीको राजा परमसंभ्रमः ॥ १३ ॥
प्रणम्य स्थीयतामत्र भगवन्निति शब्दवान् । संशोध्य भूतलं चक्रे कमलादिभिरर्चितम् ॥ १४ ॥
सुगंधिजलसंपूर्णं पात्रमुद्धृत्य भामिनी । देवी वारि ददौ राजा पादावक्षालयन्मुनेः ॥ १५ ॥
शुचिश्चामोदसर्वाङ्गस्ततो राजा महादरः । क्षैरेयादिकमाहारं सद्गंधरसदर्शनम् ॥ १६ ॥
हेमपात्रगतं कृत्वा श्रद्धया परयान्वितः । श्राद्धं स्म परिवेवेष्टि पात्रे परममुत्तमे ॥ १७ ॥
ततोऽन्नं दीयमानं तद्वृद्धिमेत्यभिभाजनम् । सुदानकारणादार्द्रं मनोरथगुणोपमम् ॥ १८ ॥
तुष्ट्यादिभिर्गुणैर्युक्तं ज्ञात्वा दातारमुत्तमम् । प्रहृष्टमनसो देवा विहायस्यभ्यनंदयन् ॥ १९ ॥

अनुकूलो ववौ वायुः पंचवर्णां सुसौरभाम् । पुष्पवृष्टिममुंचन्त प्रमथाः प्रमदान्विताः ॥ २० ॥
चित्रश्रोत्रहरो जज्ञे पुष्करे दुंदुभिस्वनः । अप्सरोगणसंगीतप्रवरध्वनिसंगतः ॥ २१ ॥
तुष्टाः कन्दर्पिणो देवाः कृतानेकविधस्वनाः । चकार बहुलं व्योम्नि ननृतुश्च समाकुलम् ॥ २२ ॥
अहो दानमहो दानमहो पात्रमहो विधिः । अहो देयमहो दाता साधु साधु परं कृतम् ॥ २३ ॥
वर्द्धस्व जय नंदेतिप्रभृतिः परमाकुलः । विहायोमंडपव्यापी निःस्वनस्त्रैदशोऽभवत् ॥ २४ ॥
नानारत्नसुवर्णादिपरमद्रविणात्मिका । पपात वसुधारा च द्योतयन्ती दिशो दश ॥ २५ ॥
पूजामवाप्य देवेभ्यो मुनेर्देशव्रतानि च । विशुद्धदर्शनो राजा पृथिव्यामाप गौरवम् ॥ २६ ॥

एवं सुदानं ( नी ) विनयो ( यी ) सुपात्रे भक्तिप्रणम्रो नृपतिः स्मजानिः ? ( सराज्ञिः )
वहन्नितान्तं परमं प्रमोदं मनुष्यजन्माऽऽप्तफलं विवेद ॥ २७ ॥
रामोऽपि कृत्वा समयोदितार्थं विविक्तशय्यासनमध्यवर्त्ती ।
तपोऽतिदीप्तो विजहार युक्तं महीं रविः प्राप्त इव द्वितीयः ॥ २८ ॥

इति श्रीपद्मपुराणे श्रीरविषेणाचार्यप्रोक्ते दानप्रसंगाभिधानं नामैकविंशोत्तरशतं पर्व ॥ १२१ ॥

# अथ द्वाविंशत्युत्तरशतं पर्व ।

भगवान्बलदेवोऽसौ प्रशान्तरतिमत्सरः । अत्युन्नतं तपश्चक्रे सामान्यजनदुःसहम् ॥ १ ॥
अष्टम्याद्युपवासस्थः स्वमध्यस्थे विरोचने । पर्युपास्यत गोपाद्यैररण्ये गोचरं भ्रमन् ॥ २ ॥
व्रतगुप्तिसमित्याद्यः समयज्ञो जितेन्द्रियः । साधुवात्सल्यसंपन्नः स्वाध्यायनिरतः सुकृत् ॥ ३ ॥
लब्धानेकमहालब्धिरपि निर्विक्रियः परः । परीषहभटं मोहं पराजेतुं समुद्यतः ॥ ४ ॥
तपोऽनुभावतः शान्तैर्व्याघ्रैः सिंहैश्च वीक्षितः । विस्तारिलोचनोद्ग्रीवैर्मृगाणां च कदम्बकैः ॥५॥
निःश्रेयसगतस्वान्तः स्पृहाशक्तिविवर्जितः । प्रयत्नपरमं मार्गे विजहार वनान्तरे ॥ ६ ॥
शिलातलस्थितो जानुपङ्कासनसंस्थितः । ध्यानान्तरं विवेशासौ भानुर्मेघान्तरं यथा ॥ ७ ॥
मनोज्ञे क्वचिदुद्देशे प्रलंबितमहाभुजः । अस्थान्मंदरनिष्कम्पचित्तः प्रतिमया प्रभुः ॥ ८ ॥
युगान्तवीक्षणः श्रीमान् प्रशान्तो विहरन् क्वचित् । वनस्पतिनिवासाभिः सुरस्त्रीभिरपूज्यत ॥९॥
एवं निरुपमात्मासौ तपश्चक्रे तथाविधम् । कालेऽस्मिन् दुःषमे शक्यं ध्यातुमप्यपरैर्न यत् ॥१०॥
ततोऽसौ विहरन् साधुः प्राप्तकोटिशिलां क्रमात् । नमस्कृत्योद्धृता पूर्वं भुजाभ्यां लक्ष्मणेन या ॥

महात्मा तां समारुह्य प्रच्छिन्नस्नेहबंधनः । तस्थौ प्रतिमया रात्रौ कर्मक्षपणकोविदः ॥ १२ ॥
अथासावच्युतेन्द्रेण प्रत्युक्तावधिचक्षुषा । उदारस्नेहयुक्तेन सीतापूर्वेण वीक्षितः ॥ १३ ॥
आत्मनो भवसंवर्त्तं संस्मृत्य च यथाक्रमम् । जिनशासनमार्गस्य प्रभवं च महोत्तमम् ॥ १४ ॥
दध्यौ सोऽयं नराधीशो रामो भुवनभूषणः । योऽभवन्मानुषे लोके स्त्रीभूतायाः पतिर्मम ॥१५॥
पश्य कर्मविचित्रत्वान्मानसस्य विचेष्टितम् । अन्यथाकांक्षितं पूर्वमन्यथा कांक्ष्यतेऽधुना ॥ १६ ॥
कर्मणः पश्यताधानं ही शुभाशुभयोः पृथक् । विचित्रं जन्म लोकस्य यत्साक्षादिदमीक्ष्यते ॥१७॥
जगतो विस्मयकरौ सीरिचक्रायुधाविमौ । जातावूर्द्धाधरस्थानभाजावुचितकर्मतः ॥ १८ ॥
एकः प्रक्षीणसंसारो ज्येष्ठश्चरमदेहधृक् । द्वितीयः पूर्णसंसारो निरये दुःखितोऽभवत् ॥ १९ ॥
विषयैरवितृप्तात्मा लक्ष्मणो दिव्यमानुषैः । अधोलोकमनुप्राप्तः कृतपापोऽभिमानतः ॥ २० ॥
राजीवलोचनः श्रीमानेषोऽसौ लांगलायुधः । विप्रयोगेन सौमित्रेरुपेतः शरणं जिने ॥ २१ ॥
बहिःशत्रून्पराजित्य हलरत्नेन सुंदरः । इंद्रियाण्यधुना जेतुमुद्यतो ध्यानशक्तितः ॥ २२ ॥
तदस्य क्षपकश्रेणिमारूढस्य करोमि यत् । इह येन वयस्यो मे ध्यानभ्रष्टोऽभिजायते ॥ २३ ॥
ततोऽनेन सह प्रीत्या महामैत्रीसमुत्थया । मेरुं नन्दीश्वरं वाऽपि सुखं यास्यामि शोभया ॥२४॥

विमानशिखरारूढौ विभूत्या परयाऽन्वितौ । अन्योन्यं वेदयिष्यावो दुःखानि च सुखानि च २५
सौमित्रिमथ संप्राप्तमानेतुं प्रतिबुद्धताम् । सह तेनागमिष्यामि रामेणाक्लिष्टकर्मणा ॥ २६ ॥
इदमन्यच्च संचित्य सीतादेवः स्वयंप्रभः । सौधर्मकल्पमन्येन समागादारुणाच्युतात् ॥ २७ ॥
तत्रावतरति स्फीतं तन्मह्यां नंदनायते—वनं यत्र स्थितः साधुर्ध्यानयोगेन राघवः ॥ २८ ॥
बहुपुष्परजोवाही ववौ वायुः सुखावहः । कोलाहलरवो रम्यः पक्षिणां सर्वतोऽभवत् ॥ २९ ॥
प्रबलं चंचरीकाणां चंचलं बकुले कुलम् । प्रघुष्टं परपुष्टानां पुष्टं जुष्टं कदंबकैः ॥ ३० ॥
रुरुदुः सारिकाश्चारुनानास्वरविशारदाः । चिक्रीडुर्विशदश्वानाः शुकाः संप्राप्तकिंशुकाः ॥ ३१ ॥
मंजर्यः सहकाराणां विरेजुर्भ्रमरान्विताः । तारका इव संजाता नूतनाश्रित्तजन्मनः ॥ ३२ ॥
कुसुमैः कर्णिकाराणामरण्यं पिंजरीकृतम् । पीतपिष्टातकेनेव कर्तुं क्रीडनमुद्यतम् ॥ ३३ ॥
अनपेक्षितगंडूषमदिरानेकदौहृदः । ववृषे बकुलैः प्रावृट् नभोभवकुलैरिव ॥ ३४ ॥
जानकीवेषमास्थाय कामरूपः सुरोत्तमः । समीपं रामदेवस्य मंथरं गंतुमुद्यतः ॥ ३५ ॥
मनोऽभिरमणे तस्मिन् वने जनविवर्जिते । विचित्रपादपव्राते सर्वर्तुकुसुमाकुले ॥ ३६ ॥
सीता किल महाभागा पर्यटन्ती सुखं वनम् । अकस्मादग्रतः साधोः सुन्दरी समदृश्यत ॥ ३७॥

अवोचत च दृष्टोऽसि कथंचिदपि राघव । भ्रमन्त्या विष्टपं सर्वं मया पुण्येन भूरिणा ॥ ३८ ॥
विप्रयोगोर्मिसंकीर्णे स्नेहमंदाकिनीह्रदे । प्राप्तां सुवदनां नाथ मां संधारय सांप्रतम् ॥ ३९ ॥
विचेष्टितैः सुमिष्टोक्तैर्ज्ञात्वा मुनिमकंपनम् । मोहपापार्जितस्वान्ता पुरःपार्श्वानुवर्त्तिनी ॥ ४० ॥
मनोभवज्वरग्रस्ता वेपमानशरीरिका । स्फुरितारुणतुंगौष्ठी जगादैवं मनोरमा ॥ ४१ ॥
अहं देवासमीक्ष्यैव तदा पंडितमानिनी । दीक्षिता त्वां परित्यज्य विहरामि तपस्विनी ॥ ४२ ॥
सद्विद्याधरकन्याभिस्ततश्चास्मि हृता सती । अवोचे संविपश्चिद्भिरिदं विविधदर्शनैः ॥ ४३ ॥
अलं प्रव्रज्यया तावद्वयस्येव विरुद्धया । इयमत्यन्तवृद्धानां पूज्यते न तु नैष्ठिकी ॥ ४४ ॥
यौवनोद्या तनुः क्वेयं क्वेदं दुष्करं व्रतम् । बललक्ष्मणदीधित्या भिद्यते किं महीधरः ॥ ४५ ॥
गच्छामस्त्वां पुरस्कृत्य वयं सर्वाः समाहिताः । बलदेवं वरिष्यामस्तव देवि समाश्रयात् ॥४६॥
अस्माकमपि सर्वासां त्वमग्रमहिषी भव । क्रीडामः सह रामेण जंबूद्वीपतले सुखम् ॥ ४७ ॥
अत्रान्तरे समं प्राप्ता नानालंकारभूषिताः । भूयः सहस्रसंख्यानाः कन्या दिव्यश्रियान्विताः ४८
राजहंसवधूलीला मनोज्ञगतिविभ्रमाः । सीतेन्द्रविक्रियाजन्मा जग्मुः पद्मसमीपताम् ॥ ४९ ॥
वदन्त्यो मधुरं काश्चित्परपुष्टस्वनादपि । विरेजिरेतरां कन्याः साक्षाल्लक्ष्म्य इव स्थिताः ॥ ५० ॥

मनःप्रह्लादनकरं परं श्रोत्ररसायनम् । दिव्यं गेयामृतं चक्रुर्वंशवीणास्वनानुगम् ॥ ५१ ॥
भ्रमरासितकेश्यस्ताः क्षणांशुसमतेजसः । सुकुमारास्तलोदर्यः पीनोन्नतपयोधराः ॥ ५२ ॥
चारुशृंगारहासिन्यो नानावर्णसुवाससः । विचित्रविभ्रमालापाः कान्तिपूरितपुष्कराः ॥ ५३ ॥
कामयांचक्रिरे मोहं सर्वतोऽवस्थिता मुनेः । श्रीबाहुबलिनः पूर्वं यथा त्रिदशकन्यकाः ॥ ५४ ॥
आकृष्य बकुलं काचिच्छायाऽसौ चिन्वती क्वचित् । उद्वेजितालिचक्रेण श्रमणं शरणं स्थिता ५५
काश्चित्किल विषादेन कृतपक्षपरिग्रहाः । पप्रच्छुर्निर्णयं देव किंनामाऽयं वनस्पतिः ॥ ५६ ॥
दूरस्थमाधवीपुष्पग्रहणच्छद्मना परा । स्रंसमानांशुका बाहुमूलं क्षणमदर्शयत् ॥ ५७ ॥
आबध्य मंडलीमन्याश्चलिताकरपल्लवाः । सहस्रतालसंगीता रासकं दातुमुद्यताः ॥ ५८ ॥
नितंबफलके काचिदंभःस्वच्छारुणांशुके । चंडातकं नभो नीलं चकार किल लज्जया ॥ ५९ ॥
एवंविधक्रियाजालैरितरस्वान्तहारिभिः । अक्षोभ्यत न पद्माभः पवनैरिव मंदरः ॥ ६० ॥
ऋजुदृष्टिर्विशुद्धात्मा परीषहगणाशनिः । प्रविष्टो धवलं ध्यानप्रथमं सुप्रभो यथा ॥ ६१ ॥
तस्य सत्वपदन्यस्तं चित्तमत्यन्तनिर्मलम् । समेतमिन्द्रियैरासीदात्मनः प्रवणं परम् ॥ ६२ ॥
कुर्वन्तु वांछितं बाह्यक्रियाजालमनेकधा । प्रच्यवन्ते न तु स्वार्थात्परमार्थविचक्षणाः ॥ ६३ ॥

यदा सर्वप्रयत्नेन ध्यानप्रत्यूहलालसः । चेष्टां चकार सीतेन्द्रः सुरमायाविकल्पिताम् ॥ ६४ ॥
अत्रान्तरे मुनिः पूर्वमत्यन्तशुचिरागमत् । अनादिकर्मसंघातं विध्नुर्दग्धुं समुद्यतः ॥ ६५ ॥
कर्मणः प्रकृतीषष्टिं निषूद्य दृढनिश्चयः । क्षपकश्रेणिमारुक्षदुत्तरां पुरुषोत्तमः ॥ ६६ ॥
माघशुद्धस्य पक्षस्य द्वादश्यां निशि पश्चिमे । यामे केवलमुत्पन्नं ज्ञानं तस्य महात्मनः ॥ ६७ ॥
सर्वद्रव्यसमुद्भूते तस्य केवलचक्षुषि । लोकालोकद्वयं जातं गोष्पदप्रतिमं प्रभोः ॥ ६८ ॥
ततः सिंहासनाकंपप्रयुक्तावधिचक्षुषः । सप्रणामं सुराधीशाः प्रचेलुः संभ्रमान्विताः ॥ ६९ ॥
आजग्मुश्च महाभूत्या महासंघातवर्त्तिनः । विधातुमुद्यताः श्राद्धाः केवलोत्पत्तिपूजनम् ॥ ७० ॥
दृष्ट्वा रामं समासीनं घातिकर्मविनाशनम् । प्रणेमुर्भक्तिसंपन्नाश्चारणर्षिसुरासुराः ॥ ७१ ॥
तस्य जातात्मरूपस्य वंद्यस्य भुवनेश्वरैः । जातं समवसरणं समग्रं परमेष्ठिनः ॥ ७२ ॥
ततः स्वयंप्रभाभिख्यः सीतेन्द्रः केवलार्चनम् । कृत्वा प्रदक्षिणीकृत्य मुनिमक्षमयन्मुहुः ॥ ७३ ॥
क्षमस्व भगवन् दोषं कृतं दुर्बुद्धिना मया । प्रसीद कर्मणामंतं यच्छ मह्यमपि द्रुतम् ॥ ७४ ॥

एवमनन्तश्रीद्युति–कान्तियुतो नूनमनार्त्तमूर्त्तिर्भगवान् ।
कैवल्यसुखसमृद्धिं बलदेवोवाप्तवाञ्जिनोत्तमभक्त्या ॥ ७५ ॥

पूजामहिमानमरं कृत्वा स्तुत्वा प्रणम्य भक्त्या परया ।
प्रविहरति श्रमणरवौ जग्मुर्देवा यथाक्रमं प्रमदयुताः ॥ ७६ ॥

इति पद्मपुराणे श्रीरविषेणाचार्यप्रोक्ते पद्मस्य केवलोत्पत्त्यभिधानं नाम द्वाविंशोत्तरशतं पर्व ॥ १२२ ॥

---

# अथ त्रयोविंशोत्तरशतं पर्व ।

अथ संस्मृत्य सीतेन्द्रो लक्ष्मीधरगुणार्णवम् । प्रतिबोधयितुं वांछन् प्रतस्थे शर्कराप्रभाम् ॥ १ ॥
मानुषोत्तरमुल्लंघ्य गिरिं मर्त्यसुदुर्गमम् । रत्नप्रभामतिक्रम्य वालुकां चापि मेदिनीम् ॥ २ ॥
प्राप्तो ददर्श बीभत्सां कृच्छ्रातिशयदुःसहाम् । पापकर्मसमुद्भूतामवस्थां नरकश्रिताम् ॥ ३ ॥
असुरत्वं गतो योऽसौ शंबूको लक्ष्मणाहतः । व्याधदारकवत्सोऽत्र हिंसाक्रीडनमाश्रितः ॥ ४ ॥
आतृणेद् कांश्चिदुद्बाध्य कांश्चिद्भृत्यैरघातयत् । नारकानावृतान् कांश्चित्परस्परमयूयुधत् ॥ ५ ॥
केचिद्बधाग्निकुंडेषु क्षिप्यन्ते विकृतस्वराः । शाल्मलीषु नियुज्यन्ते केचित्प्रत्यंगकंटकम् ॥ ६ ॥
ताड्यन्तेऽयोमयैः केचिन्मुसलैरभितः स्थितैः । स्वमांसरुधिरं केचित्खाद्यन्ते निर्दयैः सुरैः ॥ ७ ॥

गाढप्रहारनिर्भिन्नाः कृतभूतललोठनाः । श्वमार्जारहरिव्याघ्रैर्भक्ष्यन्ते पक्षिभिस्तथा ॥ ८ ॥
केचिच्छूलेषु भिद्यन्ते ताड्यन्ते घनमुद्गरैः । कुंभ्यामन्ये निधीयन्ते ताम्रादिकलिलांभसि ॥ ९ ॥
करपत्रैर्विदार्यन्ते बद्धा दारुषु निश्चलाः । केचित्कैश्चिच्च पाय्यन्ते ताम्रादिकलिलं बलात् ॥१०॥
केचिद्यंत्रेषु पीड्यन्ते हन्यन्ते सायकैः परे । दन्ताक्षिरसनादीनां प्राप्नुवंत्युद्धृतिं परे ॥ ११ ॥
एवमादीनि दुःखानि विलोक्य नरकाश्रिताम् । उत्पन्नपुरुकारुण्यः सोऽभूदमरपुंगवः ॥ १२ ॥
अग्निकुंडाद्विनिर्यातमथालोकत लक्ष्मणम् । बहुधा नारकैरन्यैरर्द्यमानं समन्ततः ॥ १३ ॥
सीदन्तं विकृतग्राहे भीमे वैतरणीजले । छिद्यमानं च कनकैरसिपत्रवनान्तरे ॥ १४ ॥
वधाय चोद्यतं तस्य बाधमानं भयानकम् । क्रुद्धं वृहद्गदापाणिं हन्यमानं तथा परैः ॥ १५ ॥
प्रचोद्यमानं घोराक्षस्त्वदेहं द्वहन्मुखम् । तेन देवकुमारेण शंबूकेन दशाननम् ॥ १६ ॥
अत्रान्तरे महातेजाः सीतेन्द्रः सन्निधिं गतः । तर्जयन् तत्र तीव्रं तं गणं भवनवासिनाम् ॥१७॥
अरे ! रे ! पाप शंबूक प्रारब्धं किमिदं त्वया । कथमद्यापि ते नास्ति शमो निर्घृणचेतसः ॥१८॥
मुंच क्रूराणि कर्माणि भवस्वस्थः सुराधम । किमनेनाभिमानेन परमानर्थहेतुना ॥ १९ ॥
श्रुत्वेदं नारकं दुःखं जन्तोर्भयमुदीर्यते । प्रत्यक्षं किं पुनः कृत्वा त्रासस्तत्र न जायते ॥ २० ॥

शंबूके प्रशमं प्राप्ते ततोऽसौ विबुधेश्वरः । प्रबोधयितुमुद्युक्तो यावत्तावदमी द्रुतम् ॥ २१ ॥
अतिदारुणकर्माणश्चला दुर्ग्रहचेतसः । देवप्रभाभिभूताश्च नारकाः परिदुद्रुवुः ॥ २२ ॥
रुरुदुश्चापरे दीना धाराश्रुगलिताननाः । धावन्तः पतिताः केचिद्गर्तेषु विषमेष्वलम् ॥ २३ ॥
मा मा नश्यत संत्रस्ता निवर्त्तध्वं सुदुःखिताः । न भेतव्यं न भेतव्यं नारका भवत स्थिताः ॥२४॥
एवमुक्ताः सुरेन्द्रेण समाश्वासनचेतसा । प्राविक्षन्नन्धतमसं वेपमानाः समंततः ॥ २५ ॥
भण्यमानास्ततो भूयः शक्रेणेषद्भयोज्झिताः । इत्युक्तास्ते ततः कृच्छ्रादवधानमुपागताः ॥२६॥
महामोहहृतात्मानः कथं नरकसंभवाः । एतयाऽवस्थया युक्ता न जानीथाऽऽत्मनो हितम् ॥२७॥
अदृष्टलोकपर्यन्ता हिंसानृतपरस्विनः । रौद्रध्यानपराः प्राप्ता नरकस्थं प्रतिद्विषः ॥ २८ ॥
भोगाधिकारसंसक्तास्तीव्रक्रोधादिरंजिताः । विकर्मनिरता नित्यं संप्राप्ता दुःखमीदृशम् ॥ २९ ॥
रमणीये विमानाग्रे ततो वीक्ष्य सुरोत्तमम् । सौमित्रिरावणौ पूर्वमप्राष्टां को भवानिति ॥ ३० ॥
स तयोः सकलं वृत्तं पद्माभस्य तथाऽऽत्मनः । कर्मान्वितमभाषिष्ट विचित्रमिति संभवम् ॥ ३१ ॥
ततः श्रुत्वा स्ववृत्तान्तं प्रतिबोधमुपागतौ । उपशान्तात्मकौ दीनमेवं शुशुचतुस्तकौ ॥ ३२ ॥
धृतिः किं न कृता धर्मे तदा मानुषजन्मनि । अवस्थामिमकां येन प्राप्ताः स्मः पापकर्मभिः ॥३३॥

हा ! हा ! किं कृतमस्माभिरात्मदुःखपरं परम् । अहो मोहस्य माहात्म्यं यत्स्वार्थादपि हीयते ३४
त्वमेव धन्यो देवेन्द्र यस्त्यक्त्वा विषयस्पृहाम् । जिनवाक्यामृतं पीत्वा संप्राप्तोऽस्यमरेशताम् ३५
ततोऽसौ पुरुकारुण्यो मा भैष्टेति बहुस्वनम् । एतैत नरकान्नाकं नये युष्मानितीरयत् ॥ ३६ ॥
ततः परिकरं बध्वा ग्रहीतुं स्वयमुद्यतः । दुर्ग्रहास्तु विलीयन्ते तेऽग्निना नवनीतवत् ॥ ३७ ॥
सर्वोपायैरपीन्द्रेण ग्रहीतुं स्पष्टमेव च । न शक्यास्ते यथा भावाश्छायया दर्पणे स्थिताः ॥ ३८ ॥
ततस्तेऽत्यन्तदुःखार्त्ता जगदुर्देवयानिनः । पुराकृतानि कर्माणि तानि भोग्यान्यसंशयम् ॥३९॥
विषयामिषलुब्धानां प्राप्तानां नरकायुषम् । स्वकृतप्राप्तिवश्यानां किंकरिष्यन्ति देवताः ॥ ४० ॥
एतत्स्वोपचितं कर्म भोक्तव्यं यन्नियोगतः । तदास्माकं न शक्नोषि दुःखान्मोचयितुं सुर ॥ ४१ ॥
परित्रायस्व सीतेन्द्र नरकं येन हेतुना । प्राप्स्यामो न पुनर्ब्रूहि त्वमस्माकं दयापरः ॥ ४२ ॥
देवो जगाद परमं शाश्वतं शिवमुत्तमम् । रहस्यमिव मूढानां प्रख्यातं भुवनत्रये ॥ ४३ ॥
कर्मप्रमथनं शुद्धं पवित्रं परमार्थदम् । अप्राप्तपूर्वमाप्तं वा दुर्गृहीतं प्रमादिनाम् ॥ ४४ ॥
दुर्विज्ञेयमभव्यानां वृहद्भवभयानकम् । कल्याणं दुर्लभं सुष्ठु सम्यग्दर्शनमूर्जितम् ॥ ४५ ॥
यदीच्छतात्मनः श्रेयस्तत एवं गतेऽपि हि । सम्यक्त्वं प्रतिपद्यस्व काले बोधिप्रदं शुभम् ॥४६॥

इतोऽन्यदुत्तरं नास्ति न भूतं न भविष्यति । इह सेत्स्यन्ति सिद्ध्यन्ति सिषिधुश्च महर्षयः ॥४७॥
अर्हद्भिर्गदिता भावा भगवद्भिर्महोत्तमैः । तथैवेति दृढं भक्त्या सम्यग्दर्शनमिष्यते ॥ ४८ ॥
नयन्नित्यादिभिर्वाक्यैः सम्यक्त्वं नरके स्थितम् । सुरेन्द्रः शोचितुं लग्नस्तथाप्युत्तमभोगभाक् ४९
तद्रवं कान्तिलावण्यशरीरमतिसुन्दरम् । निर्दग्धं कर्मणा पश्य नवोद्यानमिवाग्निना ॥ ५० ॥
अचित्रीयत यां दृष्ट्वा भुवनं सकलं तदा । द्युतिः सा क्व गतोदात्ता चारुक्रीडितसंयुता ॥ ५१ ॥
कर्मभूमौ सुखाख्यस्य तस्य क्षुद्रस्य कारणे । ईदृग्दुखार्णवे मग्ना भवन्तो दुरितक्रियाः ॥ ५२ ॥
इत्युक्तैः प्रतिपन्नं तैः सम्यग्दर्शनमुत्तमम् । अनादिभवसंक्लिष्टैर्यन्न प्राप्तं कदाचन ॥ ५३ ॥
एतस्मिन्नंतरे दुःखमनुभूय निकाचितम् । उद्वृत्य प्राप्य मानुष्यमुपेमः शरणं जिनम् ॥ ५४ ॥
अहोऽतिपरमं देव त्वयाऽस्मभ्यं हितं कृतम् । यत्सम्यग्दर्शने रम्ये समेत्य विनियोजिताः ॥५५॥
हे सीतेन्द्र महाभाग ! गच्छ गच्छारुणाच्युतम् । शुद्धधर्मफलं स्फीतमनुभूय शिवं व्रज ॥ ५६ ॥
एवमुक्तः सुरेन्द्रोऽसौ शोकहेतुविवर्जितः । तथापि परमर्द्धिश्च सः शोचन्नान्तरात्मना ॥ ५७ ॥
दत्त्वा तेषां समाधानं पुनर्बोधिप्रदं शुभम् । महासुकृतभाग्धीरः समारोहन्निजास्पदम् ॥ ५८ ॥
शंकितात्मा च संवृत्तश्चतुःशरणतत्परः । बहुशश्च करोति स्म पंचमेरुप्रदक्षिणम् ॥ ५९ ॥

तद्वीक्ष्य नारकं दुःखं स्मृत्वा च विबुधोत्तमः । वेपितात्मा विमानेऽपि ध्वनिमालब्ध तं सुधीः ॥
प्रकंपमानहृदयः श्रीमच्चन्द्रनिभाननः । उद्युक्तो भरतक्षेत्रे भूयोऽवतरितुं सुधीः ॥ ६१ ॥
संपतद्भिर्विमानौघैः समीरसमवर्त्तिभिः । तुरंगमहरिक्षीबमतंगजघटाकुलैः ॥ ६२ ॥
नानावर्णांबरधरैर्हारिस्रङ्मुकुटोज्ज्वलैः । विचित्रवाहनारूढैर्ध्वजच्छत्रातिशोभितैः ॥ ६३ ॥
शतघ्नीशक्तिचक्रासिधनुःकुन्तगदाधरैः । व्रजद्भिः सर्वतः कान्तैरमरैः साप्सरोगणैः ॥ ६४ ॥
मृदंगदुंदुभिस्वानैर्वेणुवीणास्वनान्वितैः । जयनंदरवोन्मिश्रैरापूर्यत तदा नभः ॥ ६५ ॥
जगाम शरणं पद्मं सीतेन्द्रः परमोदयः । कृतांजलिपुटो भक्त्या प्रणनाम पुनः पुनः ॥ ६६ ॥
एवं च स्तवनं कर्तुमारेभे विनयान्वितः । संसारतारणोपायप्रतिपत्तिदृढाशयः ॥ ६७ ॥
ध्यानमारुतयुक्तेन तपः संधुक्षितात्मना । त्वया जन्माटवी दग्धा दीप्तेन ज्ञानवह्निना ॥ ६८ ॥
शुद्धलेश्यात्रिशूलेन मोहनीयरिपुर्हतः । दृढं वैराग्यवज्रेण चूर्णितं स्नेहपंजरम् ॥ ६९ ॥
संशये वर्त्तमानस्य भवारण्यविवर्त्तिनः । शरणं भवने नाथ मुनीन्द्र भवसूदन ॥ ७० ॥
लब्धलब्धव्य ! सर्वज्ञ ! कृतकृत्य ! जगद्गुरो । परित्रायस्व पद्माभ मामत्याकुलमानसम् ॥ ७१ ॥
मुनिसुव्रतनाथस्य सम्यगासेव्य शासनम् । संसारसागरस्य त्वं गतोऽन्तं तपसोरुणा ॥ ७२ ॥

राम युक्तं किमेतत्ते यदत्यन्तं विहाय माम् । एकेन गम्यते तुंगममलं पदमच्युतम् ॥ ७३ ॥
ततो मुनीश्वरोऽवोचन्मुंच रागं सुराधिप । मुक्तिवैराग्यनिष्ठस्य रागिणो भवमज्जनम् ॥ ७४ ॥
अवलंब्य शिलां कण्ठे दोर्भ्यां तर्तुं न शक्यते । नदी तद्वन्न रागाद्यैस्तरितुं संसृतिः क्षमा ॥ ७५ ॥
ज्ञानशीलगुणासंगैस्तीर्यते भवसागरः । ज्ञानानुगतचित्तेन गुरुवाक्यानुवर्त्तिना ॥ ७६ ॥
आदिमध्यावसानेषु वेदितव्यमिदं बुधैः । सर्वेषां यान्महातेजाः केवली ग्रसते गुणान् ॥ ७७ ॥
अतः परं प्रवक्ष्यामि यच्चान्यत्कारणं नृप । सीतादेवो यदप्राक्षीद्भाषे यच्च केवली ॥ ७८ ॥
क्वैते नाथ समस्तज्ञ भव्या दशरथादयः । लवणांकुशयोः का वा दृष्टा नाथ त्वया गतिः ॥ ७९ ॥
सोऽवोचदानते कल्पे देवो दशरथोऽभवत् । केकया कैकसी चैव सुप्रजाश्चापराजिता ॥ ८० ॥
जनकः कनकश्चैव सम्यग्दर्शनतत्परः । एते स्वशक्तियोगेन कर्मणा तुल्यभूतयः ॥ ८१ ॥
ज्ञानदर्शनतुल्यौ द्वौ श्रमणौ लवणांकुशौ । विरजस्कौ महाभागौ यास्यतः पदमक्षयम् ॥ ८२ ॥
इत्युक्ते हर्षतोऽत्यन्तममरेन्द्रो महाधृतिः । संस्मृत्य भ्रातरं स्नेहादपृच्छत्तस्य चेष्टितम् ॥ ८३ ॥
भ्राता तवापि इत्युक्ते सीतेन्द्रो दुःखितोऽभवत् । कृतांजलिपुटोऽपृच्छज्जातः क्वेति मुनीश्वर ॥८४॥
पद्मनाभस्ततोऽवोचदच्युतेन्द्र मतं शृणु । चेष्टितेन गतो येन यत्पदं तव सोदरः ॥ ८५ ॥

अयोध्यायां कुलपतिर्बहुकोटिधनेश्वरः । मकरीदयिता (तः) कामभोगवज्रांगसंज्ञकः ॥ ८६ ॥
अतिक्रान्तो बहुसुतैः पार्थिवोपमविभ्रमः । श्रुत्वा निर्वासितां सीतामिति चिन्तासमाश्रितः ॥८७॥
साऽत्यन्तसुकुमारांगा गुणैर्दिव्यैरलंकृताः । कान्तु प्राप्ता वनेऽवस्थामिति दुःखी ततोऽभवत् ८८
स्थितार्द्रहृदयश्चासौ वैराग्यं परमाश्रितः । द्युतिसंज्ञमुनेः पार्श्वे निष्कान्तो द्विष्टसंसृतिः ॥ ८९ ॥
अशोकतिलकाभिख्यौ विनीतौ तस्य पुत्रकौ । निमित्तज्ञं द्युतिं प्रष्टुं पितरं जातुचिद्गतौ ॥ ९० ॥
तत्रैव च तमालोक्य स्नेहाद्वैराग्यतोऽपि च । द्युतिमूले व्यतिक्रान्तावशोकतिलकावपि ॥ ९१ ॥
द्युतिः परं तपः कृत्वा प्राप्य संक्षयमायुषः । दत्त्वा सानुजनोत्कंठामूर्द्धग्रैवेयकं गतः ॥ ९२ ॥
यथा गुरुसमादिष्टं पिता पुत्रास्त्रयस्तु ते । ताम्रचूडपुरं प्राप्तौ प्रस्थितौ वंदितुं जिनम् ॥ ९३ ॥
पंचाशद्योजनं तत्र सिकतार्णवमीयुषाम् । अप्राप्तानां च तावन्तं घनकालः समागतः ॥ ९४ ॥
तत्रैकं दुर्लभं प्राप्य प्रान्तदीनोच्चयोपमम् । बहुशाखोपशाखाढ्यमनोकहमिमे स्थिताः ॥ ९५ ॥
ततो जनकपुत्रेण व्रजता कोशलां पुरीम् । दृष्टास्ते मानसे चास्य जातमेतत्सुकर्मणः ॥ ९६ ॥
इमे समयरक्षार्थमिहास्थुर्विजने घने । प्राणसाधारणोचारं कर्त्तारः क्व नु साधवः ॥ ९७ ॥
इति संचिन्त्य चात्यन्तनिकटं परमं पुरम् । कृतं सविषसंपन्नं सद्विद्योदारशक्तिना ॥ ९८ ॥

स्थाने स्थाने च घोषाद्यसन्निवेशानदर्शयत् । स्वभावार्पितरूपश्च प्राणमद्विनयी मुनीन् ॥ ९९ ॥
काले देशे च भावेन सतां गोचरमागताम् । पर्युपास्त यथान्यायं संमदी परिवर्गवान् ॥ १०० ॥
पुनश्चानुदकेऽरण्ये पर्युपासिष्ट संयतान् । अन्यांश्च भुवि संक्लिष्टान् साधूनक्लिष्टसंयमान् ॥१०१॥
तस्य सागरवाणिज्यसेवका मुक्तिभावने । दृष्टान्तत्वेन वक्तव्यास्तस्य धर्मानुरागिणः ॥ १०२ ॥
अन्यदोद्यानप्राप्तोऽसौ यथासुखमवस्थितः । शयने श्रीमान्मालिन्या पविना कालमाहृतः १०३
ततः साधुप्रदानोत्थपुण्यतो मेरुदक्षिणे । कुरौ जातस्त्रिपल्यायुर्दिव्यलक्षणभूषितः ॥ १०४ ॥
पात्रदानफलं तत्र महाविपुलतां गतम् । समं सुन्दरमालिन्या भुंक्तेऽसौ परमद्युतिः ॥ १०५ ॥
पात्रभूतान्नदानाच्च शक्त्याढ्यास्तर्पयन्ति ये । ते भोगभूमिमासाद्य प्राप्नुवन्ति परं पदम् ॥१०६॥
स्वर्गे भोगं प्रभुंजन्ति भोगभूमेश्च्युता नराः । तत्रस्थानां स्वभावोऽयं दानैर्भोगस्य संपदः॥१०७॥
दानतो भोगप्राप्तिश्च स्वर्गमोक्षैककारणम् । इति श्रुत्वा पुनः पृष्टो रावणो वालुकां गतः ॥१०८॥
तथा नारायणो ज्ञातो लक्ष्मणोऽधोगतिं गतः । उत्थाय दुरितस्यान्ते नाथ कोऽनुभविष्यति १०९
प्रापत्स्यते गतिं कां वा दशाननचरोपमम् । को नु वाऽहं भविष्यामीत्येवमिच्छामि वेदितुम् ११०
इति सोऽयं प्रभोः प्रश्नं कृत्वा विदितचेतसि । सर्वज्ञो वचनं प्राह भविष्यद्भवसंभवम् ॥ १११ ॥

भविष्यतः स्वकर्माभ्युदयौ रावणलक्ष्मणौ । तृतीयनरकादेत्य अनुपूर्वाच्च मंदरात् ॥ ११२ ॥
श्रृणु सीतेन्द्र निर्जित्य दुःखं नरकसंभवम् । नगर्यां विजयावत्यां मनुष्यत्वेन चाप्स्यते ॥ ११३ ॥
गृहिण्यां रोहिणी नाम्न्यां सुनंदस्य कुटुम्बिनः । सम्यग्दृष्टेः प्रियौ पुत्रौ क्रमेणैतौ भविष्यतः ११४
अर्हद्दासर्षिदासाख्यौ वेदितव्यौ च सद्गुणैः । अत्यन्तमहचेतस्कौ श्लाघनीयक्रियापरौ ॥११५॥
पंचेन्द्रियसुखं तत्र चिरं प्राप्य मनोहरम् । च्युत्वा भूयश्च तत्रैव जनिष्येते महाकुले ॥ ११६ ॥
सद्दानेन हरिक्षेत्रं प्राप्य च त्रिदिवं गतौ । प्रच्युतौ पुरि तत्रैव नृपपुत्रौ भविष्यतः ॥ ११७ ॥
ततः कुमारकीर्त्याख्यौ लक्ष्मीस्तु जननी तयोः । वीरौ कुमारकावेतौ जयकांतजयप्रभौ ॥११८॥
ततः परं तपः कृत्वा लान्तवं कल्पमाश्रितौ । विबुधोत्तमतां गत्वा भोक्ष्येते तद्भवं सुखम् ११९
त्वमत्र भरतक्षेत्रे च्युतः सन्नारणाच्युतात् । सर्वरत्नपतिः श्रीमान् चक्रवर्त्ती भविष्यसि ॥ १२० ॥
तौ च स्वर्गच्युतौ देवौ पुण्यनिस्यन्दतेजसा । इंन्द्रांभोदरथाभिख्यौ तव पुत्रौ भविष्यतः ॥१२१॥
आसीत्प्रतिरिपुर्योऽसौ दशवक्त्रो महाबलः । येनेमे भारते वास्ये त्रयः खंडा वशीकृताः ॥१२२॥
न कामयेत्परस्य स्त्रीमकामामिति निश्चियः । अपि जीवितमत्याक्षीत्तत्सत्यमनुपालयन् ॥ १२३ ॥
सोऽयमिन्द्ररथाभिख्यो भूत्वा धर्मपरायणः । प्राप्य श्रेष्ठान् भवान् कांश्चित्तिर्यङ्नरकवर्जितान् ॥

स मानुष्यं समासाद्य दुर्लभं सर्वदेहिनाम् । तीर्थकृत्कर्मसंघातमर्जयिष्यति पुण्यवान् ॥ १२५ ॥
ततोऽनुक्रमतः पूजामवाप्य भुवनत्रयात् । मोहादिशत्रुसंघातं निहत्यार्हतमाप्स्यति ॥ १२६ ॥
रत्नस्थलपुरे कृत्वा राज्यं चक्ररथस्त्वसौ । वैजयन्तेऽहमिन्द्रत्वमवाप्स्यति तपोबलात् ॥ १२७ ॥
सत्वं तस्य जिनेन्द्रस्य प्रच्युतः स्वर्गलोकतः । आद्यो गणधरः श्रीमानृद्धिप्राप्तो भविष्यति १२८
ततः परमनिर्वाणं यास्यसीत्यमरेश्वरः । श्रुत्वा ययौ परां तुष्टिं भावितेनांऽतरात्मना ॥ १२९ ॥
अयं तु लाक्ष्मणो भावः सर्वज्ञेन निवेदितः । अंभोदरथनामासौ भूत्वा चक्रधरात्मजः ॥१३०॥
चारून् कांश्चिद्भवान् भ्रांत्वा धर्मसंगतचेष्टितः । विदेहे पुष्करद्वीपे शतपत्राह्वये पुरे ॥ १३१ ॥
लक्ष्मणः स्वोचिते काले प्राप्य जन्माभिषेचनम् । चक्रपाणित्वमर्हत्त्वं लब्ध्वा निर्वाणमेष्यति १३२
संपूर्णैः सप्तभिश्चाब्दैरहमप्यपुनर्भवः । गमिष्यामि गता यत्र साधवो भरतादयः ॥ १३३ ॥
भविष्यद्भववृत्तान्तमवगम्य सुरोत्तमः । अपेतसंशयः श्रीमान्महाभावनयान्वितः ॥ १३४ ॥
परिणूय नमस्कृत्य पद्मनाभं पुनः पुनः । तस्मिन्नुद्यति चैत्यानि वंदितुं विहृतिं श्रितः ॥ १३५ ॥
जिननिर्वाणधामानि परं भक्तः समर्चयन् । तथा नंदीश्वरद्वीपे जिनेन्द्रार्चामहर्द्धिकः ॥ १३६ ॥
देवदेवं जिनं बिभ्रन्मानसेऽत्रावनारतम् । केवलित्वमिव प्राप्तः परमं शर्म धारयन् ॥ १३७ ॥

लूषितं कलुषं कर्म मन्यमानः सुसंमदः । सुवृत्तः स्वर्गमारोहत्सुरसंघसमावृतः ॥ १३८ ॥
स्वर्गे तेन तदा यातं भ्रातृस्नेहात्पुरातनात् । भामंडलचरो दृष्टः कुरौ संभाषितप्रियम् ॥ १३९ ॥
तत्रारुणाच्युते कल्पे सर्वकामगुणप्रदे । अमरीणां सहस्राणि रमयन्नीश्वरः स्थितः ॥ १४० ॥
दश सप्त च वर्षाणां सहस्राणि बलायुषः । चापानि षोडशोत्सेधः सानुजस्य प्रकीर्तितः ॥१४१॥
ईदृक्षमवधार्येदमन्तरं पुण्यपापयोः । पापं दूरं परित्यज्य वरं पुण्यमुपार्जितम् ॥ १४२ ॥

पश्यत बलेन विभुना जिनेन्द्रवरशासने धृतिं प्राप्तेन ।
जन्मजरामरणमहारिपवो बलिनः पराजिताः पद्येन ॥ १४३ ॥
स हि जन्मजरामरणव्युच्छेदान्नित्यपरमकैवल्यसुखम् ।
अतिशयदुर्लभमनघं संप्राप्तो जिनवरप्रसादादतुलम् ॥ १४४ ॥
मुनिदेवासुरवृषभैः स्तुतमहितनमस्कृतो निषूदितदोषः ।
प्रमदशतैरुपगीतो विद्याधरपुष्पवृष्टिभिर्दुर्लक्ष्यः ॥ १४५ ॥
आराध्य जैनसमयं परमविधानेन पंचविंशत्यब्दान् ।
प्राप त्रिभुवनशिखरं सिद्धिपदं सर्वजीवनिकायललामम् ॥ १४६ ॥

व्यपगतभवहेतुं तं योगधरं शुद्धभावहृदयधरं वीरम् ।
अनगारवरं भक्त्या प्रणमत रामं मनोऽभिरामं शिरसा ॥ १४७ ॥
विजिततरुणार्कतेजसमधरीकृतपूर्णचन्द्रमंडलं कान्तम् ।
सर्वोपमानभावव्यतिगमरूपातिरूढमूर्जितचरितम् ॥ १४८ ॥
पूर्वस्नेहेन तथा सीतादेवाधिपेन धर्मस्थतया ।
परमहितं परमर्द्धिप्राप्तं पद्मं यतिप्रधानं नमत ॥ १४९ ॥
योऽसौ बलदेवानामष्टमसंख्यो नितान्तशुद्धशरीरः ।
श्रीमाननन्तबलभृन्नियमशतसहस्रभूषितो गतविकृतिः ॥ १५० ॥
तमनेकशीलगुणशतसहस्रधरमतिशुद्धकीर्त्तिमुदारम् ।
ज्ञानप्रदीपममलं प्रणमत रामं त्रिलोकनिर्गतयशसम् ॥ १५१ ॥
निर्दग्धकर्मपटलं गंभीरगुणार्णवं विमुक्तक्षोभम् ।
मंदरमिव निष्कम्पं प्रणमत रामं यथोक्तचारित्रश्रमणम् ॥ १५२ ॥
विनिहत्य कषायरिपून् येन त्यक्तान्यशेषतो द्वन्द्वानि ।

त्रिभुवनपरमेश्वरतां यश्च प्राप्तो जिनेन्द्रशासनसक्तः ॥ १५३ ॥
निर्धूतकलुषरजसं सम्यग्दर्शनज्ञानचरित्रमयम् ।
तं प्रणमत भवमथनं श्रमणवरं सर्वदुःखसंक्षयसक्तम् ॥ १५४ ॥
चेष्टितमनघं चरितं करणं चारित्रमित्यमी यच्छब्दाः ।
पर्याया रामायणमित्युक्तं तेन चेष्टितं रामस्य ॥ १५५ ॥
बलदेवस्य सुचरितं दिव्यं यो भावितेन मनसा नित्यम् ।
विस्मयहर्षाविष्टस्वान्तः प्रतिदिनमपेतशंकितकरणः ॥ १५६ ॥
वाचयति शृणोति जनस्तस्यायुर्वृद्धिमीयते पुण्यं च ।
आकृष्टखड्गहस्तो रिपुरपि न करोति वैरमुपशममेति ॥ १५७ ॥
किं चान्यद्धर्मार्थी लभते धर्मं यशः परं यशसोऽर्थी ।
राज्यभ्रष्टो राज्यं प्राप्नोति न संशयोऽत्र कश्चित्कृत्यः ॥ १५८ ॥
इष्टसमायोगार्थी लभते तं क्षिप्रतो धनं धनार्थी ।
जायार्थी वरपत्नीं पुत्रार्थी गोत्रनंदनं प्रवरपुत्रम् ॥ १५९ ॥

अक्लिष्टकर्मविधिना लाभार्थी लाभमुत्तमं सुखजननम् ।
कुशली विदेशगमने स्वदेशगमनेऽथवापि सिद्धसमीहः ॥ १६० ॥
व्याधिरुपैति प्रशमं ग्रामनगरवासिनः सुरास्तुष्यन्ति ।
नक्षत्रैः सह कुटिला अपि भान्वाद्या ग्रहा भवंति प्रीताः ॥ १६१ ॥
दुश्चिंतितानि दुर्भावितानि दुष्कृतशतानि यान्ति प्रलयम् ।
यत्किंचिदपरमशिवं तत्सर्वं क्षयमुपैति पद्मकथाभिः ॥ १६२ ॥
यद्वा निहितं हृदये साधु तदाप्नोति रामकीर्त्तनासक्तः ।
इष्टं करोति भक्तिः सुदृढा सर्वज्ञभावगोचरनिरता ॥ १६३ ॥
भवशतसहस्रसंचितमसौ हि दुरितं तृणेढि जिनवरभक्त्या ।
व्यसनार्णवमुत्तीर्य प्राप्नोत्यर्हत्पदं सुभावः क्षिप्रम् ॥ १६४ ॥
एतत्तत्सुसमाहितं सुनिपुणं दिव्यं पवित्राक्षरं ।
नानाजन्मसहस्रसंचितघनक्लेशौघनिर्णाशनम् ॥
आख्यानैर्विविधैश्चितं सुपुरुषव्यापारसंकीर्त्तनं ।

भव्यांभोजपरप्रहर्षजननं संकीर्त्तितं भक्तितः ॥ १६५ ॥
निर्दिष्टं सकलैर्नतेन भुवनैः श्रीवर्द्धमानेन यत् ।
तत्त्वं वासवभूतिना निगदितं जंबोः प्रशिष्यस्य च ॥
शिष्येणोत्तरवाग्मिना प्रकटितं पद्मस्य वृत्तं मुनेः ।
श्रेयः साधुसमाधिवृद्धिकरणं सर्वोत्तमं मंगलम् ॥ १६६ ॥
ज्ञाताशेषकृतान्तसन्मुनिमनः सोपानपर्वावली ।
पारंपर्यसमाधितं सुवचनं सारार्थमत्यद्भुतम् ॥
आसीदिन्द्रगुरोर्दिवाकरयतिः शिष्योऽस्य चार्हन्मुनि-
स्तस्माल्लक्ष्मणसेनसन्मुनिरदःशिष्यो रविस्तु स्मृतम् ॥ १६७ ॥
सम्यग्दर्शनशुद्धिकारणगुरुश्रेयस्करं पुष्कलं ।
विस्पष्टं परमं पुराणममलं श्रीमत्प्रबोधिप्रदम् ॥
रामस्याद्भुतविक्रमस्य सुकृतो माहात्म्यसंकीर्त्तनं ।
श्रोतव्यं सततं विचक्षणजनैरात्मोपकारार्थिभिः ॥ १६८ ॥

हलचक्रभृतोर्द्विषोऽनयोश्च प्रथितं वृत्तमिदं समस्तलोके ।
कुशलं कलुषं च तत्र बुद्ध्या शिवमात्मीकुरुतेऽशिवं विहाय ॥ १६९ ॥
अपि नाम शिवं गुणानुबंधि व्यसनस्फीतिकरं शिवेतरम् ।
तद्विषयस्पृहया तदेति मैत्रीमशिवं तेन न शान्तये कदाचित् ॥ १७० ॥
यदि तावदसौ नभश्चरेन्द्रो व्यसनं प्राप परांगनाहिताशः ।
निधनं गतवाननंगरागः किमुतान्यो रतिरंगनासुभावः ( ? ) ॥ १७१ ॥
सततं सुखसेवितोऽप्यमौ य-दशवक्त्रो वरकामिनीसहस्रैः ।
अवितृप्तमतिर्विनाशमागादिनरस्तृप्तिमुपैष्यतीति मोहः ॥ १७२ ॥
स्वकलत्रसुखं हितं रहित्वा परकान्ताभिरतिं करोति पापः ।
व्यसनार्णवमत्युदारमेषः प्रविशत्येव विशुष्कदारुकल्पः ॥ १७३ ॥
व्रजत त्वरिता जना भवंतो बलदेवप्रमुखाः पदं गता यत्र ।
जिनशासनभक्तिरागरक्ताः सुदृढं प्राप्य यथा बलं सुवृत्तम् ॥ १७४ ॥
सुकृतस्य फलेन जंतुरुच्चैः पदमाप्नोति सुसंपदां निधानम् ।

दुरितस्य फलेन तत्तु दुःखं कुगतिस्थं समुपैत्ययं स्वभावः ॥ १७५ ॥
कुकृतं प्रथमं सुदीर्घरोषः परपीडाभिरतिर्वचश्च रूक्षम् ।
सुकृतं विनयः श्रुतं च शीलं सदयं वाक्यममत्सरः शमश्च ॥ १७६ ॥
न हि कश्चिदहो ददाति किंचिद्द्रविणारोग्यसुखादिकं जनानाम् ।
अपि नाम यदा सुरा ददन्ते बहवः किन्तु विदुःखितास्तदेते ॥ १७७ ॥
बहुधा गदितेन किन्त्वनेन पदमेकं सुबुधा निबुध्य यत्नात् ।
बहुभेदविपाककर्मसूक्तं तदुपायाप्तिविधौ सदा रमध्वम् ॥ १७८ ॥
उपायाः परमार्थस्य कथितास्तत्त्वतो बुधाः ।
सेव्यतां शक्तितो येन निष्क्रामत भवार्णवात् ॥ १७९ ॥
इति जीवविशुद्धिदानदक्षं परितः शास्त्रमिदं नितान्तरम्यम् ।
सकले भुवने रविप्रकाशं स्थितमुद्योतितसर्ववस्तुसिद्धम् ॥ १८० ॥
द्विशताभ्यधिके समासहस्रे समतीतेर्द्धचतुर्थवर्षयुक्ते ।
जिनभास्करवर्द्धमानसिद्धे चरितं पद्ममुनेरिदं निबद्धम् ॥ १८१ ॥

कुर्वन्त्वथात्र सांनिध्यं सर्वाः समदेवताः । कुर्वाणाः सकलं लोकं जिनभक्तिपरायणम् ॥ १८२ ॥
कुर्वते वचने रक्षां समये सर्ववस्तुषु । सर्वादरसमायुक्ता भव्या लोकसुवत्सलाः ॥ १८३ ॥
व्यंजनान्तं स्वरान्तं वा किंचिन्नामेह कीर्तितम् । अर्थस्य वाचकः शब्दः शब्दो वाक्यमिति स्थितम् ॥
लक्षणालंकृती वाच्यं प्रमाणं छंद आगमः । सर्वं चामलचित्तेन ज्ञेयमत्र सुखागतम् ॥ १८५ ॥
इदमष्टादश प्रोक्तं सहस्राणि प्रमाणतः । शास्त्रमानुष्टुपश्लोकैस्त्रयोविंशतिसंगतम् ॥ १८६ ॥

इत्यार्षे श्रीरविषेणाचार्यप्रोक्ते श्रीपद्मपुराणे बलदेवसिद्धिगमनाभिधानं
नाम त्रयोविंशोत्तरशतं पर्व ॥ १२३ ॥

॥ समाप्तोऽयं ग्रन्थः ॥

